# संस्कृत-शिक्षा-विवृतिः

पण्डितकन्हैयालालशास्त्रिकृता ।

# SANSKRITA-SIKSHA-VIVRITI.

A COMPLETE KEY

## TO THE SASKRIT SIKSHA

ENTRANCE COURSE,

ALLAHABAD UNIVERSITY.

BY

PANDIT KANHAIYA LAL SASTRI.

*Late Sanskrit scholar, Benares college,*
*Examiner, Calcutta University.* &c.




3rd EDITION.

Published by
*B. P. Capoor*
Manager, School-book-Depot.
Allahabad.

1892.



Price Rs. 2/. Postage As-3.

# संस्कृतशिक्षाविवृतिः ।

—०००—

## हितोपदेशः ।

१ पृष्ठा । हितोपदेशः—हितानां पथ्यवचसां (हिधातोः भावे क्तः) उपदेशः (षष्ठीतत्पुरुषः) शिक्षार्थकथनं (उप दिशधातोः भावे घञ् प्रातिपदिकार्थे प्रथमा) ।

हितोपदेशो नाम अविनीतानां राजपुत्राणां नीतिशिक्षार्थं विष्णुशर्म्मणा प्रणीत इति प्रसिद्धिः । सन्ति च अत्र मित्रलाभः सुहृद्भेदः विग्रहः सन्धिरिति चत्वारि प्रकरणानि । मित्रलाभे वायसमूषिकयोः सुहृत्प्राप्तिः । सुहृद्भेदे सिंहबलीवर्दयोः मित्रयोर्भेदः । विग्रहे चक्रवाकमयूरयो र्युद्धं, सन्धौ च तेषामेव मिलनं । इह हि पञ्चतन्त्रात् ग्रन्थान्तराच्च बालकानां नीतिः कथाच्छलेन विष्णुशर्म्मणा कथिता । संस्कृतशिक्षायां मित्रलाभान्तर्गतकपोतमित्रोपाख्यानमेव संगृहीतम् ।

मित्रलाभवृत्तान्तः । एकदा लघुपतनकनामा काकः अटन् कञ्चित् व्याधमपश्यत्, तमवलोक्य व्याकुलहृदयस्तदनुसरणक्रमेण चलितः, स च व्याधः तण्डुलकणान् विकीर्य्य जालं विस्तीर्य्य च प्रच्छन्नोभूत्वा स्थितः । अस्मिन्नेव काले चित्रग्रीवनामा कपोतराजः सपरिवारस्तान् तण्डुलकणान् अवलोकयामास । ततः सर्व्वे तण्डुलकणलोभेन नभोमण्डलादवतीर्य्य जालनिबद्धाः बभूवुः । अथ ते बहु विचार्य्य जालमादाय उत्पतिताः, व्याधेनापि पश्चात् धावितं, तेषु पक्षिषु चक्षुर्विषयमतिक्रान्तेषु स व्याधः निवृत्तः । ते च सर्व्वे गण्डकीतीरे चित्रवने तेषां मित्रस्य हिरण्यकनाम्नो

मूषिकराजस्य विवरसमीपं गताः । हिरण्यकेनापि तेषां बन्धनानि छिन्नानि तत आतिथ्यं कृत्वा आलिङ्ग्य च सम्मानितः चित्रग्रीवः सपरिवारः यथेष्टदेशान् ययौ । स च लघुपतनकनामा वायसः सर्व्ववृत्तान्तदर्शी हिरण्यकेन सह मित्रतामिच्छन् आगतस्तमाह, अहो हिरण्यक श्लाघ्योऽसि, अतोऽहमपि त्वया सह मैत्रीमिच्छामि, हिरण्यकः वायसं मैत्रीमिच्छन्तं ज्ञात्वा विहस्य प्रोवाच, भोः का त्वया सह मैत्री ! यतः भक्ष्यभक्षकयोरित्यादिना कपटिमित्रोपाख्यानं वक्तु मारभते ।

कपटिमित्रम्—कपटः शाठ्यं अस्य अस्तीति (कपटशब्दात् इन्) तच्च तत् मित्रञ्चेति (कर्म्मधारयः) धूर्त्तसुहृत् (प्रातिपदिकार्थे प्रथमा) ।

भक्ष्यभक्षकयोरिति ।—भक्ष्यभक्षकयोः—भक्ष्यश्च भक्षते असौ (भक्ष+कर्म्मणि यत्) भक्षकश्च भक्षयति यः सः (भक्ष+कर्त्तरि णक) तौ (द्वन्द्व) तयोः खाद्यखादकयोः (कर्त्तरि ६ष्ठी २व) प्रीतिः प्रणयः (प्री-धा भावे-क्तिः भवतीति अध्याहृतक्रियापदस्य कर्त्तरि १मा) विपत्तेः=विपदः (वि-पद्-धा+भावे-क्ति, सम्ब ६ष्ठी १व) महत् कारणं=हेतुः (कृ+भावे-ल्युट्) प्रीति रित्यस्य विधेयविशेषणं) शृगालात्=शृगालं आश्रित्य (ल्यब्लोपे ५मी) पाशबद्धः=पाशेन जालेन (३तत्) बद्धः (बन्ध, धा+कर्म्मणि क्त, मृगस्य विण) असौ=वक्ष्यमाणः (अदस्, श+१मा, १व, सर्व्व, विण)

---

खानेवाले और खाने की चीज इन दोनोंका प्रेम आपदा का बड़ा भारी कारण हैं, किसी हरिण को एक शृगाल ने फंदे में फंसाया था और एक काक ने उसे बचाया था ।

मगधदेश में चम्पकवती नाम एक बड़ा भारी जंगल है । वहां एक

Friendship between the consumer and consumable is a great cause of calamity as a fawn was insnared by the artifice of a Jackal and was only saved by a crow.

"In the country of Magdha there is a large forest named

मृगः = हरिणः (कर्म, १मा, १व) काकेन=(कर्त्तरि ३या, १व) रक्षितः= परित्रातः (रक्ष धा+कर्म्मणि क्तः) [ वाच्यान्तरं—प्रीत्या काकेन भूयते यावत्तं चमुं मृगं शृगालः रक्षितवान् ] ।

पृ० १—अस्ति—युक्ता । मगधदेशे=विहार इति अधुना प्रसिद्धे प्रदेशे (अधि ७मी १व) चम्पकवती=चम्पकाः चम्पकवृक्षाः विद्यन्ते अस्यां (चम्पक,अ+वतुप् विण) नाम (अव्य) अरण्यानी=महारण्यं (महा-रण्यमरण्यानीत्यमरः) (हिमारण्ययोर्महत्वे इति स्त्रियां आनिप, कर्त्ता १मा १व) अस्ति=विद्यते (अस्-धा लट्, १पु १व क्रिया) (वाच्यान्तरं—चम्पक-वत्या अरण्यान्या भूयते)। तस्यां=अरण्यान्यां (सर्व्व-तद् अ+७मी१व अधि ७मी) मृगकाकौ=मृगश्च काकश्च (द्वन्द्व) तौ हरिणवायसौ (कर्त्ता १मा २व) महता=अतिशयितेन (स्नेहेनेत्यस्य विण) स्नेहेन=प्रणयेन (प्रकृत्यादिभ्यश्चेति ३या १व) चिरात्—बहुकालं व्याप्य (अव्यय) निवसतः तिष्ठतः ( नि-वस्-धा+लट् १पु २व क्रिया) [ वाच्यान्तरं—मृगवायसाभ्यां उष्यते ] सः=पूर्व्वोक्तः (सर्व्व कर्त्ता विण) च (अव्य) मृगः=हरिणः (कर्म १मा १व) स्वेच्छया=स्वस्य (षष्ठीवत्) इच्छा तया यदृच्छया (प्रकृत्यादि-भ्यश्चेति ३या १व) भ्राम्यन्=विचरन् (भ्रम-धा+शतृ १मा १व) हृष्ट-पुष्टाङ्गः=हृष्टं कण्टकितरोमावृतं पुष्टं मांसलं च अङ्गं यस्य (बहुव्री) स्वाच्छन्द्य-युक्तस्य लक्षणः (कर्म विण) केनचित्=(किम् ३या १व+चित् विण, अव्य)

---

हरिण और काक बहुत दिनों से बड़े स्नेह से रहते थे। वह मृग अपनी इच्छा से घूम,फिर और चर के मोटा ताजा हुआ, और उसे किसी शृगाल ने देखा। उसे देख उसने सोचा कि, अरे कैसे इसके कोमल

Champakavati, in which an antelope and a crow had long dwelt in great friendship. A Jackal observing this fat antelope while roaming at will, said within himself'—'Ah ! by what means can I feast on its delicate flesh. Well, let me try to

शृगालेन (कर्त्ता ३या १व) अवलोकितः दृष्टः (अव-लोकि, धा+कर्म्मणि क्त १मा १व क्रिया) तं [वाच्यान्तरम्—तं मृगं आत्मनं हृष्टपुष्टाङ्गं कश्चित् शृगालः अवलोकितवान्]। असौ=शृगालः (कर्त्ता १मा १व)। तं मृगं (कर्म्म २या १व) आलोक्य=दृष्ट्वा (आ-लोकि+ल्यप १म पु १व क्रिया) [अमुना अचिन्त्यत]। आः (सदुःखं सविसर्गस्तु आ इति यो निपातः स पीड़ायां कोपे च वर्त्तते) कथं केन प्रकारेण एतत्=(कर्म्म विश) सुललितं=अति-मनोहरं (सु-लल-धा+क्त २या १व कर्म्मविश) मांसं=(कर्म्म) भक्षयामि (भक्षि+लट १पु १व) [वाच्यान्तरं—भक्ष्यते]। भवतु=अस्तु एवं, (क्रिया तावत्=अग्रे (अव्य) विश्वासं प्रत्ययं (कर्म्म) उत्पादयामि=जनयामि (उ-पद+णिच्=आदि+लट् १पु १व क्रिया) [वाच्यान्तरं—भूयतां, विश्वासः-उत्पाद्यते] इति=एवं (अव्य) आलोच्य=विचार्य्य (आ-लोचि+ल्यप), उपसृत्य=मृगसन्निधानं उपगम्य (उप-सृ+ल्यप्, अव्य) अब्रवीत् अवोचत् (ब्रू-धा लङ १पु १व क्रिया) [वाच्यान्तरं औच्यत], मित्र=(सम्बो) ते तव (सम्ब) कुशलं=मङ्गलं (प्रातिपदिकार्थे १मा) मृगेण=कर्त्ता ३या) उक्तं=कथितं (वच-धा-क्त क्रिया) वाच्यान्तरं—मृगः उक्तवान्, त्वं कः। जम्बुकः=शृगालः (कर्त्ता) ब्रूते=कथयति (ब्रू-धा+लट् क्रिया, वाच्यान्तरं—तेन उच्यते) क्षुद्रबुद्धिनामा=क्षुद्रा बुद्धिः यस्य (बहुव्री) स नाम यस्य (बहुव्री) सः (विश) जम्बुकः=शृगालः अहं (प्रातिपदिकार्थे

---

मांसको खाऊं। जो हो, पहिले इसका विश्वास उत्पन्न करूं, यह सोच उसके पास आ उसने कहा कि, मित्र आप का कुशल है? हरिण ने कहा, तू कौन है? शृगाल ने कहा है, कि मैं क्षुद्रबुद्धि (थोड़ीबुद्ध

gain his confidence. Thus meditating and approaching him he said :—'Friend, does all fare well with you?' Who are you? said the antelope 'I am a Jackal, named Kshudrabuddhi or Little-sense,' said he, 'and here in this forest live friendless,

१मा)। अत्र अस्मिन् (इदम्-श+त्रल् अव्य अधि विण) अरण्ये=वने (अधि) बध्नाति स्नेहेनेति बन्धुः तेन हीनः (३तत्) मित्रशून्यः (कर्त्ता विण हा धा+क्त) मृतवत्=मृतेन तुल्यः (तुल्यार्थे वति अव्य) निवसामि तिष्ठामि (नि-वस+लट् ३म पु १व क्रिया) [वाच्यान्तरं—बन्धुहीनेन न्युष्यते] इदानीं=अधुना (अव्य) च=(अव्य) त्वां (कर्म्म युष्मद्-श २या १व, मित्रं बन्धुं (कर्म्म-विण २या १व, नित्य नपुं) आसाद्य=प्राप्य (आ-सादि+ल्यप, अव्य) पुनः=(अव्य) सबन्धुः=बन्धुना सह वर्त्तमानः (बहुव्री, कर्त्ता विण) मित्रसहितः जीवलोकं=(कर्म्म, प्रविष्टोऽस्मि=आत्मानं जीवितं मन्ये इत्यर्थः (प्र-वि+क्त अस+लट्, ३पु १व क्रिया) [वाच्यान्तरं—प्रविष्टेन भूयते]। अधुना इदानीं (अव्य) मया (कर्त्ता अस्मद श ३या १व) सर्व्वदा सर्व्वस्मिन्नेव समये (सर्व्व श+दा अव्य) तव अनुचरेण=अनुचरति यः सः=सहचारिणा (अनुचर+अन ३या १व विण) भवितव्यं सर्व्वदैव ते सहचरी भविष्यामीत्यर्थः [वाच्यान्तरं—अनुचरः भविष्यामि]। मृगेण=हरिणेन (कर्त्ता ३या १व) उक्तं=कथितं (वच-धा+भावे-क्त १मा १व क्रिया) एवं=इत्थं (अव्य, कर्त्ता) अस्तु=भवतु (अस धा+लोट १पु १व क्रिया) [वाच्यान्तरं—मृगः कथितवान्, एवं भूयतां]। ततः= तदनन्तरं (तद+५मी+तस् अव्य) तौ=मृगशृगालौ कर्त्ता (१मा २व) भगवति पूज्ये षडैश्वर्य्यशालिनि (ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इति स्मृतः।) अथवा माहात्म्यवति, (भग

---

नाम शृगालः हूं, इस जंगल में बे-मित्रका मुआ सा रहता हूं, अब तुम को मित्र पाके फिर सबन्धु हो जीवलोक में मैंने प्रवेश किया। अब मैं सदा तुम्हारे साथ रहूंगा। हरिण ने कहा, अच्छा ऐसा ही हो।

as a lifeless corpse; but now having you for my friend, I shall enter into living world. Now I shall in every respect be your companion. 'Well,' said the antelope, 'be it so'. Now when

श्रीकाममाहात्म्यवीर्य्य यत्नार्कंकीर्त्तिषु इत्यमरः ) भगः षडैश्वर्य्य माहात्म्यं वा विद्यते अस्य तस्मिन् (भग-वतुप, ७मी १व अधि-विष) मरीचि-मालिनि मरीचीनां (६ष्ठी तत्) माला विद्यते अस्य तस्मिन् किरणमालिनि (मरीचिमाला+इन्, ७मी १व, अधि विष) सवितरि=सूर्य्ये (सु-धा+तृच, भावे ७मी १व गते इत्यस्य कर्त्तृपदं) अस्तं गते=अस्तमिते (गम-धा-कर्त्तरि-क्त, ७मी १व सूर्य्ये इत्यस्य विष) मृगस्य (सम्ब ६ष्ठी १व) वास-भूमिं=वासस्य भूमिः तां वासस्थानं (६ष्ठी तत्, कर्म्म) गतौ यातौ (गम-धा+कर्त्तरि=क्त १मा २व क्रिया) [वाच्यान्तरं—ताभ्यां वासभूमिः गता ]। तत्र—वासभूमौ ७मी (तत्र अव्य अधि) चम्पकवृक्षशाखायां चम्पकवृक्षस्य शाखा तस्यां (६ष्ठी तत् अधि ७मी १व) मृगस्य (सम्ब षष्ठी) चिरमित्रं चिरसुहृत् (कर्त्ता-विष नित्यपुंसकं) सुबुद्धिनामा=सु सुष्ठु बुद्धिः यस्य स नाम यस्य सः (बहुव्री, कर्त्ता विष) काकः (कर्त्ता १मा १व ) निव-सति= तिष्ठति ( नि+वस-धा+लट् १म १व क्रिया) [वाच्यान्तरं—चिर-सुहृदा सुबुद्धिनाम्ना काकेन न्युष्यते ]। सः काकः (कर्त्ता सर्व्वं तद=अ १मा १व) अब्रवीत्=अवदत् (ब्रू-धा+लङ् १पु १व क्रिया) [वाच्यान्तरं—तेन काकेन अोच्यत ]। सखे=बन्धो (सम्बो) द्वितीयः=अपरः (द्वि-अ+तीय) अयं कः,) प्रातिपदिकार्थे १मा)।

२पृष्ठा) मृगः=( कर्त्ता ) ब्रूते=वदति ब्रू-धा-लट् १पु १व क्रिया) [ मृगेण उच्यते ]। अयं (इदम् अ+१मा १व सर्व्वं कर्त्ता विष)

---

पीछे भगवान् सूर्य्यदेवके अस्त जाने पर दोनों हरिण के वासस्थान को गए। वहां चम्पा की शाख पर हरिण का मित्र सुबुद्धि नाम काक रहता था। उस काकने कहा, कि, हे मित्र यह। दूसरा कौन हैं।

the many rayed and glorious sun went down the horizon, they both sought the retreat of the antelope. There on the branches of a champaka tree, dwelt a crow named Subuddhi, an old friend of the antelope. The bird observing them addressed the

जम्बुकः शृगालः कर्त्ता अस्मत् सख्यं=सख्युः भावः सख्यं वन्धुता (सखि शब्द+ष्यण्) अस्माकं सख्यं (षष्ठी तत्, कर्म्म) इच्छन्= अभिलषन् (इष-धा+शतृ १म १व) आगतः=उपस्थितः (आ-गम-धा=कर्त्तरि-क्त १मा १व) अनेन जम्बुकेन इच्छता आगतं। तत्= वाक्यं (कर्म्म तद्-श २या १व) श्रुत्वा (श्रु-धा=त्वा अव्य) काकेन= (कर्त्तरि ३या) उक्तं=कथितं [वाच्यान्तरं—काकः कथितवान्] सखे बन्धो (सम्बो) अकस्मात्=झटिति (अव्य) आगन्तुना=नवागतेन अपरिचितेन इति यावत् (आ-गम+तुन सहयोगे ३या) सुहृ=(अव्य) मैत्री= वन्धुत्वं (कर्त्ता) न (निषेधे अव्ययं) युक्ता नोचिता (युज्-धा+कर्त्तरि क्त क्रिया) [वाच्यान्तरं—मैत्र्या न युक्तं]।

तथाच (अव्य) उक्तं=कथितं (वच-धा+भावे=क्त क्रिया) शास्त्रकारैरिति शेषः।

अन्वयः—अज्ञातकुलशीलस्य कस्यचित् वासः न देयः। मार्जारस्य दोषेण वृद्धः जरद्गवः हतः।

व्याख्या। अज्ञातकुलशीलस्य=कुलं च शीलं च कुलशीले, (द्वन्द्व) अज्ञाते (न-ज्ञा-धा+क्त) अविदिते कुलशीले यस्य सः तस्य (बहुव्री, सम्ब-विधा) अविदितवंशचरितस्य कस्यचित्=जनस्य (किम्-श+६ष्ठी+चित् अव्य, सम्बन्धविवक्षायां ६ष्ठी) वासः आश्रयः (वस धा+अधि=घञ, कर्म्म १मा १व) न देयः न दातव्यः (दा-धा+कर्म्मणि यत्) वृद्ध-

---

हरिण बोला, यह शृगाल हमारी मित्रता चाह के यहां आया है। यह सुन काकने कहा, अनजान के साथ इतनी जल्दी मित्रता करनी उचित नहीं है।

antelope, and said,—'Friend, who is this second individual? 'He is a Jackal,' said the antelope, 'and has come here with

ज्ञेनेति शेषः । यो हि वंशतः चरिततो वा न परिज्ञातः तस्मै आश्रयदानं न कर्त्तव्यं, "यस्य न ज्ञायते कुलं न शीलं न च संश्रयः । न तेन संगतिं कुर्य्यादिति भावः । एतदेव उदाहरणेन द्रढ़यति । हि=तथाहि (अव्य) मार्ज्जारस्य बिड़ालस्य वक्ष्यमाणस्य दीर्घकर्णस्य, ( ओतुः बिड़ालो मार्ज्जार इत्यमरः ) ( दोषेण इत्यस्य कर्त्ता ६ष्ठी ) दोषेण=पक्षिशावकविनाशरूपेण अपराधेन ( दुष्-धा+भावे-अल ) जरद्गवः=जरती ( जॄ-धा+शतृ ) गौः दृष्टिः यस्य सः (बहुव्री विण) गौः स्वर्गे बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च इति मेदिनी) तन्नामा गृध्रः= (गृध+र) गीध् इति ख्यातः पक्षिभेदः (कर्म १मा १व) हतः=विनाशितः (हन्-धा+कर्म्मणि क्त क्रिया) पक्षिभिरिति शेषः, परापराधेन परस्य दण्ड इति भावः । [ वाच्यान्तरं वासं न दद्यात्, यतः जरद्गवं हतवन्तः ] ।

**तावाहतुः—कथयति ।** तौ=मृगशृगालौ ( कर्त्ता तद-श १मा २व) आहतुः=कथयतः (ब्रू-धा+लट् १पु २व, क्रिया ) ; एतत्= उपाख्यानं (प्रातिपदिकार्थे १मा) कथं किंप्रकारं (अव्य) ; काकः (कर्त्ता) कथयति=ब्रूते (क्रिया) (वाच्यान्तरं—ताभ्यां उच्यते, काकेन कथ्यते] ।

**अस्ति—जीवति ।** भागीरथीतीरे=भगीरथेन आनीता भागीरथी (भगिरथ-अ+ण स्त्रियामीप् ) गङ्गा तस्याः तीरं तटं तस्मिन् ( अधि ७मी ) गृध्रकूटनाम्नि=गृध्रकूटः गृध्रः कूटे यस्य स नाम यस्य ( बहुव्री ) स तस्मिन् ( अधि विण ) पर्व्वते=शैले (अधि) महान् विशालः (कर्त्ता विण,

---

(पक्षितोंने) ऐसा कहा—ऐसे किसी (मनुष्य) को वासस्थान देना नहीं चाहिए, जिसका कुल और सुभाव जाना हुआ न हो । बिड़ाल के अपराध से एक, जरद्गव (अंधा) गृध्र मारा गया था ।

the desire of being our friend. ' 'Oh !' said the crow, 'it is not right to make friendship with a stranger so hastily.

१मा १व ) पर्कटीवृक्षः (कर्ता) अस्ति=वर्त्तते [वाच्यान्तरं—पर्कटीवृक्षेण भूयते]। तस्य=वृक्षस्य ( सम्ब ) कोटरे=गह्वरे (अधि) दैवदुर्व्विपाकात्=देव एव दैवं (देव अ+स्वार्थे अण् ) तस्य दुर्व्विपाकः परिणामः ( ६तत् ) तस्मात् दुर्दैववशादित्यर्थः (हेतौ ५मी) गलितनख·नयनः — नखानि च नयने च ( नी-धा+करणे ल्युट् ) ( द्वन्द्व ) नखनयने गलिते नखनयने यस्य ( वहुव्री) सः अपगतनखः दृष्टिहीनश्चेत्यर्थः ( कर्त्ता विण ) जरद्गवः ( विण (नाम ( अव्य ) गृध्रः ( कर्त्ता ) प्रतिवसति=तिष्ठति (प्रति-वस्-धा+लट् १पु १व, क्रिया ) [ वाच्यान्तरं—गलितनखनयनेन जरद्गवेन प्रत्युष्यते ] तज्जीवनाय=तस्य जीवनं (६ष्ठीतत्) तस्मै तज्जीवनं रचितुं ( क्रियार्थोपपदस्येत्यादिना कर्म्मणि ४र्थी जीव धा+भावे-ल्युट) तद्वृक्षवासिनः= सः वृक्षः (कर्म्मधारय) तस्मिन् वसन्ति (उपपद) ये ते तद्वृक्षस्थिताः इत्यर्थः:(कर्त्ता विण १मा ३व) (वस-धा+णिन) पक्षिणः=पक्षा विद्यन्ते येषां (पक्ष-अ+इन् ) विहङ्गमाः (कर्त्ता १मा ३व ) स्वाहारात्=स्वेषां आहारः ( ६तत्, आ-हृ+भावे घञ ) तस्मात् निजनिजस्वाद्यात् ( अपा ५मी ) किञ्चित् किञ्चित्=यत्किञ्चित् (किम चित् कर्म्म) ददति=यच्छन्ति (दा-धा+लट् १पु ३व क्रिया ) । तेन=भक्षितेनेत्यर्थः ( करण सर्व्व-तद्-अ+३या ) असौ=जरद्गवः ( कर्त्ता ) जीवति=प्राणिति ( जीव-धा लट् क्रिया ) [ वाच्यान्तरं—तद्वृक्षवासिभिः पक्षिभिः दीयते, अमुना जीव्यते ]।

---

उन दोनोंने कहा कि, यह कैसे हुआ, काक कहता है कि—

भागीरथी के किनारे पर गृध्रकूट ( जिस की चोटीपर गृध्र रहते थे ) नाम पर्व्वत पर एक बड़ा पाकड़ का पेड़ है। उस के कोठर में

It is said, —'to a person of unknown lineage and character, no one should give any shelter, because, for the fault of a cat the vulture Jaradgava lost his life,' Both enquired, how was it? The crow went on :—

अथ—श्रूयोऽस्मि । अथ=अनन्तरं (अव्य) कदाचित्=एकदा ( किम्-अ+दा+चित् अव्य) दीर्घकर्णः=दीर्घौ कर्णौ यस्य ( बहुव्री) सः ( कर्त्ता) विशे) नाम (अव्य) मार्ज्जारः=बिड़ालः (कर्त्ता) पक्षिशावकान्= पक्षिणां शावकाः (शव्-धा+घञ्, स्वल्पार्थे कः,६तत्) तान् पक्षिशिशून् भक्षयितुं=खादितुं ( भक्ष-धा+तुमुन् ) आगतः = आजगाम ( आ-गम-धा+ कर्त्तरि-क्त क्रिया) [ वाच्यान्तरं—दीर्घकर्णेन मार्ज्जारेण आगतं ] । ततः= तदनन्तरं(तद्-अ+५मी+तस्, अव्य अनन्तरार्थे ५मी) तं मार्ज्जारं (कर्म्म ) आयान्तं आगच्छन्तं (आ-या धा+शतृ २या १व ) दृष्ट्वा=अवलोक्य (दृश- धा+क्त्वा अव्य ) पक्षिशावकैः=पक्षिशिशुभिः ( कर्त्ता ३या ) भयाकुलैः= भयेन ( भी-धा+अच् ) आकुलाः ( ३तत् ) तैः भयत्रस्तैः ( कर्त्तृ विशे ) महान्=अत्युच्चैः (कर्म्म विश, १मा १व ) कोलाहलः=(कुल धा+घञ= कोलः, तं आहलतीति कोल-आ-हल-धा+अच् ) कलरवः ( कर्म्म १मा १व ) कृतः ( कृ-धा+कर्म्मणि क्तः क्रिया ) । [ वाच्यान्तरं—पक्षिशावकाः भयाकुलाः महान्तं कोलाहलं कृतवन्तः ] तत् ( कर्म्म ) श्रुत्वा=आकर्ण्य (श्रु धा-क्त्वा अव्य) जरद्गवेन=गृध्रेण (कर्त्ता ३या) उक्तं कथितं (वच धा- भावे क्तः) । अयं कः (कर्त्ता) आयाति=आगच्छति । (आ-या धा+ लट् क्रिया) [ वाच्यान्तरं—जरद्गवः उक्तवान् । केन अनेन आयायते ] दीर्घकर्णः=मार्ज्जारः (कर्त्ता) गृध्रं=शकुनिं जरद्गवं (कर्म्म) अवलोक्य= दृष्ट्वा सभयं—भयेन सह वर्त्तमानं यथा तथा सत्रासं (क्रिया विश २या)

एक जरद्गव (अंधा) नाम गृध्र रहता था, दैव घटना से उस के नख और आंख जाती रही थीं । उस के प्राण धारण के लिए उस पेड़ पर रहनेवाली चिड़ियां अपने खाने से कोई कुछ दिया करती थीं । उसी से वह जीता था ।

There stand on a mountain, called Gridhrakuta or Vulture-top, near the Bhagirathi, a large Parkati tree, in the

आह=ब्रवीति (ब्रू-धा+लट् १पु १व) हा=(खेदे अव्य) हतः=मृतः (हन-धा+क्तः) अस्मि (अस-धा+लट् १पु १व) (अथवा अस्मदर्थाचि अव्ययं) ; जरद्गवः ममाभिप्रायं विदित्वा हन्यादेव इति भावः। [वाच्यान्तरं—दीर्घकर्णेन उच्यते, हतेन भूयते ]। अथवा किम्वा (अव्य)।—

**यावदितिअन्वयः** ।—यावत् भयं अनागतं, तावत् भयस्य भेतव्यम्, भयं तु आगतं वीक्ष्य यथोचितं प्रतिकुर्य्यात् ।

व्याख्या। यावत्=यत् कालपर्य्यन्तं भयं=बिभेति अस्मात् (भी-धा+अल्=कर्त्ता १मा १व) भयकारणं अनागतं=अनुपस्थितं (न+आ-गम+ कर्त्तरि-क्त), तावत्=तत्कालपर्य्यन्तं (यावत् तावत् इति च कालावधारणे अव्ययम् द्वितीया) भयस्य=भयात् (सम्बन्ध विवक्षयां षष्ठी) भेतव्यं=शङ्कितव्यं (भी-धा+भावे-तव्य) जनैरिति शेषः, तु=किन्तु (कर्म्म) आगतं=उपस्थितं (कर्म्म विण) वीक्ष्य=विलोक्य (वि-ईक्ष-धा+ल्यप् अव्य) यथोचितं=उचितं=अनतिक्रम्य (अव्ययी) यथायोग्यं (क्रिया विण) प्रतिकुर्य्यात=प्रतिविदध्यात् (प्रति-कृ-धा+विधि-१पु १व) यावद् भयहेतु नायाति तावत् लोकः पलायितुं क्षमः उपस्थिते तु भयकारणे तत्प्रतिकाराय यतेत इत्यर्थः। [वाच्यान्तरं—भयेन अनागतं ; प्रतिक्रियेत ]।

---

इस के पीछे किसी समय दीर्घकर्ण (जिस के कान लम्बे हैं) नाम कोई बिड़ाल चिड़ियों के बच्चोंके खाने के लिए आया तब उसे आते हुए देख चिड़ियों के बच्चे उसी आकुल हो बहुत चिल्ला उठे। यह सुन जरद्गवने कहा, यह कौन आता है ? दीर्घकर्ण गृध्र को देख डर से बोला कि, हा मैं मरा गया।

hollow of which lived a vulture named Jaradgava. The birds that lived on that tree, out of kindness, were used to give him

अधुना—इदानीम् । अधुना=इदानीं (अव्य कालाधि) अस्य=जरद्गवस्य (सम्ब) सन्निधाने=समीपे (स-नि धा-धा+ल्युट् अधि) पलायितुं=दूरं अपसर्तुं (परा-अय-धा+तुमुन्, अव्य) अक्षमः=असमर्थः, अहमिति शेषः। तत्=तस्मात् (हेतौ ५मी अव्य) तावत् प्रथममेव (अव्य) विश्वासं=प्रत्ययं (वि-श्वस्-धा+भावे-घञ्, कर्म्म) उत्पाद्य=जनयित्वा (उत्-पद-धा+णिच्+ल्यप, अव्य) अस्य=जरद्गवस्य समीपं=निकटं (कर्म्म) उपगच्छामि=उपसर्पामि (उप गम+लट् ३पु १व); [वाच्यान्तरं—उपगम्यते मया]। इति=एवं (कर्म्म-अव्य) आलोच्य विचिन्त्य (आ-लोचि+ल्यप् अव्य) उपसृत्य=उपगम्य (उप=सृ धा—ल्यप, अव्य) अब्रवीत्=अवदत् (ब्रू धा+लङ १म १व) [वाच्यान्तरं—अौच्यत]। आर्य्यं=मान्य (सम्बो ऋ धा+ण्यत्, कर्त्तव्यमाचरन् काम-मकर्त्तव्यमनाचरन्। तिष्ठति प्रकृताचारे स वा आर्य्य इति स्मृतः)। त्वां=(कर्म्म, युष्मद-अ+२या १व) अभिवन्दामि=प्रणमामि, (अभि-वन्द धा+लट् ३पु १व)। गृध्रः=जरद्गवः (कर्त्ता) ब्रूते=आह, (क्रिया) त्वं (प्रातिपदिकार्थे १मा) कः (विध) सः=मार्जारः (कर्त्ता) अब्रवीत्=अवदत्। अहं=(प्रातिपदिकार्थे १मा) मार्ज्जारः=विड़ालः (विधेय विध) [वाच्यान्तरं—त्वं अभिवन्द्यसे। गृध्रेण उच्यते। तेन अौच्यत]

---

अथवा—जबतक डर न आया हो, तबतक डर से डरना चाहिए। जब डर आ पहुंचे तब जैसा बन पड़े, उसका प्रतिकार करना चाहिए।

अब इस के पास में भाग नहीं सक्ता। इस लिए पहिले इसका विश्वास उत्पन्न कर के इस के पास जाऊं। यह विचार करके पास

a portion of their own food, for his subsistence, and thereby the life of that vulture was preserved. It happened that a cat named Dirgha-karna or Long-ear came thither to devour the

गृध्रः ब्रूते = जरद्गवः आह, तत् = तस्मात् ( हेतौ ५मी अव्य ) अपसर = दूरं गच्छ ( अप-सृ-धा+लोट् २पु १व ) नो-चेत् = इतरथा यदि न अपसरसि इत्यर्थः ( अव्य ) मया = ( कर्त्ता, अस्मद्-श+३या १व ) हन्तव्यः = वध्यः ( हन-धा कर्म्मणि-तव्यत् ) असि भवसि, ( अस-धा+लट् २पु १व, अथवा युष्मद् वाचि अव्ययं ) [वाच्यान्तरं—अपसियतां, हन्तव्ये न भूयते]। मार्ज्जारः = विड़ालः (कर्त्ता) अवदत् = अब्रवीत्, श्रूयतां = आकर्ण्यतां (श्रु-धा+कर्म्मणि लोट् १पु १व ) मम ( कर्त्तरि ६ष्ठी ) वचनं = वाक्यं ( कर्म्म २या १व )। ततः अवधानान्तरं ( तत्+५मी+तस्, अव्य ) यदि अहं ( कर्म्म-अस्मद्-श १मा १व ) वध्यः वधं अर्हति ( वध-धा+अर्हार्थे यत् ) वधार्हः। भवेयमितिशेषः तदा = तर्हि (तद+७मी+दा, अव्य) हन्तव्यः = विनाशनीयः (हन् धा+कर्म्मणि तव्यत्। अहं इति शेषः। [वाच्यान्तरं—मार्ज्जारेण भोयत, श्रूयताम्। ] यतः = यस्मात् कारणात् ( सर्व्व, यद्-श+तस् हेतौ ५मी, अव्य )।

२पृष्ठा ।—जातीति । अन्वयः । कश्चित् कश्चित् जातिमात्रेण किं हन्यते अथवा पूज्यते व्यवहारं-परिज्ञाय वध्यः अथवा पूज्यः भवेत् ।

व्याख्या । क्वचित् = कस्मिन्नपि स्थाने ( कस्मिन् स्थाने इत्यर्थे क+चित्, अव्य अपि ) जातिमात्रेण = जातिः एव जातिमात्रं ( जाति = श+

---

जा उसने कहा, आर्य्य मैं आप को प्रणाम करता हूं। गृध्र कहता हैं, तू कौन है ? उस ने कहा, मैं विड़ाल हूं। गृध्र कहता है कि, तो दूर जा। नहींतो मैं तुझे मार डालूंगा। विड़ाल ने कहा,

young birds. The young one perceived his approach and in terror made a noise. Jaradgava heard it and said, —Who comes !

The cat seeing the vulture, exclaimed in alarm : Alas ? I am destroyed.

आगच्छ ) तेन त्वया आत्मा इत्यर्थः ( तेती १ वा ) किं ( प्रश्न-वाच्य ) । कश्चित्=जनः ( कर्म, किम्-अ+१मा+चित्, अव्य ) हन्यते=विनाश्यते ( हन्-धा+कर्मणि=लट १पु १व, क्रिया ) पूज्यते=पर्य्यते वा ( पूज-धा+कर्मणि लट-१पु १व, क्रिया ) जगति जातेरतत्कर्षापकर्षविवेचना-धीनं किं लोकानां पूजावधकार्य्यमित्यर्थः । नहि एतत् युज्यते इत्याह, व्यवहारं=आचारं ( वि-अव-हृ-धा+घञ्, कर्म ) परिज्ञाय=विशेषेण विदित्वा ( परि-ज्ञा-धा+ल्यप्, अव्य) वध्यः=विनाश्यः ( वध-धा+यत्, कर्त्ता-विध ) अथवा=किम्वा (अव्य) पूज्यः=सत्कारयोग्यः ( पूज-धा+यत्, कर्त्ता-विध ) भवेत् ( क्रिया ) जनः इति कर्त्तृपदमध्याहार्य्यं, पूर्व्वं तावत् मम आचरणं जानीहि ततः वध्यश्चेत् हनिष्यसीत्यर्थः । [ वाच्य-परिवर्त्तनं—कश्चित् हन्ति, पूजयति, वध्येन पूज्येन भूयेत ।

गृध्रः—धर्म्मः । गृध्रः=जरद्गवः ( कर्त्ता ) अवदत्=अकथयत् (क्रिया), ब्रूहि=कथय ( ब्रू-धा+लोट २पु १व, क्रिया) किमर्थं कस्मै इति किमर्थं (अर्थेन नित्यसमासः) किं निमित्तं आगतः अभि=आयातः अभि (आ-गम-धा+क्त, कर्त्ता विध) । [वाच्यान्तरं—इत्थं च, भीरुत, उच्यतां । आगतेन भूयते] । सः=मार्ज्जारः (सर्व्व, तद-अ+१मा १व, कर्त्ता) अवदत्

---

पहिले हमारी बात तो सुन लीजिए, तो मैं मारने योग्य ही हूं तो मारिएगा।

But danger is to be feared till it is not come, but when it appears, measures should be adopted to avert it. Being so near the vulture I cannot retreat. But be it so. Let me approach him after gaining his confidence. Having thought thus, he went before him and said Noble sir, I salute you. Who are you ? said the vulture. A cat, was the answer. Begone, said the other, or else you shall be killed by me. Listen to my words replied the cat, and if then I deserve death, you can kill me.

अकथयत् ( क्रिया )। अहं (कर्त्ता अस्मद् म+१मा १व ) अत्र=अस्मिन् ( इदम्+७मी+त्रल अव्य-अधि-विष ) गङ्गातीरे=गङ्गायाः तीरे (६तत्) तस्मिन् (अधि) नित्यस्नायी=नित्यं स्नातुं शीलं यस्य सः ( नित्य स्ना-धा+ताच्छील्ये णिन् ) नित्यगङ्गास्नानशीलः इत्यर्थः ( कर्त्ता-विष ) निरामिषाशी=निर् नास्ति आमिषं यस्मिन् ( बहुव्री ) तत् अशितुं शीलमस्य सः (उपपद, निरामिष-अश-धा+णिन्) मत्स्यमांसाहारविरतः ( कर्त्ता-विष, पललं क्रव्यमामिषमित्यमरः ) ब्रह्मचर्य्येण=ब्रह्मणे वेदाय तदध्ययनाय इत्यर्थः चरतीति ब्रह्मचारी ( ब्रह्मन्-चर-धा+णिन् ) तस्य भावः ब्रह्मचर्य्यं ( ब्रह्मचारिन्+ष्यञ ) तेन ब्रह्मचर्य्याश्रमेण इत्यर्थः ( कर) चान्द्रायण-व्रतं चान्द्रः चान्द्रलोकः अयते प्राप्यते अनेन ( चान्द्र-अय-धा+ल्युट् ) चान्द्रायणं तदेव व्रतं नियमः (कर्म्मधा) चान्द्रायणव्रतं हि पक्षद्वयसाध्यं ग्रासपिण्डस्य ह्रासवृद्ध्यादिनियमयुक्तं चन्द्रलोकप्राप्तिफलकं व्रतं ( एकैकं ह्रासयेत् पिण्डं कृष्णे शुक्ले च वर्द्धयेत् इति । कर्म्म ) आचरन्=अनुतिष्ठन् ( आ चर-धा+शतृ १मा १व, कर्त्ता-विष ) तिष्ठामि=प्रतिवसामि (स्था-धा+लट १पु १व, क्रिया )। [वाच्यान्तरं तेन चोच्यते। मया नित्य-स्नायिना निरामिषाशिना आचरता स्थीयते]। युष्मान्=भवतः त्वामिति-भावः ( प्रस्तुवन्ति इत्यस्य कर्म्म युष्मद्+२या ३व, मान्यार्थे बहुवचनं) धर्म्मज्ञान्=धर्म्मं जानन्ति ये ते ( धर्म्म-ज्ञा-धा+क, क, कर्म्म विष ) तान् धार्म्मिकान् इत्यर्थः। धर्म्मज्ञानरतान् इति पाठे=धर्म्मस्य ज्ञानं (६तत्) तस्मिन् रता ( ७मी तत् ) तान् धर्म्माचरणैकव्रतान्, अतएव विश्वास-

---

क्यों कि, क्या कोई कहीं केवल जाति से मारा या पूजा जाता है। व्यवहार को जान के लोग वध्य वा पूज्य होते हैं।

Does any distinction of race make one deserve punishment or respect, or is it his conduct that determines whether he should be punished or respected?

भूमयः=विश्वासस्य प्रत्ययस्य भूमयः स्थानानि (भूमिर्वसुन्धरायां स्यात् स्थानमात्रेऽपि च स्त्रियां इति मेदिनी। १मा ३व) इति सर्व्वैः (सर्व्व, कर्त्ता-विण) पथिकैः (कर्त्ता पथिन्-श+१मा ३व) सर्व्वदा=नियतमेव (सर्व्व-श+दा, अव्य अधि) मम (सम्ब) अग्रे (अधि) मत्पुरतः स्तुवन्ति= प्रशंसन्ति (स्तु-धा+लट् १पु ३व क्रिया) [वाच्यान्तरं यूयं धर्म्मज्ञाः सर्व्वैः पथिभिः स्तूयध्वं]। ततः=तस्मात् कारणात् (तद् श+५मी+तस, हेतौ ५मी अव्य) विद्यावयोवृद्धेभ्यः=विद्या च वयश्च (द्वन्द्व) ताभ्यां वृद्धाः (३तत्) तेभ्यः विद्यावयोजीर्णेभ्यः (अप-विण) भवद्भ्यः युष्मभ्यः त्वत्तः इति अर्थः (गौरवे बहुवचनं, आख्यातोपयोगे इति अपादाने ५मी) अहं (कर्त्ता) अत्र=अस्मिन् स्थाने युष्मद्सकाशे इत्यर्थः (इदम्-श+७मी+त्रल, अव्य-अधि) धर्म्मं (कर्म्म) श्रोतुं आकर्णयितुं (श्रु-धा+तुमुन्, अव्य) आगतः= उपस्थितः (आ-गम्-धा+कर्त्तरि-क्त, १मा १व, क्रिया) [वाच्यान्तरं मया आगतं]। भवन्तः=यूयं (प्रातिपदिकार्थे १मा) च (अव्य) ईदृशाः= एतादृशाः (इदम-दृश-धा+टक्, विण) धर्म्मज्ञाः=धर्म्मविदः (विण धर्म्म-ज्ञा-धा+क) यत् (क्रिया विण) अतिथिं=नास्ति तिथिः यस्य (बहुव्री) सः (यः गृहस्थस्य गृहे अपरदिने न तिष्ठति स अतिथिः) तं अभ्यागतं (कर्म्म-विण) मां (अस्मद्-श+२या १व, कर्म्म) हन्तुं=विनाशयितुं (हन्-धा+तुमुन, अव्य) उद्यताः प्रस्तुताः (उत्-यम-धा+कर्त्तरि-क्त क्रिया [वाच्यान्तरं उद्यतं]।

अरौ इति। अन्वयः। अरौ अपि गृहं आगते उचितं आतिथ्यं कार्य्यं, द्रुमः पार्श्वगतात् छेत्तुः छायां न उपसंहरति।

---

गृध्र ने कहा, कह, क्यों तू आया है। वह बोला, मैं यहां गंगाजी के तीर पर नित्य स्नान करता हूं, निरामिष भोजन करताहूं, ब्रह्मचर्य्य

Tell me, said the vulture, why you have come. I dwell here, said the cat, near the Ganga, bathe daily in it, take no animal

व्याख्या । अरौ शत्रौ (ऋ-धा+इ, भावे ७मी १व । रिपौ-वैरि सपत्नारि द्विषद्द्वेषण दुर्हृदः इत्यमरः) (किमुत मित्रे इति अपिशब्दार्थः,) गृहं भवनं (कर्म्म) आगते=उपस्थिते (अधि-विश) उचितं=यथायोग्यं (कर्म्म-विश) आतिथ्यं=अतिथिसत्कारः (अतिथि-अ+ष्यञ, कर्म्म १मा १व) । कार्य्यं करणीयं (कृ-धा+कर्म्मणि ण्यत् १मा १व ) । अत्र अर्थान्तरं न्यस्यति द्रुम इति । द्रुमः=वृक्षः (वृक्षो महीरुहः शाखी पलाशी द्रुद्रुमागमाः इत्यमरः । ( कर्त्ता ) पार्श्वगतात्=पार्श्वं गतः (२तत्) तस्मात् पार्श्ववर्त्तिनः छेत्तुः=छेदकात् ( छिद-धा+तृच्=छेत्तृ+५मी १व, अपा ) संहारकात् शत्रोरपीति भावः । छायां अनातपं (कर्म्म, छाया सूर्य्यप्रिया-कान्तिः प्रतिबिम्बमनातपमित्यमरः ) न ( निषेधे अव्य ) उपसंहरति= अपनयति नाकर्षतीति भावः (उप-सं-हृ धा+लट १पु १व) । वृक्षाः छेदकाय इव साधवः शत्रवेऽपि आश्रयदाने न कातरा भवन्तीति भावार्थः । [वाच्यान्तरं आतिथ्यं कुर्य्यात्, द्रुमेण छाया उपसंह्रियते ] ।

**यद्यपि-पूज्यः ।** सोदरपूरणेऽपि असामर्थ्यात् मम कुतः अतिथिसत्कारलाभाशा इत्याशङ्क्याह यद्यपीति । यद्यपि ( अव्य ) अन्नं= अद्यते भक्ष्यते यत् तत् ( अद-धा+क्त, कर्म्म १मा १व) भक्ष्यं न ( अव्य ) अस्ति=विद्यते (क्रिया), तदा=तर्हि (तद-अ+दा (अव्य ) प्रीतिवचनेन= प्रीतये वचनं (४तत्) तेन मधुरसम्भाषणेन (करण ) अपि ( अव्य ) तावत् ( वाक्यालङ्कारे अव्य ) पूज्यः=सत्कार्य्यः ( पूज-धा+कर्म्मणि यत् )

---

कर के चान्द्रायणव्रत करता हुआ बसता हूं, आप धर्म्म के जानने वाले और विश्वास के पात्र हैं, यह बात सब चिड़िया मेरे पास सदा कहती हैं, इस लिए, आप विद्या और वयः दोनों में वृद्ध हैं, आप से धर्म्म को

food, live the life of an anchorite, and perform the rites of Chandrayana. The birds always speak to me of your love of religious knowledge, and of your trustworthiness. I have,

[ वाच्यान्तरं अतिथिं पूजयेत् ]। तथाच (अव्य) उक्तं (क्रिया) शास्त्रकारैरिति शेषः।

**तृणानीति।** अन्वयः। तृणानि, भूमिः, उदकं चतुर्थी सुनृता वाक् एतानि अपि सतां गेहे कदाचन न उच्छिद्यन्ते।

व्याख्या। तृणानि=उपवेशनार्थं कुशादिनिर्म्मितं आसनं, भूमिः=विश्रामार्थं स्थानं, उदकं=पादक्षालनाद्यर्थं जलं, चतुर्थी=चतुर्णां पूरणी (चतुर-श+युक, वाक् इत्यस्य विश) सुनृता=प्रिया सत्या च (प्रिय सत्यञ्च सुनृतमित्यमरः) वाक्=कथा मधुरसम्भाषणमित्यर्थः सर्व्वाण्येतानि ("एतानि" इत्यस्य परिचारक-विशेषणानि) एतानि=पूर्व्वोक्तानि तृणादीनि चत्वारि (कर्त्ता, एतद-श+१मा ३व) अपि=(अव्य,) अपिशब्देन अन्नाद्यभावेऽपीति बोध्यं, सतां=साधूनां (सम्ब ६ष्ठी ३व) गेहे=गृहे (अधि, गृहं गेहोदवसितमित्यमरः) कदाचन=कस्मिन्नपि काले (अधि, किम्-श+७मी+दा+चन, अव्य) न (अव्य) उच्छिद्यन्ते अप्राप्याणि भवन्ति (उत्-छिद-धा+कर्त्तृ-कर्म्मणि-लट् १पु, ३व, क्रिया)।

**३—४ पृष्ठा। गृध्रः—एकमत्यं।** गृध्रः जरद्गवः (कर्त्ता) वदति=आह (क्रिया)। मार्ज्जाराः=विड़ालाः (प्रातिपदिकार्थे १मा) हि=निश्चितं (अव्य) मांसरुचयः मांसे रुचिः येषां (बहुव्री) ते मांस-प्रियाः (मार्ज्जारा इत्यस्य विश)। पक्षिशावकाः=पक्षिणां शावकाः पक्षिशिशवः, (कर्त्ता) च=(समुच्चये अत्र=अस्मिन् स्थाने (अधि, इदम्-श+७मी+त्रल, अव्य) निवसन्ति=तिष्ठन्ति (नि-वस-धा+लट् १पु, ३व क्रिया)। तेन=हेतुना (हेतौ ३या) एवं=इत्थं (अव्य) ब्रवीमि=

---

बात सुनने के लिए यहां आया हूं, आप ऐसे धार्म्मिक हैं कि, मैं अतिथि हूं, मुझे मारने को तैयार हैं। गृहस्थ का तो यह धर्म्म हैं।

therefore, come hither to hear a discourse on religion from you, who are eminent in age and knowledge. But I now find you

कथयामि ( ब्रू धा+लट् ३पु, १व )। [ वाच्यान्तरं,—गृध्रेण उच्यते, पक्षिशावकैः न्युष्यते, उच्यते, ]। मार्ज्जारः=विड़ालः ( कर्त्ता ) भूमिं= पृथिवीं (कर्म्म) स्पृष्ट्वा ( स्पृश्-धा+क्त्वा, अव्य ) कर्णौ=श्रवणे ( कर्म्म २या २व ) स्पृशति=हस्ताभ्यां कर्णौ आच्छादयति (स्पृश-धा+लट् क्रिया, भूमि-स्पर्शपूर्व्वककर्णस्पर्शः शपथप्रकारः) [वाच्यान्तरं मार्ज्जारेण कर्णौ स्पृश्येते] । ब्रूते च ( क्रिया ) मया ( कर्त्ता, अस्मद्-श+३या १व ) च=किन्तु (अव्य) धर्म्मशास्त्रं=शिष्यते अनेनेति शास्त्रं धर्म्मग्रन्थः, धर्म्मस्य शास्त्रं ( ६तत्, कर्म्म ) पठित्वा=अधीत्य (पठ धा+क्त्वा, अव्य ) वीतरागेण=वीतः ( वि-इ-धा+क्त ) विगतः रागः ( रञ्ज-धा+घञ् ) विषयस्पृहा यस्य ( बहुव्री ) स तेन गतस्पृहेन इत्यर्थः ( कर्त्ता-विण ) इदं ( कर्म्म विण ) व्रतं=नियमः चान्द्रायणव्रतमिति भावः ( कर्म्म १मा १व ) अध्यवसितं=अनुष्ठितं संकल्पश्च निश्चयेन अवलम्बितमिति यावत् (अधि-अव-सो-धा+कर्म्मणि-क्त, क्रिया ) [ वाच्यान्तरं—अहं वीतरागः व्रतं अध्यवसितवान् ]। यतः=यस्मात् ( यद्-श+५मी+तस् हेतौ ५मी ) परस्परं=अन्योन्यं (कर्म्म) विवदमाना-नाम्=विसम्वादिनां (वि-वद-धा+शानच्, सम्ब-विण ) भासनोपसंभाषेत्या-दिना विमतौ इति आत्मनेपदं) धर्म्मशास्त्राणां नास्तिकास्तिकाध्यात्मशास्त्राणां ( सम्ब ) अहिंसा ( इति योगे १मा ) परमः ( धर्म्म इत्यस्य विण ) धर्म्मः (अहिंसा इत्यस्य विधेयविशेषणं ) इति अत्र=अस्मिन् विषये अहिंसाविषये (इदम् श+७मी+त्रल अधि अव्य ) ऐकमत्यं=एकं मतं येषां ( बहुव्री )

---

जो शत्रु घर में आए तो, भी उचित आतिथ्य करना चाहिए। पेड़ अपने काटनेवाले से जो उसके बगलमें हैं, अपनी छाया नहीं लेता हैं ।

so pious, that a guest as I am, you are ready to put me to death ! The following are the duties of one who lives in society,—

Even towards an enemy, who is a guest, the offices of

तानि एकमतानि तेषां भावः एकमतता इत्यर्थः (कर्त्ता, भवतीति शेषः) यद्यपि धर्म्मशास्त्रेषु मतभेदाः इश्यन्ते, तथापि "माहिंस्यात् सर्व्वभूतानि" इति "अहिंसा परमो धर्म्मः" इत्यत्र च सर्व्वेएव धर्म्मशास्त्रकाराः अभिन्नमताः इत्यर्थः। [वाच्यान्तरं ऐकमत्यं न भूयते]।

उक्तं च (वच-धा+भावे क्त, क्रिया) शास्त्रकारैरिति शेषः।

**सर्व्वेति।** अन्वयः। ये नराः सर्व्वहिंसानिवृत्ता ये च सर्व्वसहाः सर्व्वस्य आश्रयभूताश्च, ते नराः स्वर्गगामिनः।

व्याख्या। ये नराः=मनुष्याः (प्रातिपदिकार्थे १मा) सर्व्वहिंसानिवृत्ताः=सर्व्वाः सर्व्वप्रकाराः हिंसाः प्राणिवधादयः (हिंस-धा+अङ् कर्म्मधा) ताभ्यः निवृत्ताः विरताः (५ तत्पु, नि वृत्-धा=क्त; नरा इत्यस्य विण) ये (सर्व्वप्रातिपदिकार्थे १मा) च (अव्य) सर्व्वसहाः=सर्व्वं सह-न्ते ये ते (उपपद, सर्व्वं सह-धा+खच्) सर्व्वसहिष्णवः, ये च सर्व्वस्य सर्व्वस्य=लोकस्य=(कर्त्तरि ६ष्ठी) आश्रयभूताः=शरणरूपाः यं आश्रित्य अनेके जीवन्ति इत्यर्थः (आ-श्रि-धा+अल=आश्रय-भू-धा=क्त विण) ते (सर्व्वे विण) नराः मनुष्याः (कर्त्ता) स्वर्गगामिनः=स्वर्गं गच्छन्ति ये ते (उपपद, स्वर्ग-गम-धा+णिन् नराः इत्यस्य विण) स्वर्गवासयोग्याः इत्यर्थः भवन्तीति शेषः। [वाच्यान्तरं तैः नरैः स्वर्गगामिभिः भूयते।]

**एकइति।** अन्वयः। धर्म्मः एकएव सुहृत्, यः निधने अपि अनुयाति, अन्यत् सर्व्वं शरीरेण समं नाशं गच्छति।

---

जो घर में अन्न नहीं, तो मिठी बातों से भी अतिथि की पूजा करनी चाहिए। ऐसा ही पंडितो ने कहा है—

hospitality must be performed, as the tree withdraws not its shade from the wood-cutter standing under it.

Although there be no wealth, a stranger may be entertained with sweet words.

व्याख्या। धर्म्मः (प्रातिपदिकार्थे १मा) एकएव=एकमात्रः सुहृत्=सु सुन्दरं हृदयं यस्य सः=बन्धुः (धर्म्म इत्यस्य-विधेय विण) यः=धर्म्मः (कर्त्ता) निधने अपि मरणे अपि (अपि) अनुयाति=अनुगच्छति बन्धु-मितिशेषः (अनु·या-धा+लट्, क्रिया) अन्यत्=अपरं (कर्त्ता विण) सर्व्वं =धर्म्मातिरिक्तवस्तुजातं (कर्त्ता) शरीरेण=देहेन (समयोगे ३या) समं =सह (अव्य) नाशं=ध्वंसं (नश-धा+घञ, कर्म्म) गच्छति=याति प्राप्नोति इत्यर्थः (गम-धा+लट् क्रिया) यानरत्नादिकं इह सुखोत्पादकं धर्म्मस्तु परत्र इह च सुखाय भवति इति भावः। [वाच्यान्तरं—अनु-यायते, अन्येन सर्व्वेण नाशः गम्यते।

**य इति,** अन्वयः। यः यदा यस्य मांसं अत्ति उभयोः अन्तरं पश्यत, एकस्य क्षणिका प्रीतिः अन्यः प्राणैः विमुच्यते।

व्याख्या। यः=जनः (कर्त्ता,) यदा=यस्मिन् समये (यद् श+७मी+दा, अव्य अधि) यस्य प्राणिनः (सर्व्व-सम्ब) मांसं (कर्म्म) अत्ति=खादति (अद-धा+लट् प्रपु १व)। उभयोः=खाद्यखादकयोः (सम्ब) अन्तरं= भेदं (कर्म्म) पश्यत=आलोकत यूयमिति शेषः (दृश-धा+लोट मपु ३व, क्रिया), एकस्य खादकस्य (कर्त्तरि ६ष्ठी) क्षणिका=क्षणकालस्थायिनी (क्षण-श+णिकण ; विण) प्रीतिः=सन्तोषः (प्री-धा+क्ति, प्रातिपदिकार्थे

---

तृण, भूमि, जल मिठी और प्यारी बात यह साधुओं के घर से कभी नहीं जाती हैं।

गृध्र कहता है कि, बिड़ाल मांस खाते हैं, यहां चिड़ियों के बच्चे रहते हैं। इसी लिए मैं ऐसा कहता हूं। बिड़ाल मिठी कु के कान

Straw, earth, water and pleassing words—these four are never wanted in the houses of good men.

The vulture said, the cats love flesh, and young birds live here, therefore I am thus speaking. The cat on hearing

१मा ) यदा खादति तदैव प्रीतिः इत्यर्थः। भक्षः=खाद्यः ( कर्म १मा ) प्राणैः जीवितेन कर्तृभिः ( कर्ता ३या नित्यबहुवचनान्तः ) विमुच्यते=परित्यज्यते (वि-मुच+कर्मणि-लट प्रपु १व) खाद्यस्य तु प्राणनाशः भवतीत्यर्थः। खादकस्य महापराधकरणं मूढचेष्टितमितिभावः। [ पाठान्तरं येन भक्ष्यते, पश्यतां, अन्ये प्राणान् विमुञ्चन्ति ]।

स्वच्छन्देति। अन्वयः। स्वच्छन्दवनजातेन शाकेन अपि ( उदरं ) प्रपूर्यते। अस्य दग्धोदरस्य अर्थे कः महत् पातकं कुर्य्यात्।

व्याख्या। स्वच्छन्दवनजातेन=स्वस्य आत्मनः छन्दः यस्मिन् (बहुव्री) तत् यथातथा वने जातः (७तत्, जन्-धा+कर्त्तरि-क्त, करण-विण) तेन कृष्यादिकर्षणं अन्तरा स्वतः उत्पन्नेन इत्यर्थः शाकेन अपि=वन्यफलादिना अपि इति भावः ( करण ) प्रपूर्य्यते=परिपूर्णं भवति उदरमिति शेषः ( पूर-+कर्त्तरि लट प्रपु १व, दिवादित्वात् यक्, क्रिया ) अस्य ( सर्व्व-सम्ब-विण ) दग्धोदरस्य=दग्धं दूषितं उदरं ( कर्म्म-धा ) तस्य ( सम्ब, आक्षेपे दग्धेति विशेषणं ) अर्थे निमित्ते, कः=जनः (कर्त्ता, किम्-श+१मा १व महत् ( कर्म्म विण ) पातकं—पातयति इति ( पत+णिच+ल्यु ) प्राणिवधरूपं महापापं ( कर्म्म ) कुर्य्यात् ( कृ-धा+विधि १पु १व, क्रिया ) न कोऽपीत्यर्थः। [ पाठान्तरं केन क्रियते ]।

४-पृष्ठा। एवं विश्वास—व्यापादितः। एवं=इत्थं ( अव्य ) विश्वास्य=प्रत्ययं उत्पाद्य ( वि-श्वस्+णिच+ल्यप, अव्य ) तत्कोटरे=

---

छूता है। मैं धर्म्मशास्त्र पढ़के विषय के अनुराग छोड़के यह व्रत किया है। क्यों कि, आपस में जो विवाद करनेवाले धर्म्मशास्त्र कों इस विषय में एक मत है कि अहिंसा परम धर्म्म हैं।

this, touched his ears after touching the ground, and thus spoke,—Having heard the Dharmashastras and given up all earthly desires, I have been performing the austere rites of

तरोः इचस्य कोटरं गह्वरं तस्मिन् (६तत्, इचो महीरुहः शाखी विटपी पादपस्तरु रित्यमरः (अधि) स्थितः=उवास (स्था-धा+कर्त्तरि-क्त, क्रिया) [ वाच्यान्तरं स्थितं ] ततः=तदनन्तरं (अनन्तरार्थे ५मी+तस्, अव्य) दिनेषु=दिवसेषु (भावे ७मी) गच्छत्सु=चलत्सु (गम्-धा+शतृ ७मी ३व, अधि विश) पक्षिशावकान्=पक्षिशिशून् (कर्म) आक्रम्य=धृत्वा (आ-क्रम-धा+ल्यप, अव्य) कोटरं=निजगह्वरं (कर्म) आनीय=प्रापय्य (आ-नी-धा+ल्यप्, अव्य) प्रत्यहं=अहनि अहनि (अव्ययी) प्रतिदिनं (अव्य) खादति=भक्षयति (खद-धा+लट, क्रिया) [ वाच्यान्तरं—खाद्यते ]। अथ=अनन्तरं (अव्य) येषां=पक्षिणां (सर्व्व-सम्ब, यद-श+६ष्ठी ३व) अपत्यानि=न पतति वंशो येन जातेन (न-पत+य) तानि सन्तानाः (कर्म-१मा ३व) खादितानि=भक्षितानि (खाद-धा+कर्म्मणि-क्त, क्रिया) तैः=पक्षिभिः (जिज्ञासां इत्यस्य कर्त्तरि ३या ३व) शोकार्त्तैः=शोकेन ऋताः (३तत्, ऋते च तृतीयासमासे इति वृद्धिः, कर्त्ता विश) तैः शोकपीड़ितैः, विलपद्भिः (वि, लप-धा+शतृ ३या ३व, कर्त्ता विश) जिज्ञासां=ज्ञातुमिच्छां (ज्ञा-धा+सन+अ, स्त्रियां आप, परिज्ञाय इत्यस्य कर्म्म) अपत्यानां विनाशकारणं अनुसन्धातुं चर्चितां परिज्ञाय=विदित्वा (परिज्ञा+ल्यप, अव्य) मार्ज्जारः=विड़ालः (कर्त्ता) कोटरात्=गह्वरात् (अपा) निःसृत्य=निर्गत्य (निर् सृ-धा+ल्यप्,

---

और भी कहा है कि—एक धर्म्म ही मित्र है, जो मृत्यु होने पर भी साथ जाता है। और सब शरीरके साथ नाश प्राप्त होते हैं।

Chandrayana. The conflicting shastras are unanimous in asserting, that,—not to kill is the supreme virtue.

Those men only who do not wish to wrong any one, who patiently endure all things, and who are, as it were, the support of all, go to heaven. Virtue is the only true friend,

अव्य ) पलायितः=वह्निः पलायाञ्चक्रे ( परा-अय+कर्त्तरि-क्त, क्रिया )। जिज्ञासाः समारब्धा तत् परिज्ञाय इति पाठे तु, पक्षिभिः जिज्ञासा (कर्म्म) समारब्धाः उपक्रान्ताः ( क्रिया ) तत् परिज्ञाय विदित्वा इति अर्थः। [ वाच्यान्तरं—मार्ज्जारेण पलायितं ]। इतस्ततः=सर्व्वत्र ( इदम-अ+७मी+तस्, तद-अ+७मी+तस्, अव्य-अधि ) निरूपयद्भिः=अन्विष्यद्भिः ( नि-रूपि-धा+अतृ ३या ३व, कर्त्ता विण ) पक्षिभिः ( कर्त्ता ३या ३व) तत्र=तस्मिन् ( तद+त्रल, अव्य विण ) तरुकोटरे—वृक्षकोटरे ( अधि ) शावकास्थीनि—शावकानां शिशूनां अस्थीनि ( ६तत्, कर्म्म १मा ३व ) प्राप्तानि=लब्धानि ( प्र आप्-धा+कर्म्मणि क्त, क्रिया ) [ वाच्यान्तरं—निरूपयन्तः पक्षिणः शावकास्थीनि प्राप्तवन्तः ]। अनन्तरं ( अव्य) अनेन ( इदम्-अ+३या १व, सर्व्व कर्त्त विण ) एव=निश्चितं ( निश्चयार्थे अव्य ) जरद्गवेन=( कर्त्ता ३या ) अस्माकं=( अस्मद अ+६ष्ठी ३व, सर्व्व-सम्ब ) शावकाः=शिशवः ( कर्म्म १मा ३व ) खादिताः= भक्षिताः ( खाद धा+कर्म्मणि-क्त, क्रिया ) इति—इत्थं ( अव्य )·पक्षिभिः कर्त्ता ३या ३व) निश्चित्य—स्थिरीकृत्य ( निर्-चि-धा+ल्यप, अव्य ) सः=

---

कहा कि—जो सब हिंसा से निवृत्त हैं जो सब सहते हैं, और सभों के आश्रय हैं, वह स्वर्ग को जाते हैं।

यो जिसका मांस खाता है, उन दोनों का अन्तर देखो, एक को थोड़े देर के लिए प्रीति होती है, और दूसरा प्राणही जाता रहता है।

because it accompanies even in death ; all else perish as the body. Mark the difference between him who eats and the creature that is eaten. One experiences only a momentary pleasure and the other is deprived of life. When this damned belly can be filled with the spontaneous herbs of the forest, who would commit a great sin for its sake? Thus securing

पूर्व्वोक्तः जरद्गवः ( तद शब्द+१मा १व सर्व्व कर्म विश ) गृध्रः=शकुनिः (कर्म २मा ) व्यापादितः=विनाशितः ( वि-आ-पद-णिच्+कर्म णि-क्त, क्रिया) [ वाच्यान्तरं—अयं जरद्गवः शावकान् खादितवान्, पक्षिणः तं गृध्रं व्यापादितवन्तः ]।

५पृष्ठा । अतोऽहं—वर्धते । अतः=अस्मात् कारणात् (इदम्-श+५मी+तस्, हेतौ ५मी, अव्य) अहं (कर्त्ता, अस्मद श-१मा १व) ब्रवीमि=कथयामि ( क्रिया )। अज्ञातकुलशीलस्येत्यादि=जरद्गवो यथा अविदित-कुलशीलस्य विड़ालस्याश्रयं दत्त्वा स्वयं विनष्टः, तथा एतत्सख्येनास्मद्-विनाशो माभूयादित्यर्थः। [वाच्यान्तरं—मया उच्यते ] इति=एवं (अव्य) आकर्ण्य=श्रुत्वा ( आ-कर्ण-धा+ल्यप्, अव्य ) जम्बुकः शृगालः ( कर्त्ता, शृगाल-वञ्चकः क्रोष्टुफेरुफेरवजम्बुकाः इत्यमरः ) सकोपं=कोपेन सह-वर्त्तमानं यथा यथा ( बहुव्री ) सक्रोधं ( क्रिया-विश ) आह=ब्रवीति =( ब्रू=धा+लट् १पु १व क्रिया ) [ वाच्यान्तरं—जम्बुकेन उच्यते ]। मृगस्य=हरिणस्य ( दर्शन इत्यस्य कर्म्मणि ६ष्ठी ) प्रथमदर्शनदिने=प्रथम-साक्षात्कारदिवसे प्रथमं दर्शनं ( कर्म्मधा, दृश-धा+ल्युट् ) तस्य दिनं तस्मिन् ( ६तत्, अधि ) भवान्=( कर्त्ता भवत्-श+१मा १व ) अपि ( अव्य ) अज्ञातकुलशीलः कुलं च शीलं च कुलशीले ( द्वन्द ) न ज्ञाते कुलशीले यस्य सः ( नञ्तत्, बहुव्री, कर्त्ता-विश ) अविदितवंशचरितः इत्यर्थः, आसीदिति शेषः। तत्=तस्मात् ( हेतौ ५मी, अव्य ) भवता ( सहयोगे ३या ) सह=साद्धं ( अव्य ) कथं=किम्प्रकारेण ( किम्=श+था, अव्य ) एतस्य=अस्य मृगस्य ( सर्व्व, एतद श+६ष्ठी १व ) स्नेहा-

---

जो जिसका मांस खाता है, उन दोनों का अन्तर देखो, एक को थोड़े देर के लिए प्रीति होती है, और दूसरा प्राण से जाता रहता है।

his confidence the cat took up his abode in the hollow of the tree.

वृत्तिः=स्नेहस्य अनुवर्त्तिः आचरणं (६तत्) प्रणयबन्धनं (कर्म्म) उत्तरोत्तरं=क्रमशः (क्रिया-विश) वर्धते=वृद्धिं प्राप्नोति (वृध-धा+लट् प्रपु १व क्रिया) [ वाच्यान्तरं—भवता अज्ञातकुलशीलेन अभूयत। स्नेहानुवृत्त्या वृध्यते ] ।

**अयमिति ।** अन्वयः । अयं निजः परः वा इति लघुचेतसां गणना, उदारचरितानां तु वसुधा एव कुटुम्बकं ।

व्याख्या । अयं (प्रातिपदिकार्थे १मा ) निजः आत्मीयः वा=अथवा ( अव्य ) अयं परः इति=इत्थं ( अव्य ) लघुचेतसां= लघु चेतः येषां ते तेषां ( बहुव्री, कर्त्तरि ६ष्ठी ) असारचित्तानामित्यर्थः, गणना=विवेचना ( प्रातिपदिकार्थे १मा ) । उदारचरितानां=उदारं सरलं चरितं येषां ते तेषां ( बहुव्री ) ( दक्षिणे सरलोदारौ इत्यमरः ) महात्मनां इत्यर्थः तु =( अव्य ) वसुधा=वसूनि धीयन्ते अस्यां वसुधा पृथिवी ( वसु-धा+क, प्रातिपदिकार्थे १मा ) एव ( अव्य ) कुटुम्बकं कुटुम्बएव परिवारवर्गः ( स्वार्थे क, वसुधा इत्यस्य विधेयविश), तादृशाः पुरुषाः सर्व्वानपि वसुधा-वासिनः भ्रातृन् मन्यन्ते इत्यर्थः । अतः न मां परं मन्यतिपत्तुमर्हसि इति भावः ।

**अतः—स्थीयतामिति ।** अतः=अस्मात् वसुधाकुटुम्बकत्वात् ( हेतौ इदम्-अ+प्रभी+तस्, अव्य ) अयं=सम्मुखवर्त्ती ( सर्व्व-विश ) मृगः (प्रातिपदिकार्थे १मा) यथा यादृशः (यद-अ+था, अव्य) मम (सम्ब ) बन्धुः=बध्नाति स्नेहेन इति बन्धुः मित्रं ( बन्ध-धा+कर्त्तरि-उ, मृग

---

आप से वनमें उपजे हुए शाक से भी पेट भर जाता है, इस लिये पेठ के लिए बड़ा पाप कौन करे।

But some days having elapsed, he assailed the young birds, carried them off to his cavern and devoured them, The old

इत्यस्य-विण ) तथा=तादृश: ( तद-श+था, अव्य) भवान् अपि त्वं अपि मित्रमिति शेष: । मृग: ( कर्त्ता ) ब्रूते=कथयति ( क्रिया ) । अनेन= एवम्विधेन ( सर्व्व-विण ) उत्तरोत्तरेण=उत्तरोत्तरवाक्यप्रपञ्चेन ( किं योगे ३या ) किं ( प्रश्ने अव्य ) प्रयोजनं नास्तीत्यर्थ: । सर्व्वै: = अस्माभि: ( कर्त्ता ३या ) विश्रब्धालापै:=( वि= श्रनभ्-धा+अल ) विश्वासपूर्णै: प्रणयगर्भै: वा सम्भाषणै: ( करं ) सुखिभि=( सुख-श+णिन ), सुखं अनुभवद्भि: सद्भि: (कर्त्ता विण) स्थीयतां=अवस्थीयतां ( स्था-धा+कर्म्मणि लोट १पु १व, क्रिया ) । [ वाच्यान्तरं—मृगेण उच्यते, सर्व्वे वयं सुखिन: तिष्ठाम: ] । यत: यस्मात् ( हेतौ ५मी अव्य ) ।

नेति । अन्वय: । कश्चित् कस्यचित् मित्रं न, कश्चित् कस्यचित् रिपु: न, व्यवहारेण मित्राणि तथा रिपव: जायन्ते ।

व्याख्या । कश्चित्=जन: ( किम्-श+१मा+चित्, अव्य, प्रातिपदिकार्थे १मा ) कस्यचित्=जनस्य ( किम्-श+६ष्ठी+चित्, अव्य, सम्ब ) मित्रं बन्धु: ( विण ) न ( निषेधे अव्य ), कश्चित्=जन: कस्यचित् जनस्य रिपु: शत्रु: न न कोऽपि कस्यचित् मित्रं शत्रुर्वा भूत्वा जायते इत्यर्थ: । व्यवहारेण=हिताहिताचरणेन ( वि-अव-हृ+घञ्, करण ) मित्राणि ( कर्त्ता-१मा ३व, नित्य नपुं ) तथा ( अव्य ) रिपव:=शत्रव: ( कर्त्ता १मा ३व ) जायन्ते (जन्-धा+लट् प्रपु ३व, क्रिया ) । [वाच्यान्तरं—मित्रै: तथा रिपुभि: जायते ] ।

---

यह विश्वास पैदा कर पेड़ के कोटर मे रहने लगा । इस से पीछे कुछ दिन बीतने पीछे उस त्पश्चको अल्प शक्ति ज्ञान कर चिड़ियों के

birds whose young ones were thus devoured, were overcome with grief and clamorously began to make enquiries. The cat perceiving this, issued from the cavern and ran away. The birds on examining the place in every direction, found

५-६-पृष्ठा । काकेन—आयस्व मां । काकेन=सुबुद्धिनाम्ना मृगबन्धुना ( कर्त्ता ३या ) उक्तं=कथितं ( वच-धा+भावे क्त, क्रिया ) एवं=इत्थं ( कर्त्ता, अव्य ) अस्तु=भवतु ( क्रिया ) ( अस्-धा लोट् प्रपु. १व ) [ वाच्यान्तरं काकः कथितवान् एवं भूयतां । ततः=तदनन्तरं (५मी+तस् अव्य ) प्रातः=प्रभातसमये ( अव्य अधि ) सर्व्वे=शृगालमृगवायसाः ( सर्व्व कर्त्ता १मा ३व ) यथाभिमतं=अभिमतं अनतिक्रम्य ( अभि-मन-धा+क्त, अव्ययी ) यथेष्ठं ( कर्म्म विश ) देशं ( कर्म्म ) गताः-प्रस्थिताः ( कर्त्तरि-क्त क्रिया) (वाच्यान्तरं सर्व्वैः यथाभिमतः देशः गतः । एकदा=एकस्मिन् दिवसे (एक-श+दा, अव्य-अधि) तेन (कर्त्ता-विश) जम्बुकेन=शृगालेन ( कर्त्ता ३या ) सुनिभृतं=सुगुप्तं ( सु-नि-भृ-धा+क्त क्रिया-विश ) उक्तं=कथितं ( वच+भावे क्त, क्रिया ) [ वाच्यान्तरं सः जम्बूकः उक्तवान् ) । सखे=मित्र ( सम्बो-विश) मृग (सम्ब) एतस्मिन्=अस्मिन् ( एतद्-श+७मी अधि-विश ) वनैकदेशे=वनस्य एकः देशः ( ६तत्, कर्म्मधा, अधि) अस्मिन् वनैकभागे इत्यर्थः, शस्यसंपूर्णं=शस्यैः संपूर्णं (३तत्, पूर-धा+क्त, कर्त्ता-विश ) बहुलशस्ययुक्तमित्यर्थः क्षेत्रं ( कर्त्ता ) अस्ति=विद्यते ( क्रिया ) । तत्=क्षेत्रं ( सर्व्व कर्म्म ) अहं ( कर्त्ता ) त्वां (कर्म्म, युष्मद्-श-२या १व ) नीत्वा=( नी-धा+क्त्वा, अव्य) दर्शयामि=प्रेक्षयामि

---

बच्चों को पकड़ कोटर में लाके हर दिन खाता है। पीछे जिन के बच्चों को उसने खाया वह शोकार्त्त हो री री पूछने लगीं, यह जान बिड़ाल कोटर से निकल भागा। इधर उधर तलाश करके चिड़ियोंने पेड़ के the bones of their young ones in that cavern, and believing that Jaradgava had certainly devoured the little birds, immediately killed him.

Therefore I say to a person of unknown &c. Jackal on hearing this said in an angry mood—"On your first interview with this antelope, you were also of an unknown race and

( दृश् धा+णिच्, लट् उपु १व, क्रिया )। [ वाच्यान्तरं शस्यपूर्णं क्षेत्रं च भूयते, मया दृश्यते ]। तथा ( भावे ७मी, अव्य ) कृते = अनुष्ठिते सति शृगालेन मृगेण इति शेषः, सः = पूर्व्वोक्तः मृगः ( कर्त्ता ) प्रत्यहं अहनि अहनि ( अव्ययी, समासान्तः अच् ) प्रतिदिनं (अधि-अव्य) तत्र = क्षेत्रे ( अधि-अव्य ) गत्वा ( गम धा+क्त्वा अव्य ) शस्यं=गोधुमादिकं ( कर्म्म ) खादति=भक्षयति ( क्रिया ) [ वाच्यान्तरं—तेन मृगेण शस्यं खाद्यते। अथ = अनन्तरं ( अव्य ) क्षेत्रपतिना=क्षेत्रस्य पतिः तेन क्षेत्रस्वामिना ( ६तत्, कर्त्ता-३या ) क्षेत्रं ( कर्म्म ) दृष्ट्वा=अवलोक्य ( दृश धा+क्त्वा अव्य ) पाशः=मृगबन्धनार्थं जालं ( कर्म्म-१मा, पाशः केशादिपूर्व्वः स्यात् मृगपत्त्यादिबन्धने इति मेदिनी) तत्र=तस्मिन् क्षेत्रे (अधि) नियोजितः= विस्तारितः ( नि-युज-धा+णिच् कर्म्मणि क्तः, क्रिया )। [ वाच्यान्तरं— क्षेत्रपतिः पाशं नियोजितवान् ]। अनन्तरं पुनः (अव्य) आगतः=आयातः ( आ-गम्-धा क्त, कर्त्ता-विण ) मृगः ( कर्त्ता ) पाशैः=जालैः ( करण ) बद्धः ( बन्ध-धा+क्त, कर्त्ता विण ) अचिन्तयत्=चिन्तितवान् ( क्रिया ) [ वाच्यान्तरं—आगतेन मृगेण बद्धेन अचिन्त्यत ]। मित्रात्=वर्ष्मीः (अन्य-

कोटर मे बच्चों की हड्डियां पाईं। तब चिड़ियों ने यह निश्चय कर के कि, इस जरद्गव ने हमारे बच्चों को खायां है, उस गृध्र को मार डाला।

इस लिए मैं कहता हूं कि, जिसका कुल और सुभाव नहीं जाना है इत्यादि। यह सुन शृगाल क्रोध के साथ बोला कि, मृग के पहिले

character, and how is your friendship with him continually increasing? The weak-minded only reckon such a one as a relation and such a one as a stranger, but to a man of a noble heart, the whole world is related. This antelope is as much a friend to me as you are."

योगे ५मी ) अन्यः=भिन्नः ( कर्त्ता-विश ) कः=जनः ( प्रातिपदिकार्थे-१मा ) मां ( कर्म्म ) इतः=अस्मात् ( इदम्=अ=५मी+तस् अव्य ) कालपाशादिव=कालस्य यमस्य पाशः ( ६तत् ) तस्मादिव यमपाशसदृशात् ( इवेन नित्यसमासः, विभक्त्यलोपश्चेति नित्यसमासः अलुक् चेति ) व्याधपाशात् व्याधस्य ( ६तत् ) पाशः तस्मात् ( अपा ) परित्रातुं=मोचयितुं ( परि-त्रै धा+तुमुन्, अव्य) समर्थः=प्रभुः ( कर्त्ता विश ) ।

तदान्तरे=तस्मिन् समये ( अधि ) आगत्य ( आ+गम् धा+ल्यप्, अव्य) उपस्थितः (उप-स्था धा+कर्त्तरि क्त, कर्त्ताविश) जम्बुकः=शृगालः ( कर्त्ता ) अचिन्तयत्=चिन्तितवान् (चिन्ति-धा+लङ ; क्रिया) अस्माकं=मम इत्यर्थः ( अस्मद्-अ+६ष्ठी ३व ) कपटप्रबन्धेन=कपटः छलपूर्णः प्रबन्धः प्रयोगः उपायो वा ( कर्म्मधा ) तेन छलप्रयोगेण ( कर्त्ता, ३या १व ) फलितं=निष्पन्नं सिद्धं इति यावत् ( फलनिष्पत्तौ इति फल-धा+भावे-क्त, क्रिया )। [ वाच्यान्तरं—उपस्थितेन जम्बुकेन अचिन्त्यत ।

---

दर्शन के दिन आप का भी कुल और सुभाव जाना हुआ नहीं था। तो आप केसाथ इस की स्नेहानुवृत्ति दिन दिन क्यों बढ़ती जाती है ?

यह अपना है, यह बिगाना है, ऐसा विचार ओछो समझ के लोगों का है, जिनका चरित्र महत् है, वह सारी पृथ्वी को अपना कुटुम्ब समझते हैं ।

"What is the necessity," said the antelope, "of this debate ? Let us all live in one place enjoying the pleasure of confidential intercourse. No one is a friend or an enemy to any one ; it is by conduct only that a friend or an enemy is determined, said the crow

"Be it so," "My beloved antelope!" said the Jackal one day in private, "ah one side of the wood, is a field full of

कथितवान् कपटप्रबन्धः ]। मे=मम (सम्ब) मनोरथसिद्धिः=मनः रथः यत्र सः मनोरथः ( इष्यमाणप्रापकत्वात् मनोरथत्वं उक्तं) लिप्सा अभीष्ट-पूर्मिति यावत् (वाञ्छा लिप्सा मनोरथः इत्यमरः) तस्य सिद्धिः (६तत्,कर्त्ता) मृगमांसाहाररूपस्य अभीष्टस्य पूरणमित्यर्थः, अपि=(अव्य) बाहुल्यात्= प्राचुर्य्यात्(स्तोकाल्पेत्यादिमध्येपाठाभावात् बाहुल्यात् इति पाठः नः समीचिनः बाहुल्येन इति पाठस्तु सङ्गच्छते) भविष्यति (भू-धा+लृट् १पु १व) यतः=यस्मात् ( यद् अ+५मी+तस्, हेतौ ५मी, अव्य ) उत्कृत्यमानस्य =खण्डशः क्रियमाणस्य (उत्-कृत् धा+कर्म्मणि शानच्, सम्बविश ) एतस्य=अस्य मृगस्य ( इदम्-अ+६ष्ठी १व, सर्व्व सम्ब ) मांसासृगलिप्तानि मांसञ्च असृक् च ( द्वन्द्व ) मांसासृजौ ताभ्यां लिप्तानि मिश्रितानि मांसरुधिराक्तानि ( ३तत्, कर्म्म विश, रुधिरेऽसृक्लोहितास्ररक्तक्षतजशोणितमित्यमरः ) अस्थीनि ( कर्म्म, अस्थि-अ+१मा ३व ) मया=शृगालेन ( कर्त्ता, अस्मद्=अ+३या १व) प्राप्तव्यानि=लब्धव्यानि ( प्र-आप-धा+कर्म्मणि तव्यत्, क्रिया ) [ वाच्यान्तरं--मनोरथसिद्ध्या भविष्यते, अहं

इस लिए यह मृग जैसा मेरा मित्र है, आप का भी वैसे ही मित्र हैं। मृग बोला—जवाब के जवाब से क्या प्रयोजन है। सब एक जगह विश्वास पूर्ण आलप कर के सुख से रहैं; क्यों कि, कोई किसी का मित्र भी नहीं है और कोई किसी का शत्रु भी नहीं है, व्यवहार से सब मित्र और शत्रु होते हैं।

corn, I will take you there and show it. This was done and the antelope went thither every day and fed on the corn-The owner of the field observing it, spread there a net and the antelope on resorting to the place was caught in the snare. Then he thought within himself,—"who but a friend has power to extricate me from this fowler's net which resembles the shackles of Death?" In the meantime the Jackal went to

प्राप्स्यामि ]। मृगः=हरिणः कर्त्ता तं=शृगालं ( कर्म्म ) दृष्ट्वा=अवलोक्य (दृश-धा-क्त्वा) उल्लसितः=प्रहृष्टः (उत्-लस-धा+क्त, कर्त्तृ विश ) ब्रूते=आह (क्रिया)। सखे=मित्र शृगाल (सम्बो) मम ( वदनं इत्यस्य कर्म्मणि ६ष्ठी ) बन्धनं=पाशं (कर्म्म बन्ध-धा+ल्युट ) छिन्धि=खण्डय ( छिद-धा+लोट् मपु १व ) मां = कर्म्म, अस्मद्-श+२या १व ) सत्वरं=शीघ्रं (क्रिया विश ) त्रायस्व=रक्ष पाशबन्धनात् उन्मोचय इतिभावः ( त्रै-धा+लोट मपु १व ) [वाच्यान्तरं—मृगेण उल्लसितेन उच्यते, छिद्यतां, त्राये अहं ]। यतः

आपत्स्विति। अन्वयः। आपत्सु मित्रं, युद्धे शूरं, धने शुचिं, वित्तेषु क्षीणेषु भार्य्यां, व्यसनेषु च बान्धवान् जानीयात्।

व्याख्या। आपत्सु=विपद्कालेषु ( अधि ) मित्रं= बन्धुं ( कर्म्म ) जानीयात्=विद्यात् ( ज्ञा-धा+विधि-प्रपु १व ) आपदेव मित्रपरीक्षा-समयः इत्यर्थः। युद्धे=संग्रामे ( युध धा+भावे क्त, अधि ) शूरं=वीरं (कर्म्म, शूरोवीरश्च विक्रान्तः इत्यमरः ) (धने=ऐश्वर्य्ये सम्पद्काले इति यावत् ( अधि ) शुचिं=पवित्रं धार्म्मिकमितिभावः ( कर्म्म ) वित्तेषु धनेषु ( भावे ७मी ) क्षीणेषु=अल्पेषु सत्सु भार्य्यां=भ्रियते असौ (भृ-धा+कर्म्मणि क्यप्) तां पत्नीं (कर्म्म) व्यसनेषु=विपत्सु दुःखसमयेषु इति यावत् ( अधि, व्यसनं विपदि भ्रंशे दोषे कामजकोपजे इत्यमरः ) बान्धवान्

काक ने कहा ऐसाही हो। तब प्रातः काल को सब, जिस ने जिधर चाहा—चले गए। किसी वक्त शृगाल ने निर्जन में कहा, मित्र मृग ! इसी बन के एक जगह शस्यपूर्ण क्षेत्र है, मैं तुझे लेके दिखाता हूं।

the spot, and as he approached, thought within himself—my purpose is accomplished by my hypocrisy. When he will be hacked to pieces, I shall of course get the bones covered with flesh and blood. They will be sufficient for me."—The antelope

तथा एव = लघुपतनककथानुरूपं मृतमिव पतितं इत्यर्थः ( अव्य ) मार्गा-सन्नपल्वलतीरस्थं = मार्गः पन्थाः तस्य ( ६त् ) आसन्नं निकटस्थं ( आ-सद-धा+क्त, कर्म्म धा ) पल्वलं क्षुद्रः सरोवरः तस्य ( ६तत् ) तीरे तिष्ठति यः सः ( स्था-धा+ड ) ( कर्म्म-विण ) चित्राङ्गं = तन्नामकं मृगं ( कर्म्म-२या ) वायससनाथं = वायसेन काकेन ( ३तत् ) सनाथं सहितं ( कर्म्म-विण ) अपश्यत् = अवलोकयत् ( दृश-धा+लङ-प्रपु-१व, क्रिया ) । [ वाच्यान्तरं—कारवासः, तेन लघुपतनकेन मार्गासन्नपल्वल-तीरस्थः चित्राङ्गः वायससनाथः अदृश्यत ] ।

**तत्दृष्ट्वा—उपाद्रवत् ।** तत् ( कर्म्म २या-१व ) दृष्ट्वा= आलोक्य ( दृश-धा+क्त्वा, अव्य ) हर्षितमनाः—हर्षितं आनन्दितं (हृष-धा+क्त ) मनः यस्य सः ( वहुव्री, मनस् श+१मा-१व, कर्त्ता-विण ) व्यचिन्तयत्=आलोचितवान् ( वि-चिन्ति-धा+लङ, क्रिया ) लुब्धकः इति शेषः । नूनं=निश्चितं ( अव्य ) अयं ( इदम्-श-१मा-१व, कर्त्ता-विण ) वराकः शोचनीयः=निरीहः इत्यर्थः ( कर्त्ता-विण, वराकः शङ्करे पुंसि शोचनीये इति मेदिनी ) पाशवन्धनवेदनया=पाशेन ( ३तत् ) वन्धनं तेन ( ३तत् ) वेदना यन्त्रणा तया ( करण ३या ) सावशेषजीवितः= अवशेषेण ( अव-शिष-धा=घञ ) सह वर्त्तमानं सावशेषं तत् जीवितं प्राणाः ( जीव-धा+भावे-क्त ) यस्य सः ( कर्म्म-विण ) आयुषः शेषतया तदा न मृतः इत्यर्थः । पाशं=जालं ( कर्म्म ) त्रोटयित्वा=छित्वा

---

वन के भीतर आ घुसा और मर गया है । यह कछुआ अच्छी तरह बंधा हुआ है और मेरे वस में है । तो इसे भी लूं । यह टेरा के कछुए

entered this forest than it died. This tortoise is entirely in my power because I have kept him well-bound. So I must take the deer also. Resolving this he threw the tortoise on the ground and went towards the deer. In the mean time Hira-

( वृट धा+णिच्+क्त्वा, अव्य ) कथं अपि=अतिकष्टेन=(अव्य ) एतत् इदं ( कर्म्म-विण ) वनान्तरं=अन्यत् वनं ( द्विकर्मधा : कर्म्म ) यावत् यस्मिन् समये ( अधि-अव्य ) प्रविष्ट:=आगत: ( प्र-विश-धा+ कर्त्तरि क्त, क्रिया ), तावत्=तस्मिन् एव समये ( अधि-अव्य ) मृत: ( मृ-धा+कर्त्तरि क्त, क्रिया ), अयं ( इदम्-श १व, सर्व्व-कर्म्म-विण ) कच्छप:=कूर्म्म: ( कर्म्म-१मा ) सुयन्त्रितत्वात्=दृढबद्धत्वात् ( हेतौ-५मी) मे=मम ( कर्त्ता ६ष्ठी) वश्य:=अधीन: अन्यत्र गन्तुं न शक्त: इत्यर्थ: (वश- धा+यत्, क्रिया )। तत्=तस्मात् ( हेतौ ५मी अव्य ) एनं अपि= मृगं अपि ( इदम्-श+२या-१व, उक्तस्य पश्चादुक्तौ एनादेश:, कर्म्म ) तावत्=( वाक्यालङ्कारे अव्य ) गृह्णामि=आददे ( ग्रह-धा+लट्-उपु-१व, क्रिया )। इति=इत्थं ( अव्य ) अवधार्य्य=स्थिरीकृत्य ( अव-धृ-धा+ णिच्=धारि-धा+ल्यप्, अव्य ) कच्छपं=कूर्म्मं ( कर्म्म ) भूतले=भुव: तलं ( ६तत् ) तस्मिन् पृथिव्यां ( अधि ) प्रक्षिप्य=स्थापयित्वा ( प्र क्षिप- धा+क्त्वा अव्य ) मृगं=हरिणं ( कर्म्म-२या ) उपाद्रवत्=तदभिमुखं अभ्यधावत् ( उप-द्रु-धा+लङ-प्रपु-१व, क्रिया )। [ वाच्यान्तरं— हर्षितमनसा व्यचिन्त्यत, वराकेण अनेन मृगेण सावशेषजीवितेन प्रविष्टं मृतं ; अयं गृह्यते। मृग: उपाद्रूयते ]।

को जमीन पर रख हरिण की तरफ़ दौड़ा। इस अवसर में हिरण्यक ने वज्र की बराबर दंष्ट्रा की चोट से उस कुश के बन्धन को काट दिया। मन्थरक भी घास के भीतर से पास के तालाब में घुस गया। चित्रांग

nyak with his hard teeth cut the *Kusha* grass that bound the tortoise to pieces. Mantharack also coming out of the grass entered into the adjacent tank. Chittranga also no sooner the hunter approached them nearer fled away with the crow.

**एतस्मिन्—पलायितः ।** एतस्मिन्=अस्मिन् (एतद्-श+७मी-१व-अधि-विण ) अन्तरे=अवकाशे समये इत्यर्थः ( अधि-७मी ) हिरण्यकेन=तन्नाम्ना मूषकेण ( कर्त्ता-३या ) वज्रोपमदंष्ट्राप्रहरणेन=दंश्यते अनया दंष्ट्रा दन्तः ( दंश-धा+त्र-स्त्रियां आप ) वज्रं उपमा यस्याः सा वज्रोपमा ( बहुव्री ) सा चासौ ( कर्म्मधा ) दंष्ट्रा चेति तया ( ३तत् ) प्रहरणं आघातः तेन ( प्र-हृ-धा+भावे-ल्युट , करण ) तत् ( सर्व्व-कर्म्म-विण ) दर्भवेष्टनं=दर्भेण ३तत् ) वेष्टनं ( वेष्ट-धा+ल्युट ) कुशबन्धनं ( कर्म्म ) खण्डशः=खण्डं खण्डं ( क्रिया-विण, खण्ड-श=चशस्-अव्य ) कृतं ( कृ-धा+कर्म्मणि-क्त, क्रिया ) । मन्थरकः+तन्नामकः कूर्म्मः कर्त्ता) अपि ( अव्य ) तृणमध्यात्=तृणानां मध्यं ( ६तत् ) तस्मात् हिरण्यकेन खण्डीकृतकुशरज्जुमध्यादित्यर्थः ( अपा ) निष्क्रम्य=बहिः आगत्य ( निर्-क्रम-धा+ल्यप अव्य ) समीपवर्त्तिनं=समीपे वर्त्तते यत् तत् ( वृत धा+णिन् ) निकटस्थं ( वर्त्तिन्-श-२या-१व, कर्म्म विण ) पल्वलं=जलाशयं ( कर्म्म ) प्रविष्टः=तन्मध्यं गतः ( प्र-विश-धा+कर्त्तरि-क्त, क्रिया ) । चित्राङ्गः=तन्नामकः मृगः ( कर्त्ता ) अपि (अव्य) अप्राप्तस्य=अनुपस्थितस्य ( न-प्र-आप-धा+क्त, ६ष्ठी-विण) तस्य=लुब्धकस्य लुब्धकः यावत् न आगतः तावदित्यर्थः ( तद्-श+६ष्ठी-१व सम्बन्धविवक्षया ६ष्ठी ) ततः=तस्मात् स्थानात् ( अपा-अव्य ) उत्थाय=दण्डायमानः सन् ( उत्-स्था-धा+ल्यप, अव्य ) वायसेन=काकेन ( सहयोगे ३या ) सह=सार्द्धं (अव्य) पलायितः

भी उस के न पहुंचते पहुंचते वहां से उठ के काक साथ भाग गया। इस अर्थ में लज्जित और दुखित हो व्याध ने लौट के देखा कि कछुया भी चला गया है। तब वह बहुत विलाप कर के अपने घर को चला

In the mean time the hunter as he returned ashamed and mourning, saw that the tortoise is gone also. Then bewailing

=द्रुतं प्रस्थितः (परा अय-धा+कर्त्तरि-क्त, क्रिया)। [वाच्यान्तरं— हिरण्यकः क्षतवान्, मन्थरकेण प्रविष्टं। चित्राङ्गेण पलायितं]।

**एतस्मिन्—नयन्तिस्म।** एतस्मिन्=अस्मिन् (एतद्-श+७मी, अधि-विण) अन्तरे=समये इतिमर्थ्ये इत्यर्थः (अधि-७मी, विलक्षः=लज्जितः विस्मितश्च (कर्त्ता-विण) विषादपरः=विषादे दुःखे (वि-सद-धा+घञ) परः रतः दुःखयुक्तः इत्यर्थः (कर्त्ता विण) लुब्धकः =व्याधः (कर्त्ता) निवृत्तः प्रतिगतः सन् (नि वृत-धा+क्त, कर्त्ता-विण) यावत्=यदा (अव्य-अधि) पश्यति=अवलोकयति (दृश-धा+लट-प्रपु १व, क्रिया), तावत्=तदा (अधि-अव्य) कच्छपः=कूर्म्मः (कर्त्ता-१मा) अपि (अव्य) गतः=पलायितः (गम-धा+कर्त्तरि-क्त, क्रिया), व्याधः पुनरागत्य कच्छपं पलायितं ददर्श इति सरलार्थः। ततः=तदनन्तरं (तद्-श=५मी-तस्, अनन्तरार्थे ५मी, अव्य) च (अव्य) बहुविधं=नानाप्रकारं (क्रिया-विण) विलप्य=आक्रुश्य दुःखं प्रकाश्य इत्यर्थः, (वि लप-धा+अव्य) स्वगृहं=स्वस्य (६तत्) गृहं (कर्म्म-२या) गतः=प्रस्थितः (लुब्धकः इति शेषः (गम-धा+कर्त्तरि-क्त, क्रिया)। [वाच्यान्तरं—विलक्षेण विषादपरेण लुब्धकेन निवर्त्तनं दृश्यते, कच्छपेन गतं]। अथ=अनन्तरं (अव्य) तस्मिन्= पूर्व्व-कथिते (तद्-श-८मी १व, अधि-विण) व्याधे=लुब्धके (भावाधि-करण) दूरतरं इदं अनयोः अतिशयेन दूरं (दूर-श+तर) चक्षु-गोचरं इत्यर्थः (कर्म्म-२या) गते=प्रस्थिते (गम-धा+कर्त्तरि-क्त, अधि-

गया। उस व्याध के दूर निकल जाने पर सब काक, कछुआ, हरिण, मूषिक बड़े आनन्द से परस्पर को आलिङ्गन कर अपना दूसरा जनम

greatly, he went home. When the hunter was gone they all four—the crow, the tortoise, the deer, and the mouse became

विण ) सर्व्वे ( सर्व्व-+१मा-३व, सर्व्व-कर्त्ता-विण ) अपि ( अव्य ) ते पूर्व्वोक्ता: ( तद-अ+१मा ३व, सर्व्व-कर्त्ता-विण ) काककूर्म्ममृगमूषका:= काकश्च कूर्म्मश्च मृगश्च मूषकश्च ( वहुपदे ( द्वन्द्व) लघुपतनकमन्थरकचित्राङ्गहिरण्यका: ( कर्त्ता-१मा ३व ) परमानन्दभाज:=परमं ( कर्म्म-धा ) आनन्दं भजन्ते ये ते ( भज्-धा+विण ) अतिशयितं आह्लादं अनुभवन्त: सन्त: ( भाज्-अ+१मा ३व, कर्त्ता-विण ) परस्परं=अन्योन्यं ( कर्म्म, क्रियाव्यतिहारे द्विर्वचनं, समासभावनिषेधात् न पूर्व्वपदस्य विभक्तिलोप:, कस्कादिषु पाठात् विसर्गस्य स: ) आलिङ्ग्य=समाश्लिष्य ( आ-लिङ्ग-धा+ल्यप, अव्य) पुनर्जीवितं इव ( जन्-आ+कर्त्तरि-क्त, इवेन सह अलुक-समास: ) आत्मानं+स्वं स्वं ( आत्मन् अ२या-१व, कर्म्म ) मन्यमाना:= स्वीकुर्व्वाणा: ( मन-धा+शानच्, कर्त्ता-विण ) तत् एव=पूर्व्वोक्तं तेषां आवासस्थानं एव ( तद-अ+२या १व, सर्व्व-कर्म्मविण ) सर:=जलाशयं सरस्-अ+२या-१, कर्म्म ) सम्प्राप्य=लब्ध्वा तत्र गत्वा इत्यर्थ: ( सम-प्र-आ-धा+ल्यप, अव्य) महासुखेन=महत् सुखं यस्मिन् ( वहुव्री, ३या-विण ) अथवा महत् सुखं तेन ( कर्म्म-धा, प्रकृत्यादिभ्य: ३या ) सुभाषितकथागोष्ठीविनोदेन=सुभाषिता सुखेन कथिता ( सु-भाष-धा+क्त ) कथा वाक्यं ( कथ-धा+ड, स्त्रियां आप ) यस्यां गोष्ठ्यां ( वहुव्री ) सा ( कर्म्म-धा ) गोष्ठी सभा एकत्र मिलनं इत्यर्थ: तया ( ६तत् ) विनोद:= दु:खापनयनं ( वि णुद-धा+अल ) तेन मिलिला परस्परसुखदु:खराजर्षि-महर्षिचरितादिकथनेन दु:खं विस्मृत्य इत्यर्थ: ( करण-३या ) कालं= समयं ( कर्म्म-२या ) नयन्तिस्म=यापयन्ति-स्म ( नी-धा+लट, १पु-३व क्रिया अयोगे अतीत ) ते सुखेन ऊषु: इति भाव:। [ वाच्यान्तरं—

---

हुया समझ उसी तालाव को आ वड़े सुख से अच्छी अच्छी वातों की

very glad and embraced each other and thought as if they have regained their lives. They again went to the same tank

सर्व्वैः तैः काककूर्म्मसृगमूषकैः परमानन्दभाग्भिः कालः नीयते स्म ]।

एवं=इत्थं पूर्व्वोक्तप्रकारं इत्यर्थः (अव्य) ज्ञात्वा=विदित्वा (ज्ञा-धा+क्त्वा, अव्य) विवेकिना=विविक्ति यः सः (वि-विच-धा+घिणुन्) हिताहितज्ञानवता सुबुद्धिमता इत्यर्थः (विवेकिन्-श+३या १व, कर्त्ता) मित्रसंग्रहः सञ्चयः लाभः इत्यर्थः (सम्-ग्रह-धा+अल, कर्म्म-१मा) कार्य्यः=कर्त्तव्यः (कृ-धा+कर्म्मणि-ण्यत्, क्रिया) लघुपतनकादयः इव सुशीलं सरलचित्तं बन्धुगतप्राणं मित्रं कर्त्तव्यं इति भावः। [वाच्यान्तरं —विवेकी मित्रसंग्रहं कुर्य्यात्]।

---

गोष्ठी के विनोद से काल काटने लगे। यह जान विवेकी को चाहिए मित्र संग्रह करें।

there and happily passed their days enjoying the pleasures of sweet conversations with each other.

Knowing these wise men ought to secure friends.

---

# चाणक्यनीतिसारसंग्रहः।



चाणक्यनीतिसारसंग्रहः=चणकस्य मुनेः गोत्रापत्यं पुमान् चाणक्यः विष्णुगुप्तः कौटिल्यः इति नाम्ना ख्यातश्च ( चणक-श+ष्यण् ) तेन प्रणीता ( शाकपार्थिवादित्वात् मध्यपदलोपिकर्मधारयः ) नीतिः ( नी-धा+क्ति ) तस्य ( ६तत् ) सारः=उत्कृष्टांशः ( सृ-धा+घञ्, सारो बले स्थिरांशे च इत्यमरः ) तस्य ( ६तत् ) संग्रहः सञ्चयः एकत्रीकरणं इति यावत् ( सम्-ग्रह-धा+अल्, प्रातिपदिकार्थे १मा )।

कथासरित्सागरे इयमाख्यायिका दृश्यते, मगधदेशे नन्दो नाम राजा बभूव। शकटारो नाम तस्य च मन्त्री आसीत्। सः शकटारः राज्ञा नन्देन कारायां बद्धः पश्चात् मोचितः, नन्दवंशध्वंसाय प्रतिज्ञातवान्। अथैकदा पथि गच्छता तेन कुशमूले गुड़ं निःक्षिपन् कश्चित् ब्राह्मणो दृष्टः पृष्टश्च आह, अहं विष्णुगुप्तो नाम ब्राह्मणः, कुशाङ्कुराघातेन मे पादक्षतं अभवत्, तेन चतार्थोत्रेन विवाहे विघ्नः सञ्जातः। अतः एतान् उन्मूलयितुकामः मूले गुड़ं निःक्षिपामि। गुड़लोभात् पिपीलिकाभिः अत्र आगत्य कुशमूलानि भक्षितव्यानि। तच्छ्रुत्वा शकटारः विस्मयाविष्टः तं दृढ़प्रतिज्ञं बुद्धिमन्तं च निश्चित्य सहायकमकरोत्। ततः नन्दनृपतेः पितृश्राद्धदिने शकटारः कौशलेन विष्णुगुप्तं नन्देन अवमानितवान्। ततः स्वभावकोपनेन विष्णुगुप्तेन कोपप्रज्वलितेन शिखां विमुच्य प्रतिज्ञातं, यावत् नन्दवंशध्वंसः न क्रियते तावत् शिखा न बध्यते, ततश्च तेन अभिचारादिना नन्दवंशध्वंसं सम्पाद्य तद्वंशजातः दासीपुत्रः चन्द्रगुप्तः सिंहासने स्थापितः। तेन विष्णुगुप्तेन चन्द्रगुप्तस्य शिक्षार्थं संक्षिप्य नीतिः संगृहीता, स च विष्णुगुप्तः चणकमुनिवंशजत्वात् चाणक्यः कुटिलकार्यकारित्वात्-

कौटिल्यः इति नाम्ना च प्रसिद्धः, तत्संगृहीता नीतिः चाणक्यनीतिः इति प्रसिद्धा ।

अत्र संग्रहे सर्व्वेषु श्लोकेषु अनुष्टुभवृत्तं । तल्लक्षणं यथा । पञ्चमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः । गुरु षष्ठञ्च पादानां शेषेष्वनियमो मतः, लोकेऽनुष्टुबिति ख्यातः तस्याष्टाक्षरन्तरीताः । पिङ्गलाचार्य्यकृता अस्या बहवः भेदाः तत्कृतछन्दोग्रन्थे द्रष्टव्याः ।

**विद्वत्त्वञ्चेति** । अन्वयः । विद्वत्त्वं च नृपत्वं च कदाचन नैव-तुल्यं, स्वदेशे राजा पूज्यते, विद्वान् सर्व्वत्र पूज्यते । १

व्याख्या । प्रथमं चतुर्भिः श्लोकैः विदुषः गुणं वर्णयति । विद्वत्वं=वेत्ति यः सः विद्वान् ( विद् धा+शतृ=विद्वस्, ) तस्य भावः ( विद्वस्-श+त्व) पाण्डित्यं ( कर्त्ता-१मा ), च ( समुच्चये अव्य ) नृपत्वं=नॄन् पाति यः सः नृपः ( नृ-पा-धा+ड ) राजा तस्य भावः ( नृप-श+त्व ) भूपतित्वं ( कर्त्ता ) च ( समुच्चये अव्य ) कदाचन=कस्मिन्नपि काले ( किम्-श+दा+चन. अव्य-अधि ) न ( निषेधे अव्य ) एव ( निश्चये अव्य ) तुल्यं=समं ( कर्त्ता-विण ) भवति इति शेषः । अतुल्यत्वकथनेन द्वयोरेकतरं अवश्यमेव न्यूनं भविष्यति, तर्हि किं विद्वत्वं नृपत्वात् न्यूनं किम्वा नृपत्वं विद्वत्वात् न्यूनं इत्यपेक्षायां आह स्वदेशे इति । राजा=राजते यः सः ( राज-धा+अन् ) नृपः ( कर्म-१मा ) स्वदेशे=स्वस्य ( ६तत् ) देशे स्वकीयराज्ये ( अधि-७मी ) पूज्यते=आद्रियते ( पूजि-धा+कर्म्मणि-लट्-१पु-१व, क्रिया ) लोकैः इति शेषः । विद्वान्=पण्डितः ( कर्म, विद्वस्-श+१मा-१व ) सर्व्वत्र=सर्व्वस्मिन् स्थाने स्वदेशे च इत्यर्थः ( सर्व्व-श+त्र, अधि-अव्य ) पूज्यते=सत्क्रियते ( कर्म्मणि-लट्, क्रिया ) । स्वदेशे नृपस्य सर्व्वत्र विदुषः पूज्यत्वकथनात् नृपत्वं विद्वत्वात् न्यूनं इति सिद्धं अतः धनात् विद्या गरीयसी इति निर्गलितार्थः । १ ॥

पाठान्तरं । विद्वत्वेन च नृपत्वेन च कदाचन नैव तुल्येन भूयते,

( सर्व्वे ) राजानं पूजयन्ति । ( सर्व्वः ) विद्वांसं पूजयति । १ ॥

विद्वान् होना और राजा होना कभी बराबर नहीं है । राजा अपने देश में पुजता है, और विद्वान् की पूजा सब जगह होती है । १ ॥

(1). A king can never command equal respect with a learned man. A king is respected in his own kingdom but a learned man is respected everywhere.

पण्डिते इति । अन्वयः । पण्डिते च सर्व्वे गुणाः ( वर्त्तन्ते, मूर्खे दोषा हि केवलं ( वर्त्तन्ते ), तस्मात् मूर्खसहस्रेषु एकः प्राज्ञः विशिष्यते ।

व्याख्या । पण्डिते=पण्डा धीः जाता अस्य ( पण्डा=ज्ञ+इतच्, तारकादिभ्यः इपच्, पण्डः षण्डे धियि स्त्री स्यात् इति मेदिनी ) विद्वान् तस्मिन् ( अधि-७मी ) सर्व्वे=सकलाः ( कर्त्ता विण ) गुणाः=विनयार्ज्जवादयः सद्गुणाः ( कर्त्ता-१मा ) वर्त्तन्ते इति शेषः । मूर्खे=अपण्डिते ( अधि -७मी ) केवलं-विरवच्छिन्ना गुणलेशशून्या इत्यर्थः, दोषाः=औद्धत्यादयः दोषाः ( कर्त्ता-१मा ) हि ( निश्चये-अव्य ) वर्त्तन्ते इति शेषः । तस्मात=पण्डिते सर्व्वगुणसद्भावात मूर्खे केवलदोषसद्भावाच्च ( हेतौ-५मी ) मूर्खसहस्रेषु मूर्खाणाम् ( ६तत् ) सहस्राणि तेषु सहस्रमूर्खेषु ( अनादरे-७मी बहुसहस्रविवक्षायां बहुवचनं ) एकः ( कर्म्म विण) प्राज्ञः=प्रकृष्टं जानाति यः सः प्रज्ञः ( प्र-ज्ञा-धा+क ) प्रज्ञएव इति प्राज्ञः ( प्रज्ञादित्वादण् ) पण्डितः ( कर्म्म-१मा ) विशिष्यते=लोकैः विशिष्टतया गण्यते ( वि-शिष्-धा+कर्म्मणि-लट् ) सर्व्वे मूर्खसहस्राणि अनादृत्य एकं पण्डितं बहुमन्यन्ते इत्यर्थः । २ ॥

वाच्यान्तरं—सर्व्वैः गुणैः वर्त्त्यते, दोषैः वर्त्त्यते, एकं प्राज्ञं विशिंष्यन्ति ।

पण्डित में सब गुण होते हैं, और मूर्ख में केवल दोष हैं, इस लिए हजारों मूर्खों से एक पण्डित अच्छा है । २ ॥

(2). In a wise man are to be found all the higher virtues but in a fool nothing but vice; hence one wise man is preferred to a thousand fools.

**मातृवदिति ।** अन्वयः । यः परदारेषु मातृवत् परद्रव्येषु लोष्ट्रवत् सर्व्वभूतेषु आत्मवत् पश्यति सः पण्डितः । ३ ॥

व्याख्या । परदारेषु=परेषां (६तत्) दाराः तेषु अन्यस्त्रीषु (अधि ७मी) दारशब्दः नित्यबहुवचनान्तः पुंलिङ्गश्च) मातृवत्=मातरं इव (तुल्यार्थे-वतिः अन्य यः अव्य) यः=जनः (कर्त्ता) पश्यति=अवलोकयति (दृश॰धा+लट्-क्रिया) परस्त्रियमवलोक्य यस्य मनोविकारः न जायते इति भावः परद्रव्येषु=परस्य (६तत्) द्रव्याणि तेषु परधनादिषु (अधि) लोष्ट्रवत्=मृत्खण्डमिव यः पश्यति । यस्य मनसि परधनहरणेच्छा न जायते इति भावः । सर्व्वभूतेषु=सर्व्वे (कर्म्मधा) भूताः तेषु सकलजीवेषु (अधि) आत्मवत्=आत्मानमिव यः पश्यति सुखदुःखमानापमानेषु स्वयं यथा हृष्यति क्लिश्यति च अन्योऽपि तथा इति यः अनुभवति इति भावः, सः (सर्व्वः प्रातिपदिकार्थे-१मा) पण्डितः=प्राज्ञः (१मा-विण) केवलं शास्त्राध्ययनेन पण्डितः न भवति, शास्त्रनिर्द्दिष्ट वर्त्मनि चरन् पण्डितः इति भावः । ३ ।

वाच्यान्तरं—येन दृश्यते । ३ ।

परस्त्री को माता की बराबर, पर द्रव्य को मिट्टी के ढेले की बराबर सब प्राणियों को अपनी बराबर जो देखता है, वही पण्डित है । ३ ।

(3). He who looks upon another's wife as his mother; upon another's articles as ordinary stones and another self as himself, is a truly wise man.

**किं कुलेन इति ।** अन्वयः । यः नरः गुणहीनः (तस्य) विद्याहीन कुलेन किं, शास्त्रज्ञः अकुलीनः अपि दैवतैः अपि पूज्यते । ४ ॥

व्याख्या । अत्र मूर्खस्य दोषवर्णनमुखेन विदुषः गुणं वर्णयति । यः

( सर्व्व-कर्त्ता-विण ) नरः=मनुष्यः ( कर्त्ता ) गुणहीनः=गुणैः स्वाभाविकैः शिक्षाजनितैश्च विनयार्ज्जवादिगुणैः ( ३तत् ) हीनः शून्यः ( हा-धा+कर्म्मणि-क्त, कर्त्ता-विण ) भवतीति शेषः । तस्य जनस्य इति शेषः; विशालेन=महता ( वि+शालच्, करण-विण ) कुलेन=आभिजात्येन ( किम्-योगे ३या ) किम्=प्रयोजनं नास्ति, तस्य महदपि कौलिन्यं निष्फलमिति भावः। शास्त्रज्ञः=शास्त्रं जानाति यः सः ( शास्त्र-ज्ञा-धा+ड ) अधीतशास्त्रः ( कर्म्म-विण ) अकुलीनः अपि=कौलिन्यगौरवशून्यः अपि नीचवंशोद्भवः अपि इत्यर्थः ( कुल-ध+लीन, कर्म्म-विण ) नरः इति शेषः ( कर्म्म-१मा ) दैवतैः=देवैः ( कर्त्ता-३या, दैवतानि पुंसि वा दैवतास्त्रियां इत्यमरः ) का कथा मनुष्याणां इति अपि शब्दार्थः, पूज्यते=सत्क्रियते ( पूजि+धा कर्म्मणि-लट, क्रिया ) अकुलीनस्य शास्त्रज्ञस्य देवताकर्त्तृकपूज्यत्वकथनात् मनुष्यकर्त्तृकपूज्यत्वं सिद्धमेव । ४ ।

वाच्यान्तरं । येन नरेण गुणहीनेन ( भूयते ), शास्त्रज्ञं अकुलीनमपि दैवतानि पूजयन्ति । ४ ।

जो नर गुणहीन हो, उसके बड़े कुलीन होने से क्या प्रयोजन है, क्यों कि अकुलीन शास्त्रज्ञ को देवता भी पूजते हैं । ४ ।

( 4 ). What is high family connection to that man who is devoid of noble qualities; even a man though not well-connected but versed in the *shastras* is honored by the Gods.

**रूपेति** । अन्वयः । विद्याहीनाः ( जनाः ) रूपयौवनसम्पन्नाः ( अपि ) विशालकुलसम्भवाः ( अपि ) निर्गन्धाः किंशुकाः इव न शोभन्ते

। ५ ।

व्याख्या । उक्तमर्थं भङ्गान्तरेणाह । विद्याहीनाः=विद्यया ( विद-धा+क्यप् स्त्रियां आप, ३तत्) हीनाः ( हा-धा+क्त) विद्याशून्याः ( कर्त्ता-विण ) जनाः इति शेषः ( कर्त्ता ) रूपयौवनसम्पन्नाः=युनः भावः यौवनं,

(युवन्-अ+षण) रूपं च यौवनं च (द्वन्द्व) ताभ्यां (३तत्) सम्पन्नाः (सम्-पद् धा+क्त) सुरूपाः तारुण्यमनोरमाः अपि (कर्त्ता-विश) विशालकुलसम्भवाः=विशालं कुलं (कर्म्म-धा) महावंशः तस्मिन् सम्भवः उत्पत्तिः (सम्-भू-धा+अल) येषां (बहुव्री) ते सत्कुलसम्भूताः अपि (कर्त्ता-विश) निर्गन्धाः=निः नास्ति गन्धः येषां ते (बहुव्री) गन्धहीनाः (किंशुकाः इत्यस्य-विश) किंशुकाः इव=पलाशपुष्पाणि इव (उपमा-कर्त्ता) न (निषेधे अव्य) शोभन्ते=राजन्ते (शुभ-धा+लट, क्रिया) सत्यपि वर्णोत्कर्षे सत्यपि च विशालवृत्तसम्भूतत्वे यथा पलाशकुसुमं निर्गन्धतया न शोभते नापि लोकैः कुन्दकमलादिवत् शिरसा ध्रियते तथा सत्यपि रूपे यौवने च महावंशप्रसूतत्वेऽपि विद्याहीनतया नरः लोकैः न बहुमन्यते इति सरलार्थः। ५॥

वाच्यान्तरं। विद्याहीनैः (जनैः) रूपयौवनसम्पन्नैः विशालकुलसम्भवैः किंशुकैः इव न शुभ्यते। ५॥

रूप और यौवन वाले और जिनका जन्म अच्छे कुलमें हुआ है, वह विद्याहीन हों तो वे वासके पलास फूलकी तरह शोभा नहीं पाते। ५॥

(5). Men possessing youth and beauty and claiming descent from a high family but devoid of learning fail to distinguish themselves just as the *kingshuka* flowers fail to charm on account of their want of sweet smell.

नक्षत्रेति। अन्वयः। चन्द्रः नक्षत्रभूषणं, पतिः नारीणां भूषणं, राजा पृथिवीभूषणं, विद्या सर्व्वस्य भूषणं। ६॥

व्याख्या। चन्द्रः=चन्दयति आह्लादयति यः सः (चदि-धा=णिच+रक्) निशाकरः (प्रातिपदिकार्थे-१मा) नक्षत्रभूषणं=न क्षीयन्ते क्षरन्ति वा नक्षत्राणि अश्विन्यादितारकाः (क्षी-धा-अथवा-क्षर-धा+क्त्र) तेषां

( ६तत् ) भूषणं=भूष्यते अनेन (भूष-धा+करणे-ल्युट् ) अलंकारः (१मा-विधेय-विण ) चन्द्र ण नक्षत्राणि शोभन्ते इत्यर्थः । पतिः=पाति पालयति यः सः ( पा-धा+ति ) स्वामी ( प्रातिपदिकार्थे-१मा ) नारीणां—स्त्रीणां ( भूषणं इत्यस्य कर्म्म-६ष्ठी १व ) भूषणं=अलङ्कारः शोभाकरः इत्यर्थः । वलयकङ्कणादिकं नारीणां भूषणं न, स्वामीएव भूषणं इत्यर्थः, राजा=राजते रञ्जयति वा प्रजाः ( राज वा रञ्ज धा=कनिन् ) भूपतिः ( प्रातिपदिकार्थे १मा ) पृथिवीभूषणं=पृथिव्याः सज्जाः ( ६तत् ) भूषणं ( १मा-विधेय-विण ) सौधादिकं पृथिवीं तथा न शोभयति, यथा साधुः राजा इत्यर्थः । विद्या=विद्यते ज्ञायते अनया ( विद-धा+क्यप्, स्त्रियां आप ) ज्ञानं ( प्रातिपदिकार्थे-१मा ) सर्व्वस्य=(विण) जनस्य इति शेषः ( भूषणं इत्यस्य-कर्म्म-विण ) भूषणं (१मा-विधेय-विण) कुरूपोऽपि विद्यया अलंक्रियते इत्यर्थः । वाच्यान्तरं नास्ति । ६ ॥

नक्षत्रों का चन्द्रमा स्त्रियों का पति, राजा पृथ्वी का और विद्या सबका भूषण है । ६ ॥

( 6 ). The moon is in ornament to the stars ; husband is an ornament to the ladies ; king is an ornament to the world ; but learning is an ornament to all.

**मतेति ।** अन्वयः । ( यस्मात् अपाठितः बालः ) हंसमध्ये बकः यथा ( तथा ) सभामध्ये न शोभते, ( तस्मात् ) ( यया मात्रा ) बालः न पाठितः ( सा ) माता ( तस्य ) शत्रुः, येन बालः न पाठितः ( सः ) पिता ( तस्य ) वैरी । ७ ॥

व्याख्या । सप्तभिः श्लोकैः मूर्खस्य दोषं वर्णयति । (यस्मात् हेतोः) ( अपाठितः बालः ) हंसमध्ये=हंसानां ( ६तत् ) मध्ये ( अधि ) बकः यथा=बकः इव ( उपमा-कर्त्ता सभामध्ये=सभायाः ( ६तत् ) मध्ये तस्मिन् विद्वन्मण्डल्यां ( अधि ) न शोभते=न विराजते ( शुभ-धा+लट्

क्रिया ), ( तस्मात् हेतोः ) यया माता ( कर्त्ता-३या ) बालः=बालकः स्वपुत्रः इत्यर्थः ( कर्म्म-१मा ) न पाठितः=शिक्षितः ( पठ-धा+णिच-कर्म्मणि क्त, क्रिया ) सा माता ( प्रातिपदिकार्थे-१मा ) तस्य=बालस्य ( सम्ब ) शत्रुः=( शद्-धा+त्रन् ) रिपुः ( १मा-विधेय-विण ), ( येन= पिता ( सर्व्व, कर्त्ता-३या ) बालः ( कर्म्म-१मा ) न पाठितः ( क्रिया ) सः पिता ( प्रातिपदिकार्थे १मा ) तस्य=बालकस्य ( सम्ब ) वैरी=वैरस्य भावः ( वीर-अ+षण् ) वैरं विद्वेषः, तत् अस्य अस्ति ( वैर अ+इन् ) विद्वेषी शत्रुः इत्यर्थः ( १मा विण )। असमाप्यात् पाठात् निवृत्तिः आपातरम्या पर्य्यन्तपरितापानी इति भावः । ७ ॥

पाठान्तरं—यः बालं न पाठितवान् । न शुभ्यते वकेन यथा । ७ ।

जो पिता और माता अपने बालक को पढ़ाते नहीं वह उसके शत्रु हैं, वह बालक हंसों में बगला की तरह सभा में शोभा नहीं पाता । ७ ।

( 7 ). The father and the mother are both enemies to that boy who is not educated by them, he cannot figure well in an assembly just as a crane cannot in the midst of geese.

**वरमिति ।** अन्वयः । एकः गुणी पुत्रः वरं, मूर्खशतैः अपि च ( किञ्चित ) न ( साध्यते ), एकः चन्द्रः तमः हन्ति, तारागणैः न च ( हन्यते ) । ८ ।

व्याख्या । एकः=एकलः सहायनिरपेक्षः (१मा-विण) गुणी=गुणः शौर्य्यादिः विद्यते अस्य ( गुण अ+इन् ) गुणवान् ( १मा-विण ) पुत्रः =पुतः पुन्नामनरकात् त्रायते यः सः ( पुत् अ=त्रै धा+ड ) तनयः ( प्रातिपदिकार्थे-१मा ) वरम्=श्रेयान् ( अव्य ) बहुभ्यः मूर्खपुत्रेभ्यः इति शेषः तेन कार्य्यसिद्धिः स्यात्, मूर्खशतैः अपि=मूर्खाणां ( ६तत् ) शतानि तैः बहुभिः मूर्खपुत्रैः अपि ( कर्त्ता-३या ) न च=न किञ्चित

कार्य्यं साध्यते, अत्र दृष्टान्त माह एकः चन्द्रः इति। एकः अन्यज्योतिषां साहाय्यनिरपेक्षः=( कर्त्ता-विण ) चन्द्रः =निशाकरः ( कर्त्ता-१मा ) तमः=अन्धकारं ( कर्म्म, तमस-अ-२या ) हन्ति=विनाशयति ( हन्-धा+लट्-प्रपु १व, क्रिया )- तारागणैः=ताराणां ( ६त् ) गणाः तैः नक्षत्र-समूहैः ( कर्त्ता-३या ) तमः ( कर्म्म १मा ) न च=हन्यते इति शेषः, पण्डितेन सह पातालगमनं वरं नच मूर्खशतैः सह स्वर्गगमनं इति भावः। ८।

वाच्यान्तरं। मूर्खशतानि किञ्चित् न साधयन्ति, एकेन चन्द्रेण तमः हन्यते, तारागणाः न घ्नन्ति। ८।

बलकि एक गुणी पुत्र अच्छा है पर सैकड़ों मूरख नहीं, एक चन्द्रमा अन्धेरे को नाश करता है, पर अनेक तारे नहीं . ८।

(8). One learned son is to be preferred to a hundred illiterate ones; one single moon dispels the darkness of the night but numerous stars cannot.

**लालयेदिति।** अन्वयः। पञ्चवर्षाणि लालयेत्, दशवर्षाणि ताड़येत्, षोड़शे वर्षे प्राप्ते तु पुत्रं मित्रवत् आचरेत्। ९।

व्याख्या। पञ्च ( विण, पञ्च अ-२या-३व ) वर्षाणि=वत्सराणि व्याप्य ( अत्यन्तसंयोगे-२या ) लालयेत्=प्रतिपालयेत्—पुत्रं इति शेषः चुम्बनादिना अभीष्टप्रदानादिना तन्मतानुवर्त्तनेन च सन्तोषयेत् ( लल-धा+णिच्+विधि-प्रपु-१व, क्रिया ) दश ( विण, दशन्-अ+२या-३व ) वर्षाणि=वत्सराणि व्याप्य (अत्यन्तसंयोगे-२या ) ताड़येत्=दण्डयेत पुत्रं ताड़नहेतौ सति इति शेषः ( तड़-धा+णिच-विधि-१पु-१व, क्रिया ) पञ्चवर्षादूर्द्ध्वं पञ्चदशवर्षवयः पर्य्यन्तं अपराधे कृते दण्डविधानेन शिक्षयेत् इत्यर्थः। षोड़शे=षड़धिका दश षोड़श ( मध्यपदलोपि कर्म्मधा, षष उत्वन्दतदशधासूत्तरपदादेः ष्टुत्वञ्च वेति वाच्यं इति वार्त्तिकसूत्रेण षष

इत्वं द्स्य टुत्वं ) षोड़शानां पूरणं षोड़शं ( षोड़शन्-शब्द+डट ) आङ्गन् वर्षे=वत्सरे ( भावे ७मी ) प्राप्ते=( प्र-आप-धा+क्त, ७मी-विण ) पुत्रे षोड़शवर्षवयस्के सति इत्यर्थः, पुत्रं=तनयं ( कर्म ) मित्रवत्=दस्युं इव ( तुल्यार्थे-वति, अव्य ) आचरेत्=व्यवहरेत् नतु ताड़येत्, उपदेशादिना शिक्षयेत् इत्यर्थः ( आ-चर धा+विधि-१पु-१व, क्रिया ) । ९ ।

वाच्यान्तरं। लाल्यं त, ताड्येत, पुत्रः मित्रवत् आचर्य्येत । ९ ।

पांच वरस तक लालन करना, पन्दरह वरस तक ताड़न करना चाहिये ; और जब पुत्र सोलह वरस का हो जाय तो उसके साथ मित्र की तरह आचरण करना चाहिये । ९ ।

( 9 ). A son is to be treated indulgently till the fifth year of his age, he is to be treated with strictness till he is fifteen, but on his attaining the sixteenth year he is to be treated a a friend.

**लालने इति ।** अन्वयः। लालने बहवः दोषाः, ताड़ने बहवः गुणाः। तस्मात् पुत्रं च शिष्यं च ताड़येत न तु लालयेत् । १० ॥

व्याख्या। लालने=प्रतिपालने तन्मतानुसारेण इत्यर्थः ( लालि-धा+ल्युट, अधि ७मी ) बहवः=अनेके ( बहु शब्द-१मा-३व, कर्त्ता-विण ) दोषाः=औद्धत्यादयः ( दूष धा+अल, कर्त्ता-१मा ) जायन्ते इति शेषः, ताड़ने=अपराधानुरूपदण्डदाने ( ताड़ि-धा+ल्युट, अधि ७मी) बहवः= अनेके ( कर्त्ता-विण ) गुणाः=विनयादयः गुणाः ( कर्त्ता-१मा-३व ) भवन्ति इति शेषः। तस्मात्=लालनस्य दोषजनकत्वात् ताड़नस्य गुण-जनकत्वाच्च ( तद् शब्द+हेतौ-५मी ) पुत्रं=पुतः पुन्नामनरकात् त्रायते यः सः ( पुत् त्रै-धा+ड ) तं तनयं ( कर्म-२या ) शिष्यम्=शिक्षितं शक्यो ( शास्-धा+य ) तं छात्रं ( कर्म-२या ) ताड़येत्=अपराधे सति दण्ड-

येत् ( क्रिया ) न तु ( अव्य ) लालयेत्=तन्मतानुवर्त्तनादिना प्रतिपालयेत् ( क्रिया ) । १० ।

वाच्यान्तरं । दोषैः जायन्ते, गुणैः भूयन्ते, पुत्रः च शिष्यः च ताड्येत, नतु लाल्येत । १० ।

लालन में बहुत दोष और ताड़न में बहुत गुण हैं। इस लिए पुत्र और शिष्यको ताड़न करना चाहिये लालन करना नहीं । १० ।

(10). Many are the evils of indulgence, and so the advantages of strict discipline; hence a son and a student are to be treated with strictness and not with indulgence.

**एकेनापि इति ।** अन्वयः । एकेन सुपुत्रेण कुलं यथा ( तथा ) एकेन अपि पुष्पितेन सुगन्धिना सुवृक्षेण सर्व्वं तत् वनं वासितं स्यात् । ११ ।

व्याख्या । एकेन=सहायान्तरनिरपेक्षेण ( कर्त्ता-विण ) सुपुत्रेण=सु सुन्दरः पुत्रः ( कर्म्मधा ) तेन गुणवता पुत्रेण (उपमापक्षे कर्त्ता-३या) कुलं वंशः यथा=वंशः इव ( उपमापक्षे कर्म्म-१मा, यथा=यद्-अ+था उपमावाचि अव्य ) एकेन अपि—वृक्षान्तरसाहाय्यनिरपेक्षेण ( कर्त्ता-विण ) पुष्पितेन=पुष्पाणि सञ्जातानि अस्य ( पुष्प-अ+इतच् ) तेन सञ्जातकुसुमेन ( कर्त्ता-विण ) सुगन्धिना=सु शोभनः गन्धः यस्य ( बहुव्री, गन्धस्येदुत्पूतिसुसुरभिभ्य इति समासान्तः इत् ) तेन ( कर्त्ता-विण ) सुवृक्षेण=सुन्दरवृक्षेण ( वासितं इत्यस्य कर्त्ता-३ता ) सर्व्वं=समस्तं ( १मा-विण ) वनं=अरण्यं ( वासितं इत्यस्य कर्म्म, स्यात् इत्यस्य कर्त्ता च ) वासितं=सुरभीकृतं कुलपक्षे ख्यातिं प्रापितं ( वस-धा+णिच्+कर्म्मणि-क्त ) स्यात्=भवेत् ( अस्-धा+विधि-१पु-१व, क्रिया ) । किं बहुभिः कण्टकिवृक्षैः यैः एव काननं दुर्गमं भवति, एकः अपि सुवृक्षः वरं, यः-खलु विकसितैः सुगन्धिभिः पुष्पैः सर्व्वं काननं सुरभीकरोति, तथा [illegible]

असंख्यैः असत्पुत्रैः, यैः एव केवलं कुलं मलिनं क्रियते, वरं एकोऽपि सुपुत्रः यः खलु स्वकीयैः सद्गुणराशिभिः ख्यातिभिश्च कुलं उज्ज्वलं करोति इति सहजार्थः। अत्र श्लोके एकेन सुपुत्रेण कुलं इव एकेन सुवृक्षेण वासितं स्यात् इति वक्तव्ये एकेन सुपुत्रेण कुलमिव एकेन सुवृक्षेण वनं वासितं स्यात् इति कथनात् प्रसिद्धस्य उपमानस्य उपमेयत्वं कल्पयित्वा प्रतीपालङ्कारेण वैचित्रं प्रदर्शितं। अत्र सुवृक्षस्य सुपुत्रेण सह पुष्पगन्धादीनां यशोगुणादिभिः सह उपमेयोपमेयभावः, सुवासनं साधर्म्यं। ११।

पाठान्तरं। सुपुत्रेण यथा सर्व्वं वनेन वासितेन भूयते। ११।

एक अच्छे पेड़के फुलने से उस की वास से सारा वन सुगन्ध होता है जैसे कि अच्छे पुत्र से कुल। ११।

(11). The whole of a wood is rendered pleasant by a single tree bearing sweet-scented flowers just as a family is glorified by a single worthy son.

**एकेन इति।** अन्वयः। कुपुत्रेण कुलं यथा एकेन कुवृक्षेण कोटरस्थेन वह्निना सर्व्वं तत् वनं दह्यते। १२।

व्याख्या। तद्विपरीतमाह। कुपुत्रेण=कुत्सितः पुत्रः (कर्मधा-) तेन मूर्खपुत्रेण (उपमा-कर्त्ता-३या) कुलं यथा=वंश इव (उपमा-कर्म्म) निजदोषैः इति शेषः एकेन (कर्त्ता-विण) कुवृक्षेण=कुत्सितः वृक्षः (कर्म्मधा) तेन कण्टकवृक्षेण (कर्त्ता-३या) कोटरस्थेन=कोटरे तिष्ठति यः सः (कोटर-स्था-धा+ड) तेन अन्तरस्थितेन (करण-विण) वह्निना=अग्निना (करण) सर्व्वं=समस्तं (कर्म्म-विण) तत्=कुवृक्षाधिष्ठितं (सर्व्व-कर्म्म-विण) वनं=अरण्यं (कर्म्म-१मा) दह्यते=प्रज्वाल्यते (दह-धा+कर्म्मणि-लट, क्रिया)। यथा सुपुत्रेण कुलं वर्द्धते तथा कुपुत्रेण कुलं भस्मीभूतं भवति इति भावः अत्रापि पूर्व्ववत् वैचित्र्यं।

अत्र वृक्षस्य कुपुत्रेण सह वासस्य दोषेण सह उपमानोपमेयभावः दहनं च साधर्म्यं । १२ ।

वाच्यान्तरं । कुपुत्रः कुलं यथा कुवृक्षः वनं दहति । १२ ।

ऐसे एक पेड़ से जिस के कोटर मे आग है वह सारा वन जल जाता है जैसे कि कुपुत्र से कुल १२ ।

(12). The whole of a wood is consumed by fire from the hollow of a single pernicious tree just as a family is ruined by a vicious son.

दूरतः इति । अन्वयः । मूर्खः लम्बशाटपटावृतः (सन्) दूरतः शोभते, मूर्खः यावत् किञ्चित् न भाषते तावत् शोभते । १३ ।

व्याख्या । मूर्खः—मूढ़ः अज्ञः (कर्त्ता-१मा) लम्बशाटपटावृतः—शाटः परिधेयं अर्धवस्त्रं पटः शोभनं प्रावरणं (द्वन्द्व) लम्बौ दीर्घौ शाटपटौ (कर्म्मधा) ताभ्यां आवृतः (आ-वृ-धा=क्त) सुपरिच्छदभूषितः सन् (कर्त्ता-विश) दूरतः=दूरात् (५मी)+तस्, अपा) शोभते=राजते (शुभ-धा+लट, क्रिया), यावत=यत्कालपर्य्यन्तं (अव्य) मूर्खः (कर्त्ता) किञ्चित्=किमपि वाक्यं (किम(अ+रया+चित, कर्म्म, अव्य) न भाषते=कथयति (भाष धा+लट, क्रिया) तावत=तत्कालपर्य्यन्तं (अव्य) शोभते—राजते (क्रिया) तस्य परिच्छदं दृष्ट्वा सर्व्वे मूर्खं प्रशंसन्ति समीपवर्त्तिनि सति सम्भाषणमात्रेण तं मूर्खं विदित्वा अवजानन्ति इति भावः । १३ ।

वाच्यान्तरं । शुभ्यते मूर्खेण, यावत् किञ्चित् न भाष्यते । १३ ।

मूर्ख लम्बी धोती और चादर ओढ़े हुए दूर से अच्छा दीखता है, उसी वक्त तक मूर्ख की शोभा होती है, जब तक कुछ नहीं बोलता । १३ ।

(13). It is distance that lends enchantment to illiterate man having flowing and gorgeous dress on. An illiterate man appears to advantage as long as he does not speak anything.

उत्सवे इति । अन्वयः । यः ( जनः ) उत्सवे, व्यसने, दुर्भिक्षे, राष्ट्रविप्लवे च एव, राजद्वारे, श्मशाने च तिष्ठति, सः बान्धवः । १४ ।

व्याख्या । यः=जनः ( यद्-श+१मा, सर्व्व-कर्त्ता ) उत्सवे ( उत-सू-अधि-अल ) पुत्रादीनां विवाहादौ ( अधि-७मी ) व्यसने=( वि-अस-धा+ल्युट ) विपद्काले ( अधि-७मी ) दुर्भिक्षे=भिक्षायाः अभावः ( अव्ययी ) तस्मिन् अन्नादिकष्टे ( अधि-७मी, तृतीयासमर्थीर्वहुलं इति वहुलग्रहणात् न अन् भावः ) राष्ट्रविप्लवे=राष्ट्रं राज्यं तस्य ( ६तत् ) विप्लवः विपर्य्ययः ( वि-प्लु-धा+अल ) तस्मिन् अन्यभूपतिना कृतावरोधे सति इत्यर्थः ( अधि-७मी ) च एव ( अव्य ) राजद्वारे=राज्ञः ( ६तत् ) द्वारं तस्मिन् धर्म्माधिकरणादौ ( अधि-७मी ) श्मशाने च=श्मानः शवाः शेरते अत्र ( श्मन् श शी-धा+आनच् ) पितृकानने मृतदाहादिसमये इत्यर्थः ( अधि-७मी ) तिष्ठति=वर्त्तते सहायीभवतीत्यर्थः ( स्था धा+लट, क्रिया ) सः=उत्सवादौ सहायः (तद -श+१मा, सर्व्व-१मा विश) बान्धवः=बध्नाति प्रणयेन यः सः बन्धुः (बन्ध-धा+उ ) बन्धुः एव बान्धवः ( बन्धु-श+स्वार्थे-अण ) मित्रं (प्रातिपदिकार्थे-१मा ) । यः पार्श्वासनः चाटुकारः सः बन्धुः न, यः तु सुखे सुखी दुःखे दुःखी च भवति स एव यथार्थः बन्धुः इति भावः । १४ ॥

पाठान्तरं । येन स्थीयते । १४ ।

उत्सव, व्यसन, दुर्भिक्ष और राजाओं की लड़ाइमें और राजद्वार औ श्मशान में जो रहता है (सहायता करता है) वही बान्धव है । १४ ।

( 14 ). He who stands by another at a time of festivity, disaster, famine, revolution, litigation ( in a Court of Justice ) or cremation ( in a burning place ) with the object of lending assistance is a friend.

**परोक्षे इति ।** अन्वयः । परोक्षे कार्य्यहन्तारं प्रत्यक्षे प्रियवादिनं तादृशं मित्रं पयोमुखं विषकुम्भं ( इव ) वर्जयेत् । १५ ।

व्याख्या । परोक्षे = अक्ष्णोः परं (अव्ययी, निपातनात् उकारादेशः, बहुलग्रहणात् अम् भावः न) असमक्षे ( अधि ७मी ) कार्य्यहन्तारं = हन्ति यः सः हन्ता ( हन् धा+तृच ) कार्य्यस्य ( ६तत्, कृ-धा + ण्यत् ) हन्ता तं अनिष्टकारिणं ( कर्म-विण प्रत्यक्षे — अक्ष्णोः समक्षं ( अव्ययी, बहुलग्रहणात् न अम् भावः ) तस्मिन् ( अधि ) प्रियवादिनं=प्रियं वदति यः सः ( प्रिय-वद-धा+णिन् ) तं हितैषितां प्रकटयन्तं ( वादिन्-श+२या, कर्म-विण ) तादृशं=सः इव दृश्यते असौ (तद्दृश्-धा+टक्) तं अन्तःक्रूरं बाह्ये सरलं इत्यर्थः ( कर्म-विण ) मित्रं=बन्धुं ( कर्म-२या, नित्यनपुंसकः ) पयोमुखं=पयः दुग्धं मुखे यस्य ( बहुव्री ) तं ( उपमा-कर्म-विण) विषकुम्भं=विषस्य कुम्भः तं इव उपमा-कर्म, अत्र उपमा-वाचकं इव इति पदं अध्याहार्य्यं ) वर्ज्जयेत्=परित्यजेत् ( वर्ज्ज-धा+विधि, क्रिया ) अभिप्रायं अपरिज्ञाय न कस्मिन्नपि विश्वसितव्यं इति भावः । अत्र कुम्भस्य मित्रेण सह उपमोपमेयभावः, आपातमधुरत्वं अनिष्टकारित्वं च साधर्म्यं । १५ ।

वाच्यान्तरं । पयोमुखः विषकुम्भः इव वर्ज्ज्यते । १५ ।

परोक्ष में काम बिगाड़ता है, और प्रत्यक्ष में मिठी बात बोलता है, ऐसे मित्र को, जिस के मुंह में दूध है और जो विष से भरा हुआ है, ऐसे कलस की तरह वर्ज्जन करना चाहिये । १५ ॥

( 15 ). The so-called friend that acts against the interest of a man in his absence but uses sweet language to him in his presence is to be discarded like a vessel having poison inside and milk near its mouth.

**न विश्वसेत् इति।** अन्वयः। अविश्वस्तं (जनं) न विश्वसेत्, मित्रं च अपि न विश्वसेत्, मित्रं कदाचित् कुपितं (सत्) सर्व्वदोषं प्रकाशयेत्। १६।

व्याख्या। अविश्वस्तं=न विश्वस्तं (वि-श्वस-धा+क्त) यस्मिन् कोऽपि न विश्वसिति तं जनं (कर्म्म-२या) न विश्वसेत्=न प्रतीयात् (वि-श्वस-धा+विधि, क्रिया, श्वसधातुः अदादिगणीयत्वात् शपः (अकारस्य) लोपे सति, विश्वस्यात् इति भवितुमर्हति, गणकार्य्यस्य शपः (अकारस्य) लोपस्य अनित्यत्वात् न लोपः), मित्रं=बन्धुं (कर्म्म-२या) च अपि=अन्यंपरं का कथा (अव्य) न विश्वसेत् (क्रिया)।—मित्रं=(कर्त्ता-१मा) कदाचित्=कस्मिन् अपि समये (किम्-श+दा+चित्, अधि-अव्य) कुपितं=क्रुद्धं सत् (कुप धा+क्त, कर्त्ता-विण) सर्व्वदोषं=सर्व्वश्चासौ-दोषश्चेति (कर्म्म-धा, दूष-धा+अल) तं विश्वासपूर्व्वककथितदोषं (कर्म्म) प्रकाशयेत्=सर्व्वेषां समक्षं कथयेत् (प्र-काश-धा+णिच-विधि, क्रिया)। १६।

वाच्यान्तरं। अविश्वस्तः न विश्वस्येत, मित्रं च अपि न विश्वस्येत, मित्रेण सर्व्वदोषः प्रकाश्येत। १६।

अविश्वासी को विश्वास नहीं करना चाहिये, मित्र को भी विश्वास नहीं करना चाहिये। कदाचित् मित्र कुपित हो तो सब दोष प्रकाश कर दे सक्ता है। १६।

(16). Place no reliance on a treacherous man even a friend, if the friend be ever offended he may betray all your secret.

**जानीयात् इति।** अन्वयः। प्रेषणे भृत्यान्, व्यसनागमे बान्धवान्, आपदि काले च मित्रं, विभवक्षये च भार्य्यां जानीयात्। १७।

व्याख्या। प्रेषणे=कार्य्येषु नियोगे (प्र-इष धा+ल्युट, अधि)

भृत्यान्=भ्रियन्ते ये ते ( भृ-धा+क्यप् ) तान् सेवकान् ( कर्म्म २या ) जानीयात्=विद्यात् ( ज्ञा-धा+विधि, क्रिया ) यः नियुक्तमात्रः कार्य्यं सम्पादयति स एव यथार्थभृत्यः इति भावः । व्यसनागमे=व्यसनस्य ( ६तत् ) आगमः ( आ-गम-धा+अल ) तस्मिन् अशुभसम्पातकाले (अधि) बान्धवान्=बध्नन्ति स्नेहेन ये ते बन्धवः (बन्ध-धा+उ ) बन्धवः एव बान्धवाः अथवा बन्धोः इमे बान्धवाः ( बन्धु-अ+ष्ण ) पितृभ्रात्रादयः आत्मीयाः तान् ( कर्म्म ) जानीयात् ( क्रिया ), आपदि काले=विपद्समये ( अधि ) मित्रं=मेद्यति स्निह्यति ( मिद-धा+त्र ) तत् सखायं (कर्म्म) जानीयात् ( क्रिया ) यः व्यसनसमये विपदि च सहायः भवति स एव यथार्थबान्धवः मित्रं च, ( अशुभसम्पातः व्यसनं, सः अशुभसम्पातः दुरुच्छेदश्चेत् आपत् इत्यनयोः भेदः, स्वभावेन स्नेहयुक्ताः पितृमात्रादयः बान्धवाः, उपकारादिना स्नेहयुक्तं मित्रं इत्यनयोश्च भेदः ) विभवक्षये=विभवस्य ( ६तत् ) क्षयः ( क्षि-धा+अल ) तस्मिन् धननाशे सति ( अधि ) भार्य्यां=भ्रियते असौ ( भृ-धा+ण्यत् ) भार्य्या स्त्री तां ( कर्म्म ) जानीयात् ( क्रिया ) धनहीने सति या स्वामिनं अनुसरति सा एव यथार्थभार्य्या इति भावः । १७ ॥

वाच्यान्तरं । भृत्याः, बान्धवाः, मित्रं, भार्य्या च ज्ञायेरन् । १७ ॥

नौकर को काम में भेज के, बान्धवों को व्यसन में, मित्र को आपद आपड़ने पर, और भार्य्या को धन नाश होने पर जानना चाहिये । १७ ॥

( 17 ). Servants are to be tested by their conduct while on duty; relatives by their conduct in times of emergency; friends by their conduct in times of danger; and wife by her conduct in times of indigence.

**उपकारेति ।** अन्वयः । पादलग्नं कण्टकं करस्थेन कण्टकेन इव उपकारण्टवैतेन शत्रुणा शत्रुं उद्धरेत् । १८ ॥

व्याख्या। पादलग्नं=पादे (७तत्) लग्नं (लग-धा+क्त) चरणे विद्धं (उपमा-कर्म्म-विण) कण्टकं (कर्म्म) करस्थेन=करे तिष्ठति यत् तत् (कर-स्था-धा+ड) हस्तगृहीतेन (उपमा-करण-विण) कण्टकेन इव (उपमा-करण) उपकारगृहीतेन=उपकारेण (उप-कृ-धा-घञ, ३तत्) गृहीतः वशीभूतः (ग्रह-धा+क्त) तेन (करण विण) शत्रुणा=रिपुणा (करण) शत्रुं=रिपुं (कर्म्म) उद्धरेत्=उन्मूलयेत् (उत्-हृ-धा+विधि, क्रिया)। एकं शत्रुं उपकारादिना वशीकृत्य तत्साहाय्येन अपरशत्रुविनाशः कर्त्तव्यः इति भावः। १८॥

वाच्यान्तरं। शत्रुः उद्धर्त्तव्यः। १८॥

ऐसे शत्रु से शत्रु को निकालना चाहिए जो उपकार से वश में आया है, जैसे कि हाथ में लिए हुए कांटे से पांव के कांटे को निकालते है। १८॥

(18). One should overcome his enemy with the assistance of another won over by good offices: just as a thorn stuck into his foot is extricated with the assistance of another thorn.

**दुर्ज्जनः इति।** अन्वयः। दुर्ज्जनः प्रियवादी च एतत् विश्वासकारणं न, (तस्य) जिह्वाग्रे मधु तिष्ठति, हृदये तु हलाहलं तिष्ठति। १९॥

व्याख्या। दुर्ज्जनः=दुः दुष्टः जनः (कर्म्म-धा) खलः (प्रातिपदिकार्थे-१मा) प्रियवादी=प्रियं हितवचनं वदति यः सः (वद-धा+णिन् वादिन्-श+१मा-विण) एतत्=प्रियकथनं (प्रातिपदिकार्थे-१मा) विश्वासकारणं=विश्वासस्य (६तत्) कारणं प्रत्ययहेतुः (१मा विण) न (अव्य) प्रियं वदति इति हेतोः दुर्ज्जनं न विश्वसेत्, (तस्य दुर्ज्जनस्य) जिह्वाग्रे=जिह्वायाः अग्रं (६तत्) तस्मिन् मुखे (अधि) मधु=क्षौद्रं तदिव मधुरप्रियवचनं इति यावत् (कर्त्ता-१मा) तिष्ठति=वर्त्तते (स्था-

धा+लट, क्रिया )। हृदये=मनसि ( अधि ) हलाहलं=विषं हला-हलमिव इ ष: इति यावत् ( चि ड्गस्तु गरलं विषं, पुंसि क्लीवे च काकोल: कालकूटो हलाहल: इत्यमर:, कर्त्ता विष ) तिष्ठति ( क्रिया ) दुर्जनस्य हृदये विषमिव द्वेष: तिष्ठति तस्मात् तस्य प्रियवचनं न विश्वासप्रयोजकं इति भाव:। दुर्ज्जनो हि मधुरवचनेन संतोष्य पश्चात् कार्य्यं नाशयति इत्यर्थ:। १८ ॥

वाच्यान्तरं, मधुना स्थीयते, हृदये हलाहलेन। १८।

दुर्जन मिठी बातें कहता है यह उसे विश्वास करने का कारण नहीं है। क्यों कि, उसके जिह्वा के सामने मधु और हृदय में विष रहता है। १८।

( 19 ). A villain though using sweet language is never to be relied upon ; there is honey in his tongue but strong poison within his heart.

**दुर्जन: इति** । अन्वय:। दुर्ज्जन: परिहर्त्तव्य:, स: विद्यया अलङ्कृत: अपि ( परिहर्त्तव्य: ), सर्प: मणिना भूषित: असौ किं भय-ङ्कर: न । २० ।

व्याख्या। दुर्ज्जन:=दुष्ट: जन: ( कर्म्म-धा ) स्वभावकुटिल: खल: ( कर्म्म-१मा ) परिहर्त्तव्य:=त्यक्तव्य: ( परि हृ-धा+कर्म्मणि-तव्य, क्रिया ) स:=दुर्ज्जन: ( कर्म्म-१मा ) विद्यया=विद्यते ज्ञायते अनया सा ( विद-धा+क्यप, स्त्रियां आप) तया शास्त्राध्ययनजनितेन ज्ञानेन (अल-ङ्कृत: इत्यस्य कर्त्ता-३या ) अलङ्कृत:=( अलम् कृ-धा+कर्म्मणि क्त ), शोभित: ( कर्म्म-विण ) अपि ( अव्य, निर्गु णस्य खलस्य का कथा इति अपेरर्थ: ) परिहर्त्तव्य:=त्यक्तव्य: ( क्रिया )। अत्र दृष्टान्तमाह, सर्प:= सर्पति गच्छति उरसा ( सृप-धा+कर्त्तरि-अच् ) उरग: ( कर्म्म-१मा ) मणिना=रत्नेन ( कर्त्ता-३या ) भूषित:=अलङ्कृत: शोभित: इत्यर्थ: ( भूष-

धा+कर्म्मणि-क्त, क्रिया)। असौ=मणिभूषितः सर्पः (अदस्-श+१मा, कर्त्ता) किं (प्रश्ने अव्य) न (निषेधे अव्य) भयङ्करः=भयं करोति यः सः (भय-कृ-धा+खच्) भयावहः (कर्त्ता-विण) भवतीति शेषः, अपितु भयङ्करः एव, गुणवान् अगुणवान् वा दुर्ज्जनः न विश्वसितव्यः इति भावः। २०।

वाच्यान्तरं। दुर्ज्जनं परिहरेत् विद्यया अलङ्कृतं अपि तं। २०।

दुर्ज्जन जो विद्वान् भी हो तो उसे वर्जन करना चाहिये, क्यों कि मणि से भूषित सर्प क्या भयानक नहीं होता। २०।

(20). A wicked man is to be avoided although he may have learning to recommend himself; a serpent is crowned with gem, but is he not fearful for all that?

**सर्पः इति।** अन्वयः। सर्पः क्रूरः, खलः क्रूरः, खलः सर्पात् क्रूरतरः, सर्पः मन्त्रौषधिवशः, खलः केन निवार्य्यते ॥ २१।

व्याख्या। सर्पः=सर्पति उरसा गच्छति यः सः (सृप-धा+कर्त्तरि-अच्) भुजङ्गमः (प्रातिपदिकार्थे-१मा) क्रूरः=क्रन्तति यः सः (क्रन्-धा+रक्) नृशंसः कुटिलहृदयः इत्यर्थः (१मा विण), खलः=दुर्ज्जनः (प्रातिपदिकार्थे-१मा) क्रूरः (१मा-विण), खलः (कर्त्ता) सर्पात् (पञ्चमी विभक्तिः इति ५मी) क्रूरतरः=अयं अनयोः अतिशयेन क्रूरः (क्रूर श+तरप्) अधिकतरकुटिलहृदयः (कर्त्ता-विण) भवति इति शेषः। सर्पः=(प्रातिपदिकार्थे १मा) मन्त्रौषधिवशः=मन्त्रः च औषधिः च (द्वन्द्व) ताभ्यां (३तत्) वशः (१मा-विण) आहितुण्डिकः मन्त्रौषधिभ्यां वशीकृत्य सर्पेण क्रीड़ति इति प्रसिद्धम्। खलः (कर्म्म १मा) केन=उपायेन (करण-३या) निवार्य्यते=प्रतिषिध्यते लोकैः इति शेषः न केनापि उपायेन इत्यर्थः। (नि-वृ धा+णिच्+कर्म्मणि लट् क्रिया)। सर्पेऽपि कथञ्चित् विश्वासः सम्भवति ननु दुर्ज्जने इति भावः। २१।

वाच्यान्तरं। खलं निवारयन्ति। २१।

सर्प क्रूर होता है, और खल क्रूर होता है, सर्प से भी खल क्रूर है, सर्प को मन्त्र और औषधि से वश कर सके है, पर खल किस उपाय से वश किया जा सक्ता है ? २१।

(21). A serpent and a wicked man are both mischievous, but a wicked man is more mischievous than the other, a serpent can be subduded by means of drugs and charms but a wicked man cannot be subdued by any means.

हस्तीति। अन्वयः। हस्तसहस्रेण हस्ती (परिहर्त्तव्यः) शतहस्तेन वाजिनः (परिहर्त्तव्याः), दशहस्तेन शृङ्गिणः (परिहर्त्तव्याः) स्थानत्यागेन दुर्ज्जनः (परिहर्त्तव्यः)। २२।

व्याख्या। हस्तसहस्रेण=हस्तानां (६तत्) सहस्रं तेन हस्तसहस्र-दूरेण इत्यर्थः। (दूरान्तिकार्थेभ्यः इति ३या) हस्ती=हस्तः करः शुण्डः इत्यर्थः विद्यते अस्य (हस्त-अ+णिन् हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च इति मेदिनी) सः गजः (कर्म्म-१मा) परिहर्त्तव्यः लोकैः इति शेषः। शत-हस्तेन=शतं हस्तः (कर्म्म-धा) तेन शतहस्तदूरेण (३या) वाजिनः= घोटकाः (कर्म्म-१मा, घोटके वीतितुरग तुरङ्गाश्व तुरङ्गमाः वाजिवाहार्व-गन्धर्व्वहयसैन्धव सप्तयः इत्यमरः) परिहर्त्तव्याः इति शेषः। दशहस्तेन= दश हस्तः (कर्म्म-धा) तेन दशहस्तदूरेण (३या) शृङ्गिणः=शृङ्ग विद्यते येषां (शृङ्ग-अ+णिन्) गोमहिषादयः (कर्म्म-१मा) परिहर्त्तव्याः इति शेषः। यत्र हस्ती, घोटकः गोमहिषादयः वर्त्तन्ते, तस्मात् यथा-क्रमं सहस्रशतदशहस्तपरिमितं स्थानं परिहृत्य व्रजेत् इति भावः। दुर्ज्जनः =खलः (कर्म्म-१मा) स्थानत्यागेन=स्थानस्य (६तत्) त्यागः (त्यज धा +घञ) तेन (३या) परिहर्त्तव्यः (क्रिया) यत्र दुर्ज्जनः तिष्ठति तत्स्थान-परित्यागेन दुर्ज्जनसंसर्गं परिहरेत् इति भावः। २२।

वाच्यान्तरं। हस्तिनं वाजिनः, शृङ्गिणः दुर्जनं परिहरेत्। २२।

हाथी से हजार हाथ और घोड़े से सौ हाथ सींग वाले चौपायों से दश हाथ दूर रह के और दुर्जन से उस जगह को छोड़ के चलना चाहिये। २२।

(22). You must keep at a distance of a thousand cubits from an elephant; a hundred cubits from horses; ten cubits from animal with horns but you must at once keep clear of wicked men.

**आपदर्थं इति।** अन्वयः। आपदर्थं धनं रक्षेत्, धनैः अपि दारान् रक्षेत, दारैः अपि धनैः अपि आत्मानं सततं रक्षेत्। २३।

व्याख्या। आपदर्थं=आपत्=विपद्=तस्मै आपदुद्धरणाय इत्यर्थः (अर्थेन नित्यसमासः) धनं=अर्थं (कर्म्म-२या) रक्षेत्=गोपायेत् (रक्ष-धा+विधि, क्रिया) विपद्काले परित्राणाय धनसंग्रहं कुर्य्यात् इति भावः। धनैः अपि=संगृहीतैः अर्थैः अपि (करण-३या) दारान् स्त्रियं (कर्म्म नित्यवहुवचनान्तः पुंलिङ्गश्च) रक्षेत्=गोपायेत (क्रिया) स्वभार्य्यार्थं धनव्ययमपि कुर्य्यात् इति भावः। दारैः अपि=भार्य्यया अपि (करण) धनैः अपि=अर्थव्ययेन अपि (करण-३या) आत्मानं (कर्म्म) सततं=नित्यमेव (अत्यन्तसंयोगे-२या) रक्षेत्=गोपायेत् (क्रिया) आत्मानं सर्व्वतोभावेन गोपायेत् इति भावः आत्मरक्षार्थं स्त्रियं अपि परित्यजेत् इति तु श्लोकस्य अभिप्रायः। २३॥

वाच्यान्तरं। धनं रक्ष्येत, दाराः रक्ष्येरन्, आत्मा रक्ष्येत। २३॥

आपद के लिए धन को, और धन से स्त्रियों की रक्षा करनी चाहिये। और अपने आप को स्त्री और धन से सदा रक्षा करनी चाहिये। २३॥

(23). You should save your wealth as a provision against difficulty; you should save your wife with your

wealth ; But you shuld always preserve yourself by means of your wealth and wife too.

**परदारानिति।** परदारान्, परद्रव्यं, परस्य परीवादं च, गुरोः स्थाने परीहासं चापल्यं च विवर्जयेत्। २४॥

व्याख्या। परदारान्=परस्य (६तत्) दाराः तान् परिग्रह्य (कर्म) विवर्जयेत्=परित्यजेत् (वि-वर्जि-धा+विधि, क्रिया) परनारीं न स्पृशेत् नापि कलुषितेन मनसा पश्येत् इति भावः। परद्रव्यं=परस्य (६तत्) द्रव्यं (कर्म) विवर्जयेत् (क्रिया) परद्रव्यं न स्वीकुर्यात्-इति भावः, परस्य=अन्यस्य=(परिवादं इत्यस्य कर्मणि ६ष्ठी) परिवादं=निन्दां (कर्म, परि वद-धा+घञ्, उपसर्गस्य घञ्यमनुष्ये बहुलं वा दीर्घः इति परिवादः इत्यपि साधुः) विवर्जयेत (क्रिया) कस्यचित् न निन्देत् इति भावः, गुरोः पूज्यस्य पित्रादेः इत्यर्थः (सम्ब-६ष्ठी) स्थाने=समीपे (अधि-७मी) परीहासं=उपहासं कौतुकमिति यावत्, (कर्म, परि-हस-धा+घञ्, पूर्ववत् दीर्घः, परिहासः इत्यपि साधुः) चापल्यं=चपलः अस्थिरः तस्य कर्म (चपल-श+ष्यञ्) चाञ्चल्यं (कर्म) च (समुच्चये अव्य) विवर्जयेत्=परित्यजेत् (क्रिया) गुरुं न उपहसेत् नापि चाञ्चल्यं प्रदर्शयेत् इत्यर्थः। २३॥

वाच्यान्तरं। परदाराः विवर्ज्येरन्, परीवादः परीहासः चापल्यं विवर्ज्येत। २४॥

परस्त्री, परद्रव्य, दूसरा की निन्दा, गुरुजन के सामने उपहास और चपलता को वर्जन करना चाहिये। २४॥

(24). Another's wife, another's property, scandal against others, joking in presence of respectable person and fickleness are to be avoided.

**त्यजेदिति।** अन्वयः। कुलस्य अर्थे एकं त्यजेत्, ग्रामस्य अर्थे कुलं त्यजेत्, जनपदस्य अर्थे ग्रामं त्यजेत्, आत्मार्थे पृथिवीं त्यजेत्। २५॥

व्याख्या। कुलस्य=वंशस्य (सम्ब-६ष्ठी) अर्थे=प्रयोजनविषये वंशस्य उपकाराय इत्यर्थः (अधि-७मी, अर्थेन सह नित्यसमासः विशेष्यलिङ्गता च इति यत् नित्यसमासविधानं, तत् अर्थशब्दस्य विशेषणपरत्वे, नतु विशेष्यपरत्वे इति न समासः) एकं=जनं कुलाङ्गारपुत्रं कुलाटां कन्यां वा (कर्म्म) त्यजेत्=परिहरेत् गृहात् निष्क्रामयेत् इत्यर्थः (त्यज-धा+विधि, क्रिया) ग्रामस्य=बहुजनपूर्णस्य स्थानस्य (सम्ब) अर्थे=प्रयोजन-विषये ग्रामवासिनां उपकाराय इत्यर्थः (अधि) कुलं (कर्म्म) त्यजेत् (क्रिया), जनपदस्य=जनानां (६तत्) पदं स्थानं देशः तस्य (सम्ब) अर्थे=प्रयोजने देशस्य उपकाराय इत्यर्थः (अधि) ग्रामं (कर्म्म) त्यजेत् (क्रिया), आत्मार्थे=आत्मनः (६तत्) अर्थे आत्मोपकाराय (अधि) पृथिवीं क्षितिं तस्याः अधिकारः राजत्वं इति लक्ष्यार्थः (कर्म्म) त्यजेत् (क्रिया), आत्मा सर्व्वश्रेष्ठः तस्य रक्षा सर्व्वतः कर्त्तव्या इति भावः। २५॥

पाठान्तरं। त्यज्येत एकः, त्यज्येत कुलं, त्यज्येत ग्रामः, त्यज्येत पृथिवी। २५॥

कुल के लिए एक को, ग्राम के लिए कुल को, जनपद के लिए ग्राम को, और अपने लिए पृथिवी को त्याग करना चाहिये। २५॥

( 25 ). You should give up one person for the sake of your family ; you should give up your family for the sake of your village ; you should sacrifice your village to the interest of the city ; But you should give up the whole world for your own interests.

चलतीति। अन्वयः। बुद्धिमान् एकेन पादेन चलति, एकेन (पादेन) तिष्ठति, परं स्थानं असमीक्ष्य पूर्व्वं आयतनं न त्यजेत्। २६॥

व्याख्या। बुद्धिमान्=बुद्धिः विद्यते अस्य (बुद्धि-अ+मतुप्) पण्डितः

( कर्त्ता ) एकेन ( करण-विण ) पादेन=चरणेन ( करण ) चलति= गच्छति ( चल-धा+लट्, क्रिया ), एकेन=द्वितीयेन पादेन ( करण ) तिष्ठति=वर्त्तते ( स्था-धा+लट, क्रिया ), बुधः काष्ठकादिचलनभायात् उभाभ्यां पद्भ्यां एकदैव न चलति इत्यर्थः। बुद्धिमान् ( कर्त्ता ) परं अन्यत् ( कर्म्म-विण ) स्थानं=भाविपदक्षेपस्थानं इत्यर्थः ( कर्म्म ) असमीक्ष्य=न दृष्ट्वा ( न सम् ईक्ष-धा+ल्यप्, अव्य ) पूर्व्वं=प्रथमं (कर्म्म विण) आयतनं=स्थानं ( कर्म्म ) न त्यजेत् ( क्रिया ) बुधाः अविमृश्य किञ्चित न कुर्व्वन्ति इति भावः। २६॥

वाच्यान्तरं। बुद्धिमता चल्यते, स्थीयते, त्यज्येत। २६॥

बुद्धिमान् एक पांव से चलते हैं और एक पांव से खड़े रहते हैं, दूसरी जगह वे ठेराये पहिली जगह छोड़नी नहीं चाहिये। २६॥

( 26 ). A prudent man advances with one leg and stands on another ; (*so*) you should not leave your former position without carefully nexamining the next.

लुब्धमिति। अन्वयः। अर्थेन लुब्धं, अञ्जलिकर्म्मणा क्रुद्धं छन्दानुवृत्तेन मूर्खं, याथात्थ्येन पण्डितं गृह्णीयात्। २७॥

व्याख्या। अर्थेन=धनदानेन ( करण ) लुब्धं=अर्थलोलुपं जनं ( लुभ-धा+क्त, कर्म्म ) गृह्णीयात्=आददीत वशीकुर्य्यात् इत्यर्थः ( ग्रह-धा+विधि, क्रिया ) अञ्जलिकर्म्मणा=अञ्जलिः ( ६तत् ) कर्म्म तेन अञ्जलिरचनव्यापारेण विनयेन इति यावत् (करण ) क्रुद्धं=कोपनस्वभावं (क्रुध-धा+क्त, कर्म्म ) गृह्णीयात् ( क्रिया ) छन्दानुवृत्तेन=छन्दस्य अभिप्रायस्य ( ६तत् ) अनुवृत्तं ( अनु वृत-धा+क्त ) अनुसरणं तेन प्रीतिकरकर्म्मसम्पादनेन इत्यर्थः ( करण, विधुरं तु प्रविश्लेषेऽभिप्रायच्छन्द आशयः इत्यमरः ) मूर्खं=मूढं—निर्ब्बोधं (कर्म्म) गृह्णीयात (क्रिया, यथातथ्येन—यथातथा सत्यं तस्य भावः (यथातथा-य+ष्यण) तेन सत्यव्यवहारेण (करण) पण्डितं

विद्वांसं ( कर्म्म ) गृह्णीयात्, लुब्धस्य धनदानेन, क्रुद्धस्य विनयेन, मूर्खस्य तन्मतानुसरणेन, पण्डितस्य सत्येन सन्तोषः भवेत् इति भावः । २७ ॥

पाठान्तरं । लुब्धः, क्रुद्धः, मूर्खः, पण्डितः गृह्णीत । २७ ॥

लोभी को धन से, और क्रुद्ध को हाथ जोड़ के, मूर्ख को उस के अभिप्राय के अनुसार चलने से और पण्डित को याथार्थ्य से वश में लाना चाहिये । २७ ॥

( 27 ). An avaricious man is to be appeased by money, an angry man by the closing of palms by way of supplication, a fool by humouring and a prudent man by statement of the real truth.

**अर्थनाशं इति ।** अन्वयः । मतिमान् ( जनः ) अर्थनाशं मनस्तापं गृहे दुश्चरितानि च वञ्चनं च अपमानञ्च न प्रकाशयेत् । २८ ॥

व्याख्या । मतिमान्=मतिः बुद्धिः ( मन्-धा+क्ति ) विद्यते अस्य (मतुप्) सुबोधः (कर्त्ता) अर्थनाशं ( नश-धा+घञ ) धनक्षयं=( कर्म्म ) न प्रकाशयेत्=सर्व्वेषां सन्निधौ न वदेत् ( प्र-काशि-धा+विधि. क्रिया ) मनस्तापं=मनसः तापं (तप-धा+घञ, कर्म्म) न प्रकाशयेत् (क्रिया) एतद्द्वय-प्रकाशेन शत्रवः निन्दन्ति हृष्यन्ति च । गृहे ( अधि ) दुश्चरितानि= दुष्कर्म्माणि (दुर-चर-धा+भावे क्त) निजपरिवारदोषान् (कर्म्म) न प्रकाशयेत् (क्रिया) तेनायशो भवेत् । वञ्चनं=अन्यैः स्वस्य प्रतारणं ( वञ्चि-धा+लुट, कर्म्म ) न प्रकाशयेत्, तेन निर्ब्बोधापवादः स्यात्, अपमानं= अन्यैः मानहानिं (कर्म्म) न प्रकाशयेत्, तेन लोकैः अवज्ञायते । २८ ॥

पाठान्तरं । अर्थनाशः मनस्तापः दुश्चरितानि वञ्चनं अपमानं मतिमता न प्रकाश्येत । २८ ॥

धन का नाश, मनस्ताप, घर में जो कुछ दुश्चरित्र हो, प्रतारणा, और अपमान किसी बुद्धिमान् को प्रकाश करना नहीं चाहिये । २८ ॥

( 28 ). Loss of money, depression of mind, corruptions in the family, the fact of being a dupe, the fact of being insulted, all these a sensible man should never disclose.

धनेति । अन्वयः । धनधान्यप्रयोगेषु तथा विद्यागमेषु च, आहारे व्यवहारे च सदा त्यक्तलज्जः भवेत् । २९ ॥

व्याख्या । धनधान्यप्रयोगेषु=धनानि च धान्यानि च ( द्वन्द्व ) तेषां (इतत्) प्रयोगाः विनियोगाः (प्र-युज-घा+घञ) तेषु ऋणदानग्रहणेषु इति भावः (अधि) सदा=सर्व्वस्मिन् काले ( सर्व्व-अ+दा, अव्य ) त्यक्तलज्जः= त्यक्ता लज्जा येन (बहुव्री) स (कर्त्ता-विश) भवेत्=लज्जां परित्यजेत् इति भावः अन्यथा प्रतारणासम्भवः । तथा=तादृशं (तद् अ+था, अव्य) विद्यागमेषु=विद्यायाः (इतत्, विद-घा+क्यप्) आगमः ( आ-गम-घा+अल् ) तेषु शास्त्राध्ययनकालेषु (अधि) त्यक्तलज्जः भवेत् (क्रिया) अन्यथा गुरुणा अजमानस्य शिष्यस्य जिज्ञासा न जायते; तेन उपदेष्टुं न शक्यते । आहारे च=भोजनसमये व्यवहारे च (वि-अव-हृ-घा-घञ् अधि) त्यक्तलज्जः भवेत् (क्रिया) अन्यथा सम्पूर्णभोजनमेव न स्यात् । २९ ॥

पाठान्तरं । त्यक्तलज्जेन भूयेत । २९ ॥

धन और धान्य के लेन देन में, विद्याप्राप्ति में, भोजन और व्यवहार में सदा लज्जा नहीं करनी चाहिये । २९ ॥

( 29 ). In the matter of expenditure of money and paddy, in acquisition of knowledge, in eating and in outward dealing, a man should ever give up reserve.

धनिनः इति । अन्वयः । धनिनः श्रोत्रियः राजा नदी पञ्चमः वैद्यः (एते) पञ्च यत्र न विद्यन्ते, तत्र वासं न कारयेत् । ३० ॥

व्याख्या । धनिनः=धनं विद्यते येषां ( धन+अ+इन् ) अर्थवन्तः ऋणदायकाः इति यावत्, श्रोत्रियः=छन्दः वेदं वेत्ति अधीते वा ( छन्दस-

श+षिरण्, श्रोत्रादेशः। एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य यः, षटकर्मनिरतः विप्रः श्रोत्रियः नाम धर्मवित, इति। जन्मना ब्राह्मणो ज्ञेयः संस्कारैः द्विजः उच्यते, विद्याभ्यासी भवेत विप्रः श्रोत्रियः त्रिभि-रुच्यते इति मनुः, वेदविदब्राह्मणः धर्मोपदेशकः इति यावत्। राजा=भूपतिः दुष्टशास्ता शिष्टपालकः इति यावत्। नदी=तरङ्गिणी अनावृष्ट्यादौ अपि जलदायिका इति यावत्, पञ्चमः=पञ्चानां पूरणं (पञ्चन्-श मट्, वैद्यः इत्यस्य-विश) वैद्यः=विद्या अस्ति अस्य (विद्या-श+अण्) भिषक् रोगनाशकः इति यावत् (एतानि पदानि पञ्च इत्यस्य परिचायकविशे-षणानि) एते पञ्च—धनिप्रभृतयः (कर्त्ता, नित्यबहुवचनान्तः) यत्र= यस्मिन् देशे (यद्-श+त्र, अधि-अव्य) न विद्यन्ते न तिष्ठन्ति तत्र तस्मिन् देशे (तद्-श+अधि-अव्य) वासं=स्थितिं (वस्-धा+घञ, कर्म) न कारयेत्=कुर्य्यात् (स्वार्थे-णिच्, क्रिया) ऋणग्रहणं धर्मोपदेशश्रवणं दुष्टदमनशिष्टपालनं अनावृष्ट्यादौ जललाभं रोगोपशमनं च विना संसारयात्रानिर्व्वाहः न भवति इति भावः: ३० ॥

वाच्यान्तरं। धनिभिः श्रोत्रियैः राज्ञा नद्या वैद्येन पंचमेन पञ्चभिः यत्र न विद्यते तत्र [illegible] कार्य्येत। ३० ॥

जहां [illegible], धनी ब्राह्मण, राजा, नदी, पांच वां वैद्य, यह पांच न हों, वहां वास नहीं करना चाहिए। ३० ॥

(30). You should never settle in a place where wealthy men, Brahmins versed in *veda*, king, river and medical practitioner, these five are wanting.

**यस्मिन्निति।** अन्वयः। यस्मिन् देशे सम्मानं न, प्रीतिः न, बान्धवाश्च न, कश्चित् विद्यागमः च न, तं देशं परिवर्जयेत्। ३१ ॥

व्याख्या। यस्मिन् (अधि-विण) देशे=जनपदे (अधि) सम्मानं= गुणग्राहिजनविरहात् गुणानां गौरवं (सम्-मन्-धा+अच्, ननु घञ,

पुंलिङ्गतापत्तेः कर्त्ता) न=अस्ति इति शेषः (क्रिया) यस्मिन् देशे प्रीतिः= कोऽपि आनन्दकरः उत्सवः = ( प्रि-धा+क्ति, कर्त्ता ) न = नास्ति (क्रिया) । यस्मिन्* देशे बान्धवाः=कृत्रिमाणि अकृत्रिमाणि मित्राणि ( बन्धु-अ+अण्, कर्त्ता ) न च सन्ति ( क्रिया ) यस्मिन् देशे कश्चित्= कोऽपि ( किम्-अ+पुं+चित्, कर्त्ता-विश, अव्य ) विद्यागमः=विद्यायाः ( ६तत ) आगमः विद्यार्जनोपायः (कर्त्ता ) न च = न च अस्ति (क्रिया) तं (सर्व्व कर्म्म-विश ) देशं स्थानं=(कर्म्म) परिवर्ज्जयेत=यत्नतः परित्यजेत् लोकः इति कर्त्तृपदमूह्यं ( परि-वर्ज्जि-धा+विधि, क्रिया ) । ३१ ॥

वाच्यान्तरं । सम्मानेन प्रीत्या बान्धवैः केनचित् विद्यागमेन न भूयते स: देशः परिवर्ज्ज्यतां । ३१ ॥

जिस देश में सम्मान, प्रीति, बान्धव, और विद्या को प्राप्ति न हो, उस देश को छोड़ देना चाहिए । ३१ ॥

(31). You should avoid that country, in which you can not have proper respect, nor ease of mind, where there are no relations, and where there is no cultivation of learning.

**मनसेति ।** अन्वयः । मनसा चिन्तितं कर्म्म वचसा न प्रकाशयेत्, यतः अन्यलक्षितकार्य्यस्य सिद्धिः न जायते । ३२ ॥

व्याख्या । मनसा=अन्तःकरणेन (मनस-अ-३या, करण) चिन्तितं= उद्भावितं ( चिन्त-धा+क्त, कर्म्म-विश ) कर्म्म=कार्य्यं ( कर्म्मन् अ+२या कर्म्म) वचसा=वाक्येन (वचस+अ+३या, करण) न प्रकाशयेत=न वदेत ( प्र-काशि-धा+विधि क्रिया ), यतः=यस्मात् (इतो-५मी+तस्, अव्य ) अन्यलक्षितकार्य्यस्य=अन्येन ( ३तत् ) लक्षितं दृष्टं ( लक्ष-धा+क्त ) कार्य्यं ( कृ-धा+ण्यत् ) यस्य ( बहुव्री ) तस्य जनस्य ( सम्ब ) सिद्धिः= कार्य्यसाधनं ( सिध-धा+क्ति, ( कर्त्ता ) न जायते=न भवति ( जन-धा-+कर्म्मारि-लट, क्रिया), अन्येन ज्ञाते बहु विघ्नापातः इति भावः । ३२ ।

वाच्यान्तरं। कर्म न प्रकाशयेत, सिद्धिर्ना न जायते। ३२।

..जो काम मन में सोचा हो, उसे वाक्य से प्रकाश करना नहीं चाहिए, क्यों कि, जिस कार्य्य को दूसरे मनुष्य ने जान लिया है, उस की सिद्धि नहीं होती। ३२।

(32). You should not give out in words what you think within* yourself of doing, since success does not attend the act which is watched by others.

कुदेशं इति। अन्वयः। विचक्षणः कुदेशं च कुवृत्तिं च कुभार्य्यां च तथा कुनदीं कुद्रव्यं च, कुभोज्यं च वर्ज्जयेत्। ३३।

व्याख्या। विचक्षणः=बुद्धिमान् जनः (वि-चक्ष-धा+कर्त्तरि-ल्यु, कर्त्ता) कुदेशं च=कुत्सि[illegible] देशः (कर्म्मधा) यत्र-देशे तस्करादिभयं विद्यते इत्यर्थः तत् (कर्म्म) कुवृत्तिं—वृत्तिः जीवनोपायः (वृत+धा+क्ति) कुत्सिता वृत्तिः चौर्य्यप्राणित्रधादिभिः संसारयात्रानिर्व्वाहकं तां (कर्म्म) कुभार्य्यां=भ्रियते असौ (भृ-धा+ण्यत्) स्त्री, कुत्सिता भार्य्या (कर्म्मधा) अपतिव्रता अप्रियवादिनी च नारी तां (कर्म्म) तथा (अव्य) कुनदीं=कुत्सिता नदी (कर्म्मधा) कूलङ्कषा तरङ्गिणी तां (कर्म्म) कुद्रव्यं—कुत्सितं द्रव्यं (कर्म्म) कुभोज्यं=भुज्यते यत् तत् भोज्यं खाद्यं (भुज-धा+यत्) कुत्सितं भोज्यं (कर्म्मधा) रोगकरं अपथ्यं (कर्म्म) वर्ज्जयेत्=परित्यजेत् (वर्जि-धा+विधि, क्रिया) तु (पादपूरणे अव्य) ३३।

वाच्यान्तरं। कुदेशः, कुवृत्तिः, कुभार्य्या, कुनदी, कुद्रव्यं, कुभोज्यं वर्ज्यताम्। ३३।

बुरे देश, बुरी जीविका, दुष्ट स्त्री, बुरी नदी, बुरी चीज, और बुरे भोजन के द्रव्य पण्डितको चाहिए कि, छोड़ दें। ३३।

(33). A prudent man should avoid a bad place of residence, bad impulses, a bad wife, a bad river, bad things and bad food.

**ऋणशेषः इति ।** अन्वयः । यस्मात् ऋणशेषः अग्निशेषः, तथा एव च व्याधिशेषः पुनः च वर्द्धते, तस्मात् ( एतेषां ) शेषं न कारयेत् । ३४ ।

व्याख्या । यस्मात् ( हेतौ ५मी ) ऋणशेषः=ऋणानां ( ६तत् ) शेषः शिष्यते इति शेषः ऋणस्य अधिकांशं परिशोध्य अवशिष्टं अल्पमपि ऋणं ( कर्त्ता ) पुनः च=भूयः एव ( अव्य ) वर्द्धते=वृद्धिं प्राप्नोति कुसीदेन द्विगुणः त्रिगुणः वा भवति इत्यर्थः ( वृध-धा+लट, क्रिया ) अग्निशेषः च=अग्नेः ( ६तत् ) शेषः निर्वापणान्तरं अवशिष्टः स्वल्पः अपि अग्निः ( कर्त्ता , पुनः च=तृणकाष्ठादिसंयोगेन भूय एव च ( अव्य ) वर्द्धते ( क्रिया ) तथा एव च तादृशः एव ( तद्-श+था, अव्य ) व्याधिशेषः= ( वि आ-धा+कि ) व्याधिः रोगः तस्य ( ६तत् ) शेषः औषधादिभिः उपशान्तप्रायः इत्यर्थः ( कर्त्ता ) पुनः च=कुपथ्यभोजनादिना भूय एव च वर्द्धते ( क्रिया ) तस्मात् (हेतौ ५मी ) एतेषां ऋणादिनां शेषं ( शिष-धा-+अल कर्म्म ) न कारयेत्=न रचयेत एतान् समूलमुन्मूलयेत् इत्यर्थः ( कृ-धा+णिच+विधि, क्रिया ) । ३४ ॥

वाच्यान्तरं । ऋणशेषेण अग्निशेषेण व्याधिशेषेण वर्द्धते, शेषः न कार्य्येत । ३४ ॥

ऋण का शेष, अग्नि का शेष, और रोग का शेष फिर बढ़ता है, इस लिए इन का शेष नहीं राखना चाहिए । ३४ ॥

(34). As a debt not fully discharged, a fire not wholly extinguished, and a disease not perfectly cured, gather strength again, you should not allow any of these to outstand.

**अस्तीति ।** अन्वयः । पुत्रः, भृत्यः तथा एव च भार्य्या यस्य वशे अस्ति, अभावे सति ( यस्य ) सन्तोषः ( भवति ) असौ महीतले स्वर्गस्थः । ३५॥

व्याख्या। पुत्रः=पुतः त्रायते ( पुत् त्रै-धा+ड ) तनयः ( कर्त्ता ) यस्य=जनस्य ( सर्व्व-सम्ब ) वशे=अधीने ( अधि ) अस्ति=तिष्ठति यस्य पुत्रः आज्ञाप्रतिपालकः ( अस्-धा+लट, क्रिया ) भृत्यः च=भ्रियते असौ ( भृ-धा+क्यप ) सेवकः ( कर्त्ता ) यस्य वशे अस्ति ( क्रिया ) भार्य्या= भ्रियते असौ ( भृ-धा+ण्यत् स्त्रियां आप ) स्त्री ( कर्त्ता ) यस्य वशे अस्ति ( क्रिया )। अभावे=भावः स्थितिः ( भू धा+घञ् ) न भावः ( नङ् तत् ) तस्मिन् विभवक्षये इत्यर्थः ( भावाधिकरणे ७मी ) सति ( अस्-धा+ शतृ, अधि-विण ) सन्तोषः=प्रीतिः (सम्-तुष-धा+अल, कर्त्ता ) भवतीति शेषः। असौ=जनः ( सर्व्व-कर्त्ता-१मा) महीतले=मह्याः तलं (६तत ) तस्मिन् ( अधि ) स्वर्गस्थः=स्वर्गे तिष्ठति यः सः ( स्वर्ग-स्था-धा+ड ) यस्य पुत्रो निदेशे स्थितः भृत्यश्चाज्ञावर्त्ती भार्य्या च वशवर्त्तिनी सः पृथिवीस्थोऽपि स्वर्गसुखं अनुभवति इति सरलार्थः। ३५॥

वाच्यान्तरं। पुत्रेण भृत्येन भार्य्यया भूयते, सन्तोषेण भूयते, अमुना स्वर्गस्थेन भूयते। ३५॥

जिस के बस में पुत्र, भृत्य और भार्य्या रहती है, और जिस के कुछ न होने पर भी सन्तोष रहता है, वह पृथ्वी पर भी स्वर्ग का सुख पाता है। ३५॥

(35). He that has his son, servant and wife under his control is happy, though in want; he enjoys the happiness of Heaven in this world.

दुष्टेति। अन्वयः। ( यस्य ) भार्य्या दुष्टा, मित्रं शठं, भृत्यः च उत्तरदायक. ससर्पे गृहे च वासः (तस्य) मृत्युः एव संशयः न। ३६।

व्याख्या। यस्य जनस्य भार्य्या—स्त्री ( प्रातिपदिकार्थे-१मा) दुष्टा= व्यभिचारादिदोषयुक्ता अपतिव्रता अप्रियवादिनी च ( दुष-धा+क्त, १मा-विण ) यस्य मित्रं=मित्रावि ( मिद्-धा+र ) बन्धुः ( १मा )

शठं=कपटि (१मा विश) भृत्यः च (भृ धा+क्यप्) सेवकः (१मा) उत्तरदायकः=ददाति यः सः (दा-धा+ण्वुल) उत्तरस्य (६तत्) दायकः अनाश्रावकः (१मा-विश), ससर्पे=सर्पेण सह वर्त्तमानं (बहुव्री), तस्मिन् (अधि-विश) गृहे (अधि) वासः=अवस्थानं (वस्-धा+घञ्, कर्त्ता), तस्य जनस्य मृत्युः एव=मरणं एव (प्रातिपदिकार्थे-१मा) संशयः न=सन्देहः न (सम्-शी-धा+अल, १मा) दुष्टभार्य्यादयः सर्पतुल्याः इति भावः। ३६।

दुष्ट भार्य्या कपटी मित्र, और जवाब देनेवाला नौकर, ऐसे घरमें बसना, जिस में सर्प है, मौत है, इन मे सन्देह नहीं। ३६॥

(36). It is certain death to a man to have a viceous wife, deceitful friend, an impertinent servant and a residence in a house infested with serpents.

**मातेति।** अन्वयः। यस्य गृहे माता नास्ति, भार्य्या च अप्रियवादिनी, तेन अरण्यं गन्तव्यं (तस्य) यथा अरण्यं तथा गृहं। ३७।

व्याख्या। यस्य=जनस्य (सम्ब) गृहे (अधि) माता=जननी (मा-धा+तृच, कर्त्ता) न अस्ति (क्रिया) यः मातृहीनः इत्यर्थः, यस्य भार्य्या च=स्त्री च (प्रातिपदिकार्थे-१मा) अप्रियवादिनी=अप्रियं वदति या सा (१मा विश), तेन=जनेन (सर्व्व-कर्त्ता-३या) अरण्यं=वनं (कर्म्म-१मा) गन्तव्यं=यातव्यं तस्य वनगमनमुचितमित्यर्थः (गम धा+कर्म्मणि-तव्य, क्रिया), तस्य यथा=यादृशं (अव्य-१मा विश) अरण्यं=वनं (प्रातिपदिकार्थे १मा) तथा=तादृशं (तद्-श+था-अव्य-१मा-विश) गृहं (प्रातिपदिकार्थे-१मा) तस्य गृहं अरण्येन तुल्यं गृहे तस्य किञ्चिदपि सुखं नास्ति इति भावः। ३७।

वाच्यान्तरं। माता न भूयते, सः अरण्यं गच्छेत्। ३७।

जिसके घर में माता नहीं, और स्त्री अप्रिय बोलनेवाली हो, उसे

वन में जाना चाहिए, क्यों कि उस के लिए घर और जङ्गल बराबर है। ३७।

(37). He who has not his mother in his house, and whose wife is a shrew, should take to retirement, for his house is as a desolate world to him.

**कोकिलानामिति।** अन्वयः। स्वरः कोकिलानां रूपं, पतिव्रतं नारीणां रूपं, विद्या कुरूपाणां रूपं, क्षमा तपस्विनां रूपम्। ३८।

व्याख्या। स्वरः=मधुरकण्ठरवः (प्रातिपदिकार्थे-१मा) कोकिलानां=कोकिलपक्षिणां (सम्ब) रूपं=सुश्रीकता लोकरञ्जनहेतुः इति यावत् (१मा-विण), पतिव्रतं=पतिरेव व्रतं स्वामिसेवादिकं (१मा) नारीणां=रमणीनां (सम्ब) रूपं (१मा-विण) विद्या=शास्त्राध्ययनादिजनितं ज्ञानं (१मा) कुरूपाणां=कुत्सितं रूपं येषां (बहुव्री) असुन्दराणां जनानां (सम्ब) रूपं (१मा) क्षमा=तितिक्षा (१मा) तपस्विनां=तपः विद्यते येषां (तपस्-अ+विण) ते तेषां मुनीनां (सम्ब) रूपं (१मा विण)। यथा कृष्णवर्णः कोकिलः मधुरस्वरवान् न स्यात् चेत् तर्हि कस्यचित् चित्तं आकर्षितुं न शक्नुयात्, तथा सुन्दरी अपि नारी यदि पतिव्रता न भवेत् तर्हि स्वामिनः चित्तं रञ्जयितुं न शक्नुयात्, तद्वत् विद्याहीनाः तपस्विनश्च इति विवृतार्थः। ३८।

कोकिल का रूप स्वर, पतिसेवा स्त्री का रूप, कुरूप का रूप विद्या, और तपस्वियों का रूप क्षमा है। ३८।

(38). The attraction of swallows lies in their voice, the attraction of women lies in their devotion to husbands, the attraction of the ugly looking lies in their learning, the attraction of devotees lies in forgiveness.

**अविद्येति।** अन्वयः। अविद्याजीवनं शून्यं, दिक् अबान्धवा चेत् (सा) शून्या, गृहं पुत्रहीनं (चेत्) (तत्) शून्यं, दरिद्रता सर्वशून्या। ३९।

व्याख्या। अविद्याजीवनं=न विद्यया (३तत्) उपलक्षितं (कर्म्मधा) जीवनं (अविद्यं जीवनं इति पाठे तु, नास्ति विद्या यस्मिन् तत् अविद्यं (बहुव्री, जीवनं इत्यस्य-विण) विद्याशून्यजीवितं (प्रातिपदिकार्थे-१मा) शून्यं=वृथा असारं इत्यर्थः (१मा विण), दिक् (कर्त्ता-१मा) अबान्धवा=नास्ति बान्धवः यस्यां सा (बहुव्री, कर्त्ती-विण) चेत्=यदि (अव्य) भवतीति शेषः, यस्यां दिशि बान्धवाः न सन्ति इत्यर्थः, (१मा) शून्या=वृथा जनरहिता इव भाति इत्यर्थः (१मा-विण) गृहं (कर्त्ता-१मा) पुत्रहीनं चेत्=पुत्रेण (३तत्) हीनं (हा धा+क्त कर्त्ता-विण) पुत्रशून्यं चेत् भवतीति शेषः, तत् गृहं शून्यं=अरण्यमिव इत्यर्थः (विण)। दरिद्रता=दरिद्रस्य भावः (ता प्रत्ययः) निर्धनत्वं (१मा) सर्व्वशून्या=सर्व्वैः (३तत्) शून्या (१मा-विण) यस्य धनं नास्ति तस्य न किञ्चिदपि अस्ति इत्यर्थः। ३९।

वेविद्या का जीवन शून्य है, बान्धव न हो तो दिशा शून्य है, पुत्र न हो तो घर शून्य है, और दरिद्रता हो तो सब शून्य है। ३९।

(39). Want of education makes life a void ; absence of friends makes a quarter desolute ; want of children makes a house a desert ; want of money makes a void of all.

गुरुरिति। अन्वयः। अग्निः द्विजातीनां गुरुः, ब्राह्मणः वर्णानां गुरुः, पतिः स्त्रीणां एकः गुरुः, सर्व्वत्र अभ्यागतः गुरुः। ४०।

व्याख्या। अग्निः=वह्निः (प्रातिपदिकार्थे-१मा) द्विजातीनां=द्वे जाती येषां (बहुव्री, जन्मना जायते शूद्रः संस्कारात् द्विज उच्यते। मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जीबन्धनात्, ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः, इति याज्ञवल्क्याः) तेषां द्विजन्मनां ब्राह्मणक्षत्रविशां (सम्ब) गुरुः=पूजास्थानं उपास्यः इति यावत् (१मा-विण), ब्राह्मणः – ब्रह्म वेदं वेत्ति अधीते वा [illegible] भूदेवः इत्यर्थः (१मा) वर्णानां=ब्राह्मणक्षत्रिय-

वैश्यशूद्राणां ( सम्ब, वर्णाः स्युः ब्राह्मणादयः इत्यमरः) गुरुः ( १मा विध) पतिः=पाति पालयति यः सः ( पा धा+क्ति ) भर्त्ता ( १मा ) स्त्रीणां= रमणीनां ( सम्ब ) एकः=अद्वितीयं ( गुरुः इत्यस्य-विण ) गुरुः, स्वामिनि प्रीतिः तदाराधनं हि स्त्रीणां उपासना, तासां अन्यः उपास्यः नास्ति इति भावः। अभ्यागतः=अतिथिः ( अभि-आ+गम धा+कर्त्तरि-क्त-१मा ) सर्व्वत्र=सर्व्वस्मिन् स्थाने काले वा ( अधि-अव्य ) गुरुः ( १मा-विण ) सर्व्वेषामिति शेषः, हीनवर्णोऽपि उत्तमवर्णस्य गृहं आगतः यथायोग्यं पूजनीयः इति भावः। ४०।

ब्राह्मणों के गुरु अग्नि, वर्णों का गुरु ब्राह्मण, स्त्रियों का गुरु पति, और अभ्यागत सभों का गुरु है। ४०॥

(40). Fire is an object of worship to the twice-born cast (Brahmin). the Brahmins deserve worship from the other castes, husband is an object of worship to woman, guest is an object of worship everywhere.

अतिदर्पेऽति। अन्वयः। अतिदर्पे लङ्का हता, अतिमाने च कौरवाः ( हताः ), अतिदाने बलिः बद्धः, अति सर्व्वं वर्जयेत्। ४१।

व्याख्या। अतिदर्पे=अति दर्पः ( कर्म्मधा दृप धा+अल ) तस्मिन् अत्यहङ्कारे सति ( भावाधिकरणे ७मी ) लङ्का=तन्नामकद्वीपः रावण-राजधानी लक्षणया तस्याः राजा रावणः इत्यर्थः ( कर्म्म-१मा ) हता= विनाशिता ( हन-धा+कर्म्मणि-क्त, क्रिया ) रामेण इति शेषः। त्रिभुवन-पराजयदर्पितः "स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिः भुजैः" इत्येवं साहङ्कारवाक्यं ब्रुवन् नारायणावतारं राममपि अवज्ञाय सीतां जहार, ततः रामः वानरैः सह सपुत्रं रावणं जघान इति रामायणकथा अनुसन्धेया। अतिमाने=अत्यभिमाने सति ( आध-७मी, मन धा+घञ् ) कौरवाः= कुरोः अपत्यानि पुमांसः ( कुरु-श्र+षण् ) कुरुवंशोद्भवाः दुर्य्योधनादयः

धृतराष्ट्रपुत्राः ( कर्म-१मा ) हताः इति शेषः, युधिष्ठिरस्य राजसूये यज्ञे जले स्थलभ्रमं स्थले जलभ्रमं प्राचीरे शून्यभ्रमं विदधती स्फटिकमयी सभा मयदानवेन निर्म्मिता, तस्यां दुर्य्योधनस्य तादृशीं भ्रान्तिं निरीक्ष्य भीमः उपहसितवान् तेन अभिमानपरतन्त्रो दुर्य्योधनः द्यूतक्रीड़ायां पराजित्य पाण्डवान् निर्व्वासयामास । ततः कुरुपाण्डवयोर्महत् युद्धमभूत् । तत्र हतेषु सैन्येषु दुर्य्योधनः आत्मरक्षार्थं द्वैपायनह्रदे विवेश, ततः अभिमानी दुर्य्योधनः भीमवचनेन ह्रदात् उत्थाय गदायुद्धे भीमेन निहतः इति महाभारतीयकथा चानुसन्धेया । अतिदाने सति ( अधि-७मी ) बलिः=प्रह्लादपौत्रः विरोचनसुतः ( कर्म-१मा ) बद्धः ( बन्ध-धा+कर्म्मणि-क्त, क्रिया ) वामनेन इति शेषः । यत् येन प्रार्थ्यते तत् दातव्यं इति प्रतिश्रुत्य बलिः दाने कृतसंकल्पः अभवत्, ततः नारायणावतारेण कश्यपपुत्रेण वामनेन त्रिपादपरिमिता भूमिः प्रार्थिता,सच तस्मै तां परिश्रुतवान्, ततः वामनः एकेन पादेन सज्योतिष्कमण्डलं स्वर्गं आक्रान्तवान्, द्वितीयेन पृथिवीं, अथ तृतीयपादं बलिमस्तकोपरि स्थापयित्वा तं पातालं निनाय इति पौराणिकी कथा । अति सर्व्वं=( प्रातिपदिकार्थे-१मा ) अन्तगर्हितं =अन्ते परिणामे ( ७तत् ) निन्दितं अशुभोदर्कं परिणामविरसं इत्यर्थः ( १मा-विण ) । ४१ ।

वाच्यान्तरं । लङ्कां हतवान्, कौरवान् हतवान्, बलिं बद्धवान् । ४१ ।

अति अहङ्कार से लंका, अति अभिमान से कौरव सब मारे गए, और बहुत दान करके बलिराजा बांधे गए, सब बात की अधिकाई बहुत बुरी होती हैं । ४१ ।

(41). The Island of Lanka was ruined from too much pride ; the Kauravas were ruined from too much importance ; Bali became a close captive from too much leberality, so the excess of everything is bad.

दुर्लभमिति। अन्वयः। प्राकृतं वाक्यं दुर्लभं, क्षेमकृत् सुतः दुर्लभः, सदृशीभार्य्या दुर्लभा, प्रियः स्वजनः दुर्लभः। ४२।

व्याख्या। प्राकृतं=प्रकृतेः स्वभावात् आगतं (प्रकृत-अ+ष्ण) स्वाभाविकं यथार्थमित्यर्थः (१मा-विण) वाक्यं=उच्यते यत् तत् (वच-धा+ण्यत्) वचनं (प्रातिपदिकार्थे १मा) दुर्लभं=दुःखेन लभ्यते यत् (दुर् लभ-धा+कर्म्मणि खल) दुष्प्राप्यं विरलं इत्यर्थः सर्व्वे सत्यवादिनः न इति भावः (१मा-विण), क्षेमकृत्=क्षेमं करोति यः सः (कृ-धा+क्विप्) हितकारी (१मा-विण) सुतः=सूयते असौ (सु धा+क्त) पुत्रः (१मा) दुर्लभः=दुःखेन लभ्यते यः सः विरलः, सर्व्वे पुत्राः न पितुः हिताभिलाषिणो भवन्ति इति भावः, सदृशी समाना दृश्यन्ते असौ (समान-अ+दृश-धा+टक, सदृक दृशवतुषु इति समानस्य सः) आत्मतुल्या अनुरूपा (१मा-विण) भार्य्या=भ्रियते असौ (भृ-धा+ण्यत्, स्त्रियामाप्) स्त्री (१मा) दुर्लभा=दुःखेन लभ्यते या सा विरला सर्व्वा एव स्त्रियः न सदृशगुणवत्यो भवन्ति इति भावः (१मा-विण), प्रियः=प्रीणाति सन्तोषयति यः सः (प्री-धा+क) मनस्तुष्टिसम्पादकः (१मा-विण) स्वजनः=स्वस्य (६तत्) जनः आत्मीयजनः (१मा) दुर्लभः=विरलः आत्मीयमात्रः न प्रियो भवतीति भावः (१मा-विण) ४२॥

सच्चीवात, हित करनेवाला लड़का, अनुरूप भार्य्या, प्रिय अपने लोग दुर्लभ होते हैं। ४२॥

(42) A word truly spoken is rare, a son doing good is rare, a wife suitable in all respects, is rare, a friend, closely related, is rare.

शैले इति। अन्वयः। शैले शैले माणिक्यं न, गजे गजे मौक्तिकं न, सर्व्वत्र साधवः न, वने वने चन्दनं न। ४३॥

व्याख्या। शैले शैले=सकलपर्व्वतेषु (अधि-७मी, वीप्सायां द्विर्वचनं)*

माणिक्यं=मणिरिव कायति इति रक्तवर्णं रत्नं (मणि-कै-धा+यत्) न=न तिष्ठति, गजे गजे=सर्व्वेषु हस्तिषु (अधि-७मी) मौक्तिकं=मुक्ता-एव (स्वार्थे-षिकण्, कर्त्ता) न=न तिष्ठति, सर्व्वत्र=सर्व्वस्मिन् स्थाने (सर्व्व-श+त्र, अधि-अव्य) साधवः=धार्म्मिकाः (कर्त्ता) न=तिष्ठन्ति, वने वने=सर्व्वेषु वनेषु (अधि) चन्दनं=चन्दनवृक्षः (कर्त्ता) न=न तिष्ठति, एतानि दुर्लभानि इति भावः । ५३ ॥

वाच्यान्तरं। माणिक्येन न स्थीयते, मौक्तिकेन न स्थीयते, साधुभिः न स्थीयते, चन्दनेन न स्थीयते ४३ ॥

हर पर्व्वत पर माणिक्य नहीं होता है, हर हाथी के सिर में मोती नहीं होती, सब जगह साधु और हर वन में चन्दन नहीं मिलता। ४३।

(43. Gems cannot be had in every rock, nor pearls in every elephant : virtuous men cannot be found everywhere, nor sandal wood in every forest.

अशोच्यः। प्राज्ञः निर्धनः (अपि) अशोच्यः, (जनः) पण्डित-बान्धवः अशोच्यः। पुत्रपौत्रप्रतिष्ठिता नारी विधवा (अपि) अशोच्या । ४४ ।

व्याख्या। प्राज्ञः=जानाति यः सः ज्ञः (ज्ञा-धा+क) प्रकृष्टः ज्ञः (कर्म्मधा) प्रज्ञः, सएव (स्वार्थे-षण्) प्राज्ञः पण्डितः (कर्म्म-१मा) निर्धनः=नास्ति धनं यस्य (वहुव्री) धनरहितः अपि (कर्म्म-विण) अशोच्यः=शोकस्य अयोग्यः (शुच-धा+यत्, क्रिया) दरिद्रो हि सर्व्वेषां शोकविषयो भवति, प्राज्ञस्य प्रज्ञा एव धनं, तत्प्रभावात् सः शोकार्हो न इति भावः। पण्डितबान्धवः=पण्डितः बान्धवः यस्य (वहुव्री) सः पण्डितसहायवान् जनः इति शेषः (कर्त्ता) अशोच्यः=शोकस्य अयोग्यः (क्रिया) सः पण्डितानां सहायेन सर्व्वा विपदः उत्तरति इति भावः। पुत्रपौत्रप्रतिष्ठिता=पुत्रस्य अपत्यं पुमान् पौत्रः (पुत्र-श+षण्) पुत्राश्च पौत्राश्च (द्वन्द्व) तैः प्रतिष्ठिता (प्रति-स्था-धा+क्त) सत्पुत्रत्वेन सत्पौत्र-

त्वेन च विख्याता (कर्म्म-विण) नारी=रमणी (कर्म-१मा) विधवा=विगतः मृतः धवः स्वामी यस्याः (बहुव्री) मृतभर्त्तृका अपि (कर्म्म विण) अशोच्या=शोकस्य अयोग्या (क्रिया) सर्व्वत्र लोकैः इति कर्त्तृपदमध्याहार्य्यं। सर्व्वे विधवायै शोचन्ति, सत्पुत्रपौत्रान्विता तु न तथा पुत्रपौत्रादिभिः तस्याः अशनभरणादिसम्भवात् इति भावः। ४४॥

वाच्यान्तरं। निर्धनं प्राज्ञं न शोचेयुः पण्डितवान्धवं न शोचेयुः पुत्रपौत्रप्रतिष्ठितां विधवां नारीं न शोचेयुः। ४४।

निर्धन पंडित, और ऐसे मनुष्य के लिए जिस के बान्धव पंडित हों, और एसी विधवा नारी के लिए शोक नहीं करना चाहिए, जिस के पुत्र पौत्र हों। ४४।

(44) You need not pity a poor man who is wise, one who has a wise man for his friend, nor a widow with sons and grandsons to look after her.

**कुलीनैरिति।** अन्वयः। कुलीनैः सह सम्पर्कं, पण्डितैः सह मित्रतां, ज्ञातिभिः समं मेलं च कुर्व्वाणः (जनः) न विनश्यति। ४५॥

व्याख्या। कुलीनैः=कुलं=सद्वंशः तस्मिन् जायते ये ते (कुल-श +ईन) अथवा कुलं=आचारादिनवगुणवत्वं (आचारो विनयो विद्या प्रतिष्ठा तीर्थदर्शनं, निष्ठावृत्तिः तपो दानं नवधा कुललक्षणं) तत् विद्यते येषां तैः (सहयोगे-३या) सह=समं (अव्य) सम्पर्कं=कुटुम्बितां (सम्-पृच्-धा+घञ कर्म्म) कुर्व्वाणः=विदधानः (कृ-धा+कर्त्तरि-शानच कर्त्ता-विण) पण्डितैः सह=विदग्धैः सार्द्धं (सहयोगे-३या) मित्रतां=बन्धुत्वं (कर्म्म) कुर्व्वाणः (कर्त्ता-विण) ज्ञातिभिः समं=सगोत्रजैः सह (समम् योगे ३या) मेलं=मेलनं सद्भावं इत्यर्थः (कर्म्म) कुर्व्वाणः जनः इति शेषः (कर्त्ता) न विनश्यति=न अवसीदति (वि-नश धा+कर्त्तरि-

लट, क्रिया ) मुक्तिमिच्छता अनेन एतानि संग्रहितव्यानि इति भावः ४५ ॥

वाक्यान्तरं । कुर्व्वाणेन अनेन न विनश्यते । ४५ ॥

कुलीन के साथ सम्बन्ध, पण्डितों के साथ मित्रता, और ज्ञातियों के साथ मेल करने वाले का विनाश नहीं होता ४५ ॥

(45). He who forms relationship with persons of high and respectable family, forms intimacy with wise men, and union with his agnates, never comes to grief.

**कष्टेति** । अन्वयः । पराधीना वृत्तिः कष्टा, निराश्रयः वासः कष्टः, निर्धनः व्यवसायः च ( कष्टः ) दरिद्रता सर्व्वकष्टा । ४६ ॥

व्याख्या । पराधीना=परस्य ( ६तत् ) अधीना परवशा ( १मा-विश ) वृत्तिः जीवनयापनं परस्य सेवालब्धेन वेतनेन आत्मपोषणमिति यावत् ( वृत-धा+क्ति, प्रातिपदिकार्थे-१मा ) कष्टा=क्लेशप्रदा ( १मा-विश ), निर्धनः=नास्ति धनं यस्मिन् ( बहुव्रो ) सः धनशून्यः (१मा-विश) व्यवसायः=वाणिज्यं ( वि-अव सो-धा+घञ, १मा ) कष्टः ( १मा-विश ) दरिद्रता=दरिद्रस्य भावः निर्धनत्वं (१मा) सर्व्वकष्टा=सर्व्वेषु विषयेषु (७मी) कष्टा क्लेशप्रदा (१मा विश) । ४६ ।

पराधीन वृत्ति, बेआश्रय के वास करना और बे धन का व्योपार कष्ट देता है, दरिद्रता सब से जियादे कष्ट देनेवाली है । ४६ ॥

(46). Bitter is a life of dependence, bitter is living without protection, bitter is trade without capital, proverty is the bitterest of all.

**दुर्व्वलस्येति** । अन्वयः । राजा दुर्व्वलस्य बलं, रोदनं बालानां बलं, मौनित्वं मूर्खस्य बलं, अनृतं चौरस्य बलं ४७ ॥

व्याख्या । राजा भूपतिः शास्ता इति यावत् ( प्रातिपदिकार्थे-१मा)

दुर्बलस्य=शक्तिशून्यजनस्य आत्मरक्षणे असमर्थस्य इति यावत् (सम्ब) वलं=शक्तिः रक्षकः इत्यर्थः (१मा-विधेय-विण), रोदनं=क्रन्दनं (रुद-धा भावे-ल्युट, १मा) बालानां=शिशूनां (सम्ब) वलं=शक्तिः रुदित्वा सर्व्वाणि अभीप्सितानि लभन्ते इति भावः (१मा-विण), मौनित्वं=मौनिनः भावः वाक्राहित्यं किञ्चिदपि न कथनं इत्यर्थः (१मा) मूर्खस्य=अज्ञस्य (सम्ब) वलं (१मा-विण) तावच्च शोभते मूर्खः यावत् किञ्चित् न भाषते इति भावः। अनृतं=ऋतं सत्यं न ऋतं (नञ्तत्पुरुष) मिथ्याकथनं (१मा) चौराणां=चोरयन्ति ये ते चोराः (चुर-धा+अच्) चोराएव चौराः (स्वार्थे अण) तेषां तस्कराणां (सम्ब) वलं, तस्करा हि मिथ्या-वचनेन जीविकां यापयन्ति इति भावः ४७॥

दुर्व्वल का राजा, बालकों का रोना, मूर्खों का मौन होना और चोरों का झूट बोलना वल हैं। ४७॥

(47). King protects the weak, weeping protects the children, silence protects the illiterate, falsehood protects the thieves.

यः इति। अन्वयः। यः (जनः) ध्रुवाणि परित्यज्य अध्रुवं परिषेवते, तस्य ध्रुवाणि नश्यन्ति अध्रुवं नष्टं एव हि। ४८॥

व्याख्या। यः जनः (सर्व्व-कर्त्ता) ध्रुवाणि=निश्चितानि (कर्म्म-ध्रु-धा+अच, ध्रुवः शङ्कौ हरे विष्णौ वटे चौत्तानपादजे वसुयोगभिदोः पुंसि क्लीवं निश्चिततर्कयोः इति मेदिनी) परित्यज्य=विहाय (परि-त्यज-धा+ल्यप, अव्य) अध्रुवं=अनिश्चितं वस्तु (कर्म्म) परिषेवते अवलम्बते आश्रयतीति यावत् (परि-सेव-धा+लट, क्रिया) तस्य जनस्य (सम्ब) ध्रुवाणि—(कर्त्ता) नश्यन्ति=विनष्टानि भवन्ति (नश-धा+लट, क्रिया) अध्रुवं (कर्त्ता-१मा) नष्टं=गतं (नश-धा+कर्त्तरि-क्त, क्रिया) एवाच

( निश्चितं भव्य ) अनधिगतत्वादिति भावः, दुराकाङ्क्षः अवसीदति इति निर्गलितार्थः। ४८ ॥

वाक्यान्तरं—येन अध्रुवं परिषेव्यते, ध्रुवैः नश्यते अध्रुवेण नष्टं। ४८॥

जो निश्चित को छोड़ अनिश्चित को चाहता है, उस का निश्चित नष्ट हो जाता है, अनिश्चित तो नष्ट हैं ही। ४८ ॥

(48.) He who gives up what is certain and pursues what is precarious, loses what is certain as well as what is uncertain.

कः इति। अन्वयः। समर्थानां अतिभारः कः? व्यवसायिनां दूरं किं? सविद्यानां विदेशः कः? प्रियवादिनां परः कः? । ४९ ॥

व्याख्या। समर्थानां=समर्थयन्ते ये ते ( सम्-अर्थि-धा+अच् ) शक्ताः तेषां ( सम्ब ) अतिभारः गुरुत्वं ( प्रातिपदिकार्थे-१मा ) कः= न कश्चित् इत्यर्थः ( १मा-विभ ), व्यवसायिनां=वणिजां ( सम्ब ) दूरं किं ( प्रातिपदिकार्थे-१मा ) वाणिज्यार्थे पृथिवीं पर्य्यटन्तः वणिजः किञ्चिदपि दूरं न अनुभवन्ति इत्यर्थः। सविद्यानां=विद्यया सह वर्त्तमानानां ( बहुव्री ) विदुषां विदेशः कः स्वदेशे इव ते सर्व्वत्रैव पूज्यन्ते इति भावः। प्रियवादिनां=प्रियं वदन्ति ये ते (वद-धा+णिन् ) तेषां ( सम्ब ) परः कः मधुरभाषिणां सर्व्वे एव आत्मीयाः भवन्तीति भावः। ४९ ॥

समर्थों के लिए बोझ क्या है, वणिजों के लिए दूर क्या है, विद्वानों के लिए विदेश क्या है, और प्रिय वचन बोलने वाले के लिए पर कौन है? । ४९ ॥

(49. Nothing is too hard for the energetic, no distance is too great for tradesmen, no place is strange to learned men, no one is unfriendly to those who speak pleasantly.

[illegible] । अन्वयः। इन्द्रियाणां असंयमः आपदां

पन्थाः कथितः। तज्जयः सम्पदां मार्गः (कथितः) येन इष्टः तेन गम्यतां। ५०॥

व्याख्या। इन्द्रियाणां=विषयोपभोगद्वारभूतानां चक्षुरादीनां (असंयमः इत्यस्य कर्म-६ष्ठी) असंयमः=अनिग्रहः (नञ सम-यम-धा+अल) स्रक्चन्दनादिभोग्यविषयेषु यथेच्छविचरणं (कथितः इत्यस्य कर्म-१मा) आपदां=विपदां (सम्ब) पन्थाः=मार्गः (पथिन-श्र+१मा-१व, कर्म-विधेय-विण) कथितः=उक्तः (कथि-धा+कर्मणि-क्त, क्रिया) पण्डितैः इति शेषः, तज्जयः=तेषां इन्द्रियाणां (६तत) जयः संयमः (कर्म-१मा) सम्पदां=उन्नतीनां (सम्ब) मार्गः=उपायः (कर्म-विधेय-विण), कथितः पण्डितैः इति शेषः, येन=मार्गेण (करण) इष्टं=अभिलषितं (इष-धा+भावे-क्त) तत्र गन्तुमिति शेषः। तेन=मार्गेण (करण) गम्यतां=यायतां (गम धा+भावे-लोट, क्रिया)। इन्द्रियजयमार्गेण गमनमुचितं इति भावः। ५०॥

वाच्यान्तरं। असंयमं पन्थानं कथितवन्तः, तज्जयं मार्गं कथितवन्तः। येन त्वं इष्टवान् तेन गच्छ। ५०॥

इन्द्रियों को बस न करना आपद की राह है, और उन को बस में रखना सम्पद की राह है, जिस राह से चाहो उसी राह से चलो। ५०॥

(50.) Indulgence of the passions is said to lead to danger, mastery over them is said to lead to prosperity; hence that course should be followed which is for our good.

न सेति। अन्वयः। विद्यासमः बन्धुः न च। व्याधिसमः रिपुः न च, अपत्यसमः स्नेहो न च, दैवात् परं बलं न च। ५१॥

व्याख्या। विद्यासमः=विद्यया (३तत्) समः विद्यातुल्यः (कर्त्ता-विण) बन्धुः=सुहृत् (कर्त्ता) नच=नास्ति, यथाहृशः बन्धुर्हि कदा-

चित स्तवकोचादिभिः वशीभूतः शत्रुपक्षमाश्रित्य अहितमाचरति कदाचिद्वा अभीष्टालाभे रुष्टः सन् अपकारं करोति, विद्यावन्धुस्तु न तथा इति भावः, व्याधिसमः=व्याधिना (३तत्) समः रोगतुल्यः (कर्त्ता-विश) रिपुः=शत्रुः (कर्त्ता) न च=नास्ति, अन्यादृशः रिपुः प्रसादितः कदाचित् अहिताचरणात् विरमति, व्याधिरिपुस्तु यावत् उपशमं न याति तावत् अनिष्टं करोति इति भावः। अपत्यसमः=न पतन्ति पितरः अनेन इति पुत्रदुहितृरूपसन्तानः (नञ-पत-धा+करणे-यत, अपत्यं पुत्रयोः मतं इति मेदिनी) तेन (३तत) समः अपत्यतुल्यः (कर्त्ता-विश) स्नेहो=स्नेहयति स्निग्धं करोति इति स्नेहः (स्निह-धा+णिच+पचाद्यच) स्नेहकरः पदार्थः (कर्त्ता) न च=नास्ति, इह जगति लोकः यथा अपत्याय स्पृहयति यथा अपत्यं स्नेहयति तथा अन्यत् किमपि वस्त्वन्तरं नास्ति इति भावः, दैवात्=भाग्यात (अन्यारादि-तरादिना ५मी, दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिः विधिः इत्यमरः) परं अन्यत (कर्त्ता-विश) बलं=सामार्थ्यं (कर्त्ता-१मा) न च=नास्ति, भाग्यं फलति सर्व्वत्र न विद्या न च पौरुषं इति भावः। ५१ ॥

वाच्यान्तरं। विद्यासमेन वन्धुना न च भूयते, व्याधिसमेन रिपुणा न च भूयते, अपत्यसमेन स्नेहेन न च भूयते, दैवात् परेण बलेन न च भूयते। ५१ ॥

विद्या बराबर मित्र, और रोग बराबर शत्रु नहीं हैं, अपत्य बराबर स्नेही, और दैव बराबर बल नहीं है। ५१ ॥

(51) Learning is our best friend, and disease is our worst enemy; there is no affection stronger than parental affection, no agency more powerful than chance.

**समुद्रावरणेति।** अन्वयः। भूमिः समुद्रावरणा, गृहं प्राकारावरणं, देशाः नरेन्द्रावरणाः, स्त्रियः चरित्रावरणाः। ५२ ॥

व्याख्या। भूमिः=पृथिवी (प्रातिपदिकार्थे-१मा) समुद्रावरणा= समुद्रः एव आवरणं वेष्टनं (आ-ङ-धा+ल्युट) यस्याः (बहुव्री, १मा-विभ) तेन पृथिवी दुर्लङ्घ्या इति भावः, गृहं (१मा) प्राकारावरणं= प्राकारं प्राचीरं आवरणं यस्य तत् (बहुव्री, प्राकारो वरणः सालः प्राचीरं प्रान्ततो वृतिः इत्यमरः १मा विभ) तेन चौरादयः प्रवेष्टुं न शक्नुवन्ति इति भावः, देशाः=राज्यानि (१मा-बव) नरेन्द्रावरणाः=नरेषु (७तत्) इन्द्रः राजा स एव आवरणं येषां (बहुव्री-१मा-विभ) तेन राष्ट्रविप्लवः न स्यादिति भावः, स्त्रियः=नार्य्यः (१मा-बव) चरित्रावरणाः=चारित्रं शीलं एव आवरणं यासां (बहुव्री) ताः (१मा-विभ) तेन कोऽपि धर्षयितुं न शक्नोति इति भावः। ५२॥

भूमि को समुद्र घेरे हुए है, घर चारों ओर भीत से घिरा हुआ रहता है, राजा देशों और चरित्र स्त्रियों का परिच्छद है। ५२॥

(52.) The earth is protected by ocean, a home is protected by walls, countries are protected by kings, women are protected by character.

**अवंशपतितः इति।** अन्वयः। अवंशपतितः राजा जगत् तृणवत् मन्यते, मूर्खपुत्रः पण्डितः च जगत् तृणवत् मन्यते, निर्धनेन धनं प्राप्य जगत् तृणवत् मन्यते। ५३॥

व्याख्या। अवंशपतितः=अवंशे (७तत्) पतितः (पत-धा+कर्त्तरि-क्त) नीचकुलोद्भवः (कर्त्ता-विभ) राजा=भूपतिः (कर्त्ता) जगत्= पृथिवीं लक्षणया पृथिवीवासिनं जनं (कर्म्म-२या) तृणवत्=तृणमिव (तुल्यार्थे वति, अव्य) मन्यते=मनयति (मन-धा+कर्त्तरि-लट, दिवादित्वाद् यक्) नीचवंशोद्भवः चेत् राजा भवति स सर्व्वानेव अवजानाति इति भावः। मूर्खपुत्रः=मूर्खस्य (६तत्) पुत्रः (कर्त्ता) पण्डितः= विद्वान् (पण्डा अ+इतच्, कर्त्ता-विभ) जगत्=जगत्वासिनं जनं। कर्म-

र्था ) तृणवत् तृणमिव ( अव्य ) मन्यते ( कर्त्तरि लट, क्रिया ) मूर्खस्य पुत्रश्चेत् पण्डितः भवति, सोऽपि न कमपि गणयति इति भावः, अधनेन=नास्ति धनं यस्य ( बहुव्री ) निर्धनेन जनेन ( कर्त्ता-३या ) धनं ( कर्म्म ) प्राप्य=लब्ध्वा ( प्र-आप धा+ल्यप, अव्य ) जगत्—लक्षणया जगत्वासी जनः ( कर्म्म १मा-१व ) तृणवत्=तृणतुल्यः ( अव्य ) मन्यते (मन-धा+कर्म्मणि-लट, क्रिया ) निर्धनश्चेत् धनवान् भवति, सः सर्व्वान् एव तुच्छान् मन्यते इति भावः। ५३॥

वाच्यान्तरं। अवंशपतितेन राज्ञा, मूर्खपुत्रेण पण्डितेन, निर्धनेन जगत् मन्यते। ५३॥

नीच कुल का राजा, और मूर्ख का पण्डित पुत्र, और निर्धन धनको पाके जगत् को तृण वत् समझते हैं। ५३॥

(53.) If one of low origin become a king, if the son of an illiterate become a learned one, or if a man of indigence become wealthy, every one of these looks down on the whole world.

ब्रह्महापीति। अन्वयः। यस्य विपुलं धनं अस्ति (सः) नरः ब्रह्महा अपि पूज्यः, शशिनः तुल्यवंशः अपि निर्धनः परिभूयते। ५४॥

व्याख्या। यस्य=जनस्य ( सम्ब ) विपुलं=प्रचुरं ( कर्त्ता-विण ) धनं=सम्पत् ( कर्त्ता ) अस्ति=विद्यते ( क्रिया ) सः नरः=सः मनुष्यः ( कर्त्ता ) ब्रह्महापि=ब्रह्माणं हन्ति यः सः ( ब्रह्म-हन्-धा+क्विप,=ब्रह्महन्-श+पुं-१मा-१व ) ब्राह्मणहन्ता ब्राह्मणवधरूपं महापापं कुर्व्वन्नपि सर्व्वथा घृणार्योग्योऽपि इति अपेरर्थः। पूज्यः=पूजनीयः भवतीति शेषः ( पूज-धा+कर्म्मणि—यत्), शशिनः=शशः विद्यते अस्य ( शश-इन् ) तस्य चन्द्रस्य ( तुल्ययोगे-६ष्ठी ) तुल्यवंशः—तुल्यः वंशः यस्य ( बहुव्री ) सः चन्द्रवन्निर्म्मलवंशोत्पन्नः अपि पूजनीयोऽपि इत्यर्थः ( कर्म्म-विण ) निर्धनः=नास्ति धनं यस्य ( बहुव्री ) सः दरिद्रः ( कर्म्म-१मा ) परि-

भूयते=अवज्ञायते निर्म्मलवंशोत्पन्नमपि धनहीनं जनाः अवमन्यन्ते इत्यर्थः ( परि-भू-धा+कर्म्मणि-लट, क्रिया ) अन्यैः इति कर्त्तृपदमुह्यं। जगति धनमेव मानापमानहेतुरिति भावः। ५४॥

वाच्यान्तरं । ब्रह्मघ्ना नरेण पूज्येन भूयते, विपुलेन धनेन भूयते, शशिनः तुल्यवंशमपि निर्धनं परिभवन्ति ५४।

जिस के बहुत धन है, वोह जो ब्रह्म हत्या भी करे, तवभी पूज्य होता है, और जो चन्द्रमा की वरावर निर्म्मल वंश में पैदा हुया है वह निर्धन हो तो लोग उसे मानते नहीं। ५४॥

( 54. ) A man of immense wealth, even if he be the killer of Brahmins, is respected ; one descended from a family pure like the moon is, if he be poor, disrespected.

**पुस्तकस्था इति**। अन्वयः। या विद्या पुस्तकस्था ( यत् ) धनं परहस्तगतं, कार्य्यकाले समुत्पन्ने ( सति ) सा विद्या न, तत् धनं न। ५५॥

व्याख्या। या ( सर्व्व१मा-विण ) विद्या=पाण्डित्यं ( प्रातिपदिकार्थे-१मा ) पुस्तकस्था=पुस्तके तिष्ठति या सा ( स्था-धा+ड; स्त्रियां आप ) यस्य शास्त्राणि कण्ठस्थानि न सन्ति इति भावः ( १मा-विण ) कार्य्यकाले=कार्य्यस्य ( ६तत् ) कालः तस्मिन् प्रयोजनसमये ( भावे-अधि-७मी ) समुत्पन्ने=उपस्थिते ( सम्-उत् पद-धा+क्त, अधि-विण) पुस्तक-दर्शनं विना विद्यायाः अस्फुरणेन स्वकार्य्यसाधने अशक्तत्वात् इति भावः। सा=पुस्तकस्था विद्या ( सर्व्वं प्रातिपदिकार्थे-१मा ) विद्या न=नै तथा विद्यामध्ये गणनीया निष्फला इति भावः (१मा-विण) । तथा यत् धनं= सम्पत्तिः ( १मा, परहस्तगतं=परस्य ( ६तत् ) हस्तः तं ( ६तत् गतं ( गम धा-क्त ) तत् न स्वायत्तीभूतं ( १मा-विण ). कार्य्यकाले समुत्पन्ने=

धनस्य आवश्यककाले सति ( भावे ७मी ) तत् धनं न=धनमध्ये गण-नीयं न निष्फलमिति भावः । ५५ ॥

विद्या जो पोथी में रहे, कण्ठस्थ नहो, और धन जो दूसरे के हाथ में हो, काम आ पड़ने पर न वह विद्या और न वह धन काम में आता है । ५५ ॥

(55.) That knowledge which is confined to books, that wealth which is in the hands of another is as nothing to man when the time for practical application comes.

**पादपानां इति ।** अन्वयः । वातात् पादपानां भयं, शिशिरात् पद्मानां भयं, वज्रात् पर्व्वतानां भयं, दुर्ज्जनात् साधूनां भयं । ५६ ॥

व्याख्या । वातात्=वाति यः सः ( वा-धा+क्त ) पवनः तस्मात् प्रबलझटिकायाः इत्यर्थः, (भीत्यर्थानां भयहेतुः इति अपा-५मी एवं सर्व्वत्र) पादपानां=पादैः पिबन्ति ये ते ( पाद-पा-धा+ड ) तेषां वृक्षाणां (सम्ब) भयं ( कर्त्ता ) भवेत् इति शेषः ( क्रिया, एवं सर्व्वत्र ), प्रबलझंझावातेन वृक्षाः भग्नाः भवन्ति इति भावः । शिशिरात=नीहारात् हिमपातात् इति यावत् ( पूर्व्ववत्-५मी ) पद्मानां ( सम्ब ) भयं ( पूर्व्ववत् ), हेमन्ते पद्मानि नश्यन्ति इति भावः, वज्रात=वज्रपतनात् ( पूर्व्ववत्-५मी ) पर्व्वतानां ( सम्ब ) भयं ( पूर्व्ववत् ), अन्यस्मात् कस्मादपि पर्व्वतानां न कापि क्षतिः, वज्राघातेन ते विदीर्य्यन्ति इति भावः । दुर्जनात्=दुः दुष्टः ( कर्म्मधा ) जनः तस्मात् असाधुसकाशात् ( पूर्व्ववत-५मी ) साधूनां—सज्जनानां ( सम्ब ) भयं ( पूर्व्ववत ) दुर्जनाः साधूनां गुणोत्कर्षं न सहन्ते इति भावः । ५६ ॥

वाच्यान्तरं । भयेन भूयेत । ५६ ॥

पेड़ों को हवा से, कमलों को हिम से, पर्व्वतों को वज्र से और साधुओं को दुर्ज्जन से डर होता है। ५६ ॥

(56.) Trees are in danger of falling down from storm, lilies are in danger of withering from dew, mountains are in danger of broken by thunder, good men are in danger of being troubled by rogues.

प्राज्ञे इति। अन्वयः। प्राज्ञे नियोज्यमाने तु राज्ञः यशः स्वर्गनिवासः च विपुलः धनागमः च त्रयः गुणाः सन्ति। ५७ ॥

व्याख्या। प्राज्ञे = विदुषि पण्डिते इत्यर्थः नियोज्यमाने=प्रतिष्ठाप्यमाने राजकर्म्मचारिषु पण्डितेषु सतसु इत्यर्थः (नि-युज-धा+णिच्-कर्म्मणि शानच, अधि-विण) राज्ञः=भूपतेः (राजन्-श+६ष्ठी, सम्ब) यशः=गणयाहिताऽरूपा सुख्यातिः (कर्त्ता-विण-१मा) स्वर्गनिवासः= स्वर्गे (७तत्) निवासः न्यायतः प्रजापालनादित्यर्थः (नि-वस-धा+घञ्, कर्त्ता विण) प्राशाधिकारा हि मूर्खाः प्रजाः पीड़यन्ति इति भावः। विपुलः=प्रचुरः (विण) धनागमः=धनानां (६तत्) आगमः सम्पत्तिवृद्धिः करणाशिः सौकर्य्यादित्यर्थः (कर्त्ता-विण) त्रयः गुणाः (कर्त्ता) सन्ति= भवन्ति (अस-धा+लट, क्रिया) पण्डितसहायः राजा इह परत्र च सुखी स्यात् इति भावः। ५७ ॥

वाच्यान्तरं। यशसा स्वर्गनिवासेन विपुलेन धनागमेन च त्रिभिः-गुणैः भूयते। ५७ ॥

जो राजा पण्डित को राजकार्य्य में नियुक्त करे तो राजा के यश स्वर्ग में वास और प्रचुर धन प्राप्ति यह तीन गुण होते है। ५७ ॥

(57.) Threefold are the advantages of a king, from securing the services of wisemen, namely, fame, abode in heaven, and accession to immense wealth.

**मूर्खे इति।** अन्वयः। मूर्खे नियोज्यमाने तु महीपतेः अयशः च अर्थनाशः च तथा नरके गमनं त्रयः दोषाः ( भवन्ति )। ५८ ॥

व्याख्या। मूर्खे=राजकार्य्यानभिज्ञे (भावाधिकरण) नियोज्यमाने राजकार्य्येषु प्रतिष्ठाप्यमाने सति तु ( अधि-विश ) महीपतेः=मह्याः ( ६तत् ) पतिः तस्य राज्ञः ( सम्ब )=अयशः अख्यातिः नीतिशास्त्रान-भिज्ञानां मूढ़ानां अयथादण्डविधानात् इत्यर्थः, अर्थनाशः च=अर्थानां ( ६तत् ) नाशः ( नश-धा+घञ् ) धनक्षयः अपरिमितव्ययादिति भावः ( कर्त्ता-विश ) तथा ( अव्य ) नरके ( अधि ) गमनं ( कर्त्ता विश ) प्रजापालनधर्म्मानुष्ठानादिति भावः त्रयः—(कर्त्ता विश ) दोषाः ( कर्त्ता) भवन्तीति शेषः। ५८ ॥

वाच्यान्तरं। अयशसा अर्थनाशेन नरके गमनेन त्रिभिः दोषैः ( भूयते )। ५८ ॥

मूर्ख को राजा राजकार्य्य में नियुक्त करे तो राजा के अयश, धन नाश, और नरक में गमन यह तीन दोष होते हैं। ५८ ॥

(58) But threefold are the disadvantages of a king from enjoying the services of illiterate men, namely, disgrace, loss of wealth, and abode in hell.

**बहुभिः इति।** अन्योन्यपक्षवर्त्तिभिः बहुभिः मूर्खसङ्घातैः मेघैः दिवाकरः इव सर्व्वे गुणाः प्रच्छाद्यन्ते। ५९ ॥

व्याख्या। अन्योन्यपक्षवर्त्तिभिः=अन्योन्यं परस्परं ( कर्म्म-व्यतिहारे द्विर्वचनं, बहुलग्रहणात् न समासवत्, असमासभावपक्षे पूर्व्वपदस्य सुप् ) प्रति पक्षानां वर्त्तिरिव वृत्तिः येषां ते ( बहुव्री ) तैः परस्परं प्रति असहा-चरणं कुर्व्वद्भिः मलिनवृत्तिभिरित्यभिप्रायः ( कर्त्ता-विश ) बहुभिः=अनेकैः ( कर्त्ता विश ) मूर्खसङ्घातैः=मूर्खाणां ( ६तत् ) सङ्घाताः=समूहाः (सम्-हन धा+घञ्, समूहः निवहव्यूहसन्दोहविसरव्रजाः, स्तोमौघनिकरव्रात-

चारसंघातसंबधाः इत्यमरः ) तैः ( कर्त्ता-३या ) मेघैः=मलिनाकार-रित्यभिप्रायः ( उपमा-कर्त्ता-३या ) दिवाकरः इव=सूर्य्यः इव ( उपमा-कर्म्म-१मा ) सर्व्वे ( सर्व्व-कर्म्म विण-१मा-३व ), गुणाः=दयादाक्षिण्या-दयः ( कर्म्म १मा ) आच्छाद्यन्ते=अन्तर्धीयन्ते (आ-च्छद्-धा+कर्म्मणि-लट, क्रिया ) मूर्खसंसर्गात् गुणाः अपि दोषायन्ते इति भावः। ५९॥

वाच्यान्तरं। बहवः मूर्खसंघाताः अन्योन्यपशुवृत्तयः प्रच्छादयन्ति सर्व्वान् गुणान् मेघाः इव दिवाकरं। ५९॥

परस्पर पशु की तरह वर्ताव करनेवाले बहुत से मूर्ख मेघ जैसे सूरज को छिपादेता है, इसी ढब से सब गुणों को ढांक देते हैं। ५९॥

(59.) By associating with a large number of illiterate persons and by dealing with one another as brutes, one has his good qualities obscured as the sun is obscured by clouds.

**असम्भाव्यमिति।** अन्वयः। शिला पानीयं तरति, वानरः गीतं गायति, प्रत्यक्षमपि दृश्यते, ( तथापि ) असम्भाव्यं न वक्तव्यं। ६०॥

व्याख्या। शिला=प्रस्तरं ( कर्त्ता ) पानीयं=पीयते यत् तत् (पा-धा=कर्म्मणि-अनीयर ) जलं ( कर्म्म-१मा ) तरति=तैलादिलघुद्रव्यवत् जलस्य उपरि तिष्ठति नतु अधः पतति इत्यर्थः ( तॄ-धा+लट्, क्रिया ) वानरः ( कर्त्ता ) गीतं=गानं ( गै-धा+भावे-क्त, कर्म्म ) गायति ( गै-धा+कर्त्तरि-लट्, क्रिया) इत्यादिवत् असम्भाव्यं चेत् प्रत्यक्षं अपि=अक्ष्णोः समीपे प्रत्यक्षं समक्षं स्वचक्षुषा इत्यर्थः ( अव्ययो ) दृश्यते=अवलोक्यते जनैः इति शेषः ( दृश-धा+कर्म्मणि लट्, क्रिया ) तथापि असम्भाव्यं =भवितुमयोग्यं अघटनीयं (न-सम्-भू-धा+ण्यत्, कर्म्म-१मा ) न वक्तव्यं =न कथयितव्यं ( वच-धा+भावे-तव्य, क्रिया ) असम्भाव्यवक्तारि न कोऽपि विश्वसिति इति भावः। ६०॥

वाच्यान्तरं—असम्भाव्यं न ब्रूयात्, पश्यति, शिलया पानीयं तीर्य्यते, वानरेण गीतं गीयते । ६० ॥

पत्थर पानी में तैरता है, और बन्दर गीत गाता है, ऐसी असम्भव बात आंखों से देख के भी कहना नहीं चाहिये । ६० ॥

( 60. ) you should never talk of impossible things, even if you see them with your own eyes, such as the floating of stones over the surface of water and singing of songs by apes.

**सुभिक्षमिति ।** अन्वयः । कृषके नित्यं सुभिक्षं, अरोगिणि नित्यं सुखं, यस्य भर्तुः भार्य्या प्रिया, तस्य गृहं नित्योत्सवं । ६१ ॥

व्याख्या । कृषके=कर्षति यः सः ( कृष-धा+ ल्युण ) तस्मिन् कृषिकर्मकारिणि जने ( अधि ) नित्यं=नियमेन नियतं वा ( नि-श्र+त्यक) सततं (अत्यन्तसंयोगे-२या) सुभिक्षं=भिक्षाणां समृद्धिः (अव्ययी) तस्य गृहे अन्नादिकष्टं न भवति इति भावः ( कर्त्ता ) स्यात् इति शेषः । अरोगिणि=न रोगः ( रुज धा+घञ् ) विद्यते तस्य (न-रोग-अ+इन् ) तस्मिन् पीड़ारहिते स्वस्थे जने ( अधि ) नित्यं ( पूर्व्ववत्-२या ) सुखं ( कर्त्ता ) स्यात् तस्य ( सर्व्व-सम्ब-विण ) भर्त्तुः=स्वामिनः ( भृ-धा+तृच्, सम्ब-६ष्ठी ) भार्य्या=पत्नी ( कर्त्ता ) प्रिया=स्नेहास्पदं गुणादिभिः स्वामिनः स्नेहं लभते इत्यर्थः ( प्री धा+क, कर्त्ता-विण ) भवतीति शेषः, तस्य=स्वामिनः ( सर्व्व-सम्ब ) गृहं ( कर्त्ता ) नित्योत्सवं=नित्यः उत्सवः यस्मिन् ( बहुव्री ) सततं आनन्दमयमित्यर्थः स्यादिति शेषः । ६१ ॥

वाच्यान्तरं । सुभिक्षेण सुखेन नित्योत्सवेन भूयेत । ६१ ॥

कृषाण के यहां सदा सुभिक्ष, और निरोग को सदा सुख होता है, और जिसकी स्त्री प्यारी होवी है उस के घर में नित उत्सव रहता है ।६१॥

( 61. ) A cultivater has always a good supply of food, a man without disease, is always happy ; he whose wife is beloved, has his home ever full of festivity.

हेला इति। अन्वयः। हेला कार्य्यनाशाय, निर्धनं बुद्धिनाशाय, याच्ञा माननाशाय, भोजनं कुलनाशाय स्यात्। ६२ ॥

व्याख्या। हेला-अनादरः कार्य्येषु अवज्ञा (कर्त्ता) कार्य्यनाशाय=कार्य्यस्य (कृ-धा+ण्यत्, ६तत्) नाशः तस्मै ध्वंसाय (नश्-धा+घञ्, तादर्थ्ये-४र्थी एवं सर्व्वत्र) स्यात्=भवेत् अवहेलया कार्य्यसिद्धिः न भवति इत्यर्थः (अस्-धा+विधि, क्रिया), निर्धनं=धनस्य अभावः (अव्ययी) दारिद्र्यं (कर्त्ता) बुद्धिनाशाय (पूर्व्ववत् समासः चतुर्थी च) स्यात् (क्रिया) अन्नचिन्तया बुद्धिर्न स्फुरति इति भावः, याच्ञा=प्रार्थना भिक्षा (याच्-धा+न, कर्त्ता) माननाशाय (पूर्व्ववत्) स्यात् (क्रिया) भिक्षुकः सर्व्वत्रैव अवज्ञायते इति भावः, भोजनं=पात्रापात्रविचारविरहः भक्ष्याभक्ष्यविवेकशून्यतया आहारः वा (भुज-धा+भावे-ल्युट, कर्त्ता) कुलनाशाय=कौलिन्यध्वंसाय (पूर्व्ववत्) स्यात् (क्रिया) यत्रकुत्रचित् भक्ष्याभक्ष्यभोजनं पातित्यजनकं इत्यर्थः। ६२ ॥

वाच्यान्तरं। हेलया, निर्धनेन, भोजनेन भूयते। ६२ ॥

अवज्ञा से कार्य्य नाश, दरिद्रता से बुद्धिनाश, याच्ञा से मानहानि, और भोजन के दोष से कुल का नाश होता है। ६२ ॥

(62) Laziness mars our success in action ; poverty mars our mental powers ; begging injures our respectability ; indiscriminate eating takes away our family distinction.

सेवितव्यः इति। अन्वयः। फलच्छायासमन्वितः महावृक्षः सेवितव्यः, यदि दैवात् फलं नास्ति, छाया केन निवार्य्यते। ६३ ॥

व्याख्या। फलच्छायासमन्वितः=फलं च छाया च (द्वन्द्व) ताभ्यां समन्वितः युक्तः (सम्-अनु-इ-धा+कर्म्मणि-क्त) यस्य वृक्षस्य फलं च छाया च अस्ति (कर्म्म-विण) एतादृशः महावृक्षः=महान् चासौ (कर्म्म-धा) वृक्षश्चेति (कर्म्म-१मा) सेवितव्यः=यत्नतः आश्रयितव्यः (सेव-धा+

कर्म्मणि तव्य, क्रिया ) लोकैरिति शेषः। यदि=चेत् ( अव्य) दैवात्=हठात् ( अव्य ) अथवा देवेभ्यः आगतं ( देव-अ+षण् ) अदृष्टं भाग्यमित्यर्थः तस्मात् दुरदृष्टवशात् ( हेतौ ५मी ) फलं ( कर्त्ता ) नास्ति=न भवति ( अस-धो+लट, क्रिया ) छाया=अनातपः ( कर्म-१मा) केन=जनेन ( कर्त्ता-३या ) निवार्य्यते=प्रतिरुध्यते ( नि-वृ-धाः=णिच+कर्म्मणि-लट ) छाया तु लभ्यते एव इत्यर्थः। महाजन-सेवा कर्त्तव्या सा हि निष्फला न भवति इति भावः। ६३ ॥

वाच्यान्तरं। फलच्छायासमन्वितं महावृक्षं सेवते, फलेन न भूयते, छायां कः निवारयति। ६३ ॥

ऐसे महावृक्ष की सेवा करनी चाहिये जिस में फल और छाया दोनों हों, जो कदाचित् फल न हो तो,छाया कोई ले नहीं सक्ता। ६३ ॥

(63.) You should seek the advantage of a large tree yielding fruit and shade, if by chance fruits be wanting, none can withhold the shade.

**प्रथमे इति।** अन्वयः। प्रथमे विद्या न अर्ज्जिता, द्वितीये धनं न अर्ज्जितं, तृतीये पुण्यं न अर्ज्जितं, चतुर्थे किं करिष्यति। ६४ ॥

व्याख्या। प्रथमे=आद्ये वयसि शैशवावस्थायां इत्यर्थः ( अधि ) विद्या ( कर्म्म-१मा ) न अर्ज्जिता=न अभ्यस्ता ( अर्ज्जि-धा+कर्म्मणि-क्त, क्रिया ) येन पुरुषेण इति शेषः। द्वितीये=द्वयोः पुरणं ( निपातनात् साधु ) तस्मिन् द्वितीये वयसि यौवने इत्यर्थः ( अधि ) धनं=वित्तं (कर्म्म-१मा ) न अर्ज्जितं=न उपार्ज्जितं ( क्रिया ) येन पुरुषेण इति शेषः। तृतीये=त्रयाणां पूरणं ( पूर्व्ववत् साधु ) तस्मिन् प्रौढ़े वयसि ( अधि ) पुण्यं=पुनाति पावयति यत् तत् ( पु-धा+कर्त्तरि-यत् ) तपश्चरणादिकं सुकृतं ( कर्म्म-१मा ) न अर्ज्जितं=न सञ्चितं ( क्रिया ) येन पुरुषेण इति शेषः। चतुर्थे=चतुर्णां पूरणं ( चतुर-अ+थट ) तस्मिन् वार्द्धक्ये (अधि)

किं ( कर्म्म-२या ) करिष्यति ( क्रिया ) सः पुरुषः इति शेषः : ब्राह्मचर्य्यं गार्हस्थ्यः वानप्रस्थः भैक्षुकः इति चत्वारः आश्रमाः निर्द्दिष्टाः, तत्र प्रथमे ब्रह्मचर्य्ये विद्याभ्यासः द्वितीये गार्हस्थ्ये विषयभोगः तदर्थं धनोपार्ज्जनं च, तृतीये वानप्रस्थे तपश्चरणं चतुर्थे भैक्षुके ब्रह्मज्ञानं अवाप्य शरीरत्यागः इति निर्द्दिष्टं अतः उक्तं चतुर्थे मरणसमये किं करिष्यति इति ६४ ॥

वाच्यान्तरं। ( यः ) विद्यां नार्ज्जितवान्, ( यः ) धनं नार्ज्जितवान्, ( तेन किं करिष्यते। ६४ ॥

पहिली उम्र में विद्या, यौवन में धन, प्रौढावस्था में पुण्य अर्ज्जन नहीं किया तो बुढ़ापे में क्या करेगा। ६४ ॥

( 64. ) If learning be not acquired in the first period of life, money in the second and virtue in the third, what will a man do in the fourth ?

**कुदेशं इति।** अन्वयः। कुदेशं आसाद्य अर्थसंचयः कुतः कुपुत्रं आदाय जलाञ्जलिः कुतः कुगृहिणीं प्राप्य गृहे सुखं कुतः कुशिष्यं अध्यापयतः यशः कुतः। ६५।

व्याख्या। कुदेशं=कुत्सितः देशः ( कर्म्म-धा ) तं ( कर्म्म) आसाद्य प्राप्य गत्वा इत्यर्थः (आ-सद-णिच+ल्यप, अव्य ) अर्थसञ्चयः=अर्थानां धनानां ( ६तत् ) सञ्चयः ( सम्-चि-धा+अल ) धनसंग्रहः धनार्ज्जनमित्यर्थः ( कर्त्ता ) कुतः ( ७मी+तस्, अव्य ) सम्भवेत् इति शेषः, तत्र अर्थसञ्चयस्य आशापि नास्ति इति भावः, कुपुत्रः=कुत्सितः पुत्रः ( कर्म्म-धा ) तं मूर्खं पापिष्टं च तनयं ( कर्म्म ) आसाद्य=प्राप्य ( अव्य ) जलाञ्जलिः=जलानां ( ६तत् ) अञ्जलिः निवापाञ्जलिः तर्पणजलं इत्यर्थः कुतः=कुत्र सम्भवेत्, कुपुत्रेषु जातेषु पितरः तर्पणश्राद्धादौ निराशाः भवन्ति इति भावः। कुगृहिणीं=कुत्सिता गृहिणी ( कर्म्मधा : तां असच्चरित्रां भार्य्यां ( कर्म्म ) प्राप्य=लब्ध्वा ( प्र-आप-धा+ल्यप्, अव्य )

गृहे (अधि) सुखं (कर्त्ता) कुतः=कुत्र सम्भवेत्, तस्मात् गृहात् सुखं तिरोभवति इति भावः। कुशिष्यं=शिष्यते असौ शिष्यः (शास्-धा+कर्मणि यत्) छात्रः तं (कर्म) अध्यापयतः=पाठयतः गुरोः (अधि-इ-णिच=आपि-धा+शतृ,६ष्ठी १व) यशः=अध्यापनजन्या सुप्रतिष्ठा (कर्त्ता) कुतः=कुत्र सम्भवेत्, तत्र यशः न कदापि भवति इति भावः। अत्र वंशस्थावृत्तं। तल्लक्षणं वंशस्था जतौ जरौ ६। ७ इति पिङ्गलाचार्य्यः। ६५॥

वाच्यान्तरं। अर्थसञ्चयेन, जलाञ्जलिना, सुखेन यशसा सम्भूयेत १५॥

बुरे देश में जाके धन कैसे उपार्ज्जन हो सक्ता है, कुपुत्र के होने तर्पण का भरोसा कहां है? असती स्त्री को पाके घर में सुख कहां है? और कुशिष्य को पढ़ानेवाले को यश कहां से हो सक्ता है। ६५॥

(65.) Where is the chance of amassing wealth in a bad country? where is the chance of getting libation of water by having a bad son? where is the chance of enjoying domestic happiness by having a bad wife? where is the chance of gaining credit by having a bad pupil.

**यस्येति।** अन्वयः। यस्य स्वयं प्रज्ञा नास्ति शास्त्रं तस्य किं करोति, दर्पणः लोचनाभ्यां विहीनस्य किं करिष्यति। ६६॥

व्याख्या। यस्य=जनस्य (सम्ब) स्वयं=आत्मनः (अव्य) प्रज्ञा=बुद्धिः (प्र-ज्ञा-धा+अ, कर्त्ता) न अस्ति (क्रिया) शास्त्रं (कर्त्ता) तस्य=जनस्य (सम्ब) किं (कर्म) करोति (कृ-धा+लट, क्रिया) न किमपि कर्त्तुं शक्नोति इत्यर्थः, लोचनाभ्यां=नयनाभ्यां (हीनयोगे ३या) विहीनस्य रहितस्य (वि-हा-धा+क्त, सम्ब-विण) अन्धस्य जनस्य इत्यर्थः (सम्ब) दर्पणः=मुकुरः (कर्त्ता) किं (कर्म) करिष्यति (क्रिया) अन्धस्य दर्पणेन न किमपि फलं इत्यर्थः, यथा अन्धः चक्षुहीनात् दर्पणसत्त्वेऽपि आत्मानं निरीक्षितुं न शक्नोति, तथा निर्बुद्धिः शास्त्रं वीक्षुं न शक्नोति तस्य शास्त्रपाठेन न किमपि फलं इति सरलार्थः। ६६॥

वाच्यान्तरं। प्रज्ञया न भूयते, शास्त्रेण किं क्रियते, दर्पणेन किं करिष्यते। ६६॥

जिस के आप बुद्धि नहीं है, शास्त्र उस का क्या कर सक्ता है, अन्धे के आगे दर्पण क्या करेगा। ६६॥

(66) What good will the shastras do to that man, who himself does not possess wisdom, of what use will a looking-glass be to that man who has no eyes to see.

किमिति। अन्वयः। यत्र श्रोता न विद्यते, (तत्र) वक्तारः किं करिष्यन्ति, नग्नचपणके देशे रजकः किं करिष्यति। ६७॥

व्याख्या। यत्र=यस्मिन् देशे (अधि-अव्य) श्रोता=शृणोति यः सः (श्रु-धा+तृच, कर्त्ता) न विद्यते=न अस्ति (विद-धा+कर्त्तरि-लट, क्रिया) तत्र देशे (अधि) वक्तारः ब्रुवन्ति ये ते (ब्रू धा+तृच, १मा-बव कर्त्ता) किं (कर्म्म) करिष्यति, यत्र बोद्धा नास्ति तत्र प्रवचनेन अलं इति भावः। नग्नचपणके=चपणकाः बौद्धसन्न्यासिनः, नग्नाः चपणकाः यस्मिन् (बहुव्री) तस्मिन् (अधि-विश) देशे (अधि) रजकः=रञ्जयति यः सः (रञ्ज धा+ण्वुल्) वस्त्रधावकः (कर्त्ता) किं (कर्म्म) करिष्यति (क्रिया) यत्र वस्त्रं नास्ति तत्र रजकः किं प्रचालयिष्यति इत्यर्थः। ६७॥

वाच्यान्तरं। श्रोता न विद्यते, वक्तृभिः किं करिष्यते, केन किं करिष्यते]। ६७॥

जहां सुननेवाला नहीं है, वहां वक्ता क्या करेंगे, जिस देश में सब नंगे सन्यासी रहते हैं, धोबी वहां क्या करेगा। ६७॥

(67.) What will a speaker do in a place where there are no audience; what will a washerman do in a place where there are naked Buddha mendicants.

---

**अजरेति ।** अन्वयः । प्राज्ञः अजरामरवत् विद्यां अर्थं च चिन्तयेत्, मृत्युना केशेषु गृहीतः इव धर्म्मं आचरेत् । १ ॥

व्याख्या । प्राज्ञः=प्रज्ञायते अनया इति प्रज्ञा ( प्र-ज्ञा+करणे-ङ स्त्रियां ङीप् ) प्रज्ञा विद्यते अस्य ( प्रज्ञा-अ+अस्त्यर्थे-अण् ) प्राज्ञः बुद्धिमान् ( कर्त्ता ) अजरामरवत्=नास्ति जरा वार्द्धक्यं यस्य ( बहुव्री ) सः अजरः, न म्रियते यः इति अमरः मरणधर्म्मस्य अनधीनः ( मृ-धा+अच् ) अजरः च असौ अमरश्चेति अजरामरः ( एकस्य विशेष्यत्वविवक्षायां कर्म्मधारयः )सः इव (तुल्यार्थे-वति) अजरामरः इव (अव्य) विद्यां=आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च इति चतुर्विधा विद्या ( विद-धा+क्यप् ) तां ( कर्म्म ) धनं च ( कर्म्म ) चिन्तयेत् ( चिन्ति-धा+विधि, क्रिया ) न अहं कदापि जरां प्राप्स्यामि नापि मरिष्यामि इति चिन्तयन् बुद्धिमान् जनः विद्याभ्यासं अर्थोपार्ज्जनं च कुर्य्यात् अन्यथा वैराग्योदयात् तत्प्रवृत्तिर्न स्यात् इति भावः । मृत्युना=अन्तकेन ( गृहीतः इत्यस्य कर्त्ता-३या ) केशेषु=चिकुरेषु ( अवच्छेदे ७मी ) गृहीतः इव=धृतः इव ( ग्रह-धा+कर्म्मणि-क्त ) प्राज्ञः इति शेषः, धर्म्मं=कर्त्तव्यं ( कर्म्म ) आचरेत्=अनुतिष्ठेत् ( आ-चर-धा+विधि, क्रिया ) जीवनं नलिनीदलगतजलवत्तरलं मत्वा परलोकवन्धुं धर्म्ममेव आश्रयेत इति भावः । १ ॥

वाच्यान्तर । प्राज्ञेन विद्या अर्थः च चिन्त्येत, गृहीतेन इव धर्म्मः आचर्य्येत । १ ॥

पण्डित को चाहिए कि अपनेतई अजर और अमर समझ के विद्या और धन की चिन्ता करें और यह समझ के धर्म्मानुष्ठान करें, कि मानो यम केश पकड़ के खेंचता है । १ ॥

(1.) A prudent man should think of gaining learning and wealth as if he would never grow old nor die, and he should practice virtue as if he were seized in the hairs by death.

सर्व्वद्रव्येषु इति। अन्वयः। सर्व्वदा अहार्य्यत्वात् अनर्घत्वात् अक्षयत्वात् च विद्या एव सर्व्वद्रव्येषु अनुत्तमं द्रव्यं आहुः। २॥

व्याख्या। सर्व्वदा=सर्व्वस्मिन् काले (सर्व्व-अ+दा, अधि-अव्य) अहार्य्यत्वात्=ह्रियते जनैः अपह्रियते इति हार्य्या (हृ-धा+कर्म्मणि-ण्यत्) सा न भवति इति अहार्य्या तस्याः भावः तस्मात् (त्वप्रत्ययपरे पुम्वद्भावः, हेतौ-५मी) अनर्घत्वात्=अर्घं मूल्यं अर्हति इति अर्घ्याः (अर्घ-अ+अर्हार्थे-ष्यञ) सा न भवति अनर्घ्याः तस्याः भावः तस्मात् (पूर्व्ववत् पुम्वद्भावः, हेतौ ५मी) अक्षयत्वात्=नास्ति क्षयः ध्वंसः यस्याः सा अक्षया (वहुव्री) तस्याः भावः तस्मात् (पूर्व्ववत् पुम्वद्भावः, हेतौ ५मी) विद्याः=आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च इति चतुर्व्विधा विद्या (कर्म्म) एव (अव्य) सर्व्वद्रव्येषु=सर्व्वाणि (कर्म्म-धा) द्रव्याणि तेषु मध्ये (निर्द्धारे ७मी) अनुत्तमं=नास्ति उत्तमं (उत्-अ+तमप) यस्मात् (वहुव्री) तत् अत्युत्तमं (द्रव्यं इत्यस्य-विण) द्रव्यं=वस्तु (विधेय-कर्म्म) इति आहुः कथयन्ति पण्डिताः इति शेषः (आ+लट-१पु-३व, क्रिया)। विद्यातिरिक्तं द्रव्यं तस्करैः अपहर्त्तुं मूल्यदानेन क्रेतुं शक्यते दानेन च क्षयं याति, विद्यारूपंतु द्रव्यं न तथा अतः विद्यारूपस्य द्रव्यस्य सर्व्वोत्तमत्वं युज्यते इति भावः। २॥

वाच्यान्तरं। विद्यया अनुत्तमेन द्रव्येण (भूयते) इति उच्यते। २॥

विद्यारूप द्रव्य को सब द्रव्यों से उत्तम द्रव्य पण्डित कहते हैं, क्योंकि उसे कोई हर नहीं ले सक्ता है, वह अनमोल और अक्षय है। २॥

(2.) Of all things learning is said to be the most excellent, because it can never be stolen nor wasted, and is ever invaluable.

सङ्गमयतीति । अन्वयः । विद्या एव नीचगा अपि दुर्द्धर्षं नृपं सरित् नीचगः अपि दुर्द्धर्षं समुद्रं इव नरं सङ्गमयति, अतः परं भाग्यं ।३॥

व्याख्या । विद्या ( कर्त्री ) एव ( अव्य ) नीचगा अपि=नीचं नीचवंशोद्भवं पुरुषं गच्छति या सा अपि ( नीच-गम्-धा+ड ) नीच-वंशोद्भवः पुरुषः चेत् विद्यां अभ्यस्यति इति भावः ( कर्त्री-विण ) दुर्द्धर्षं= दुः दुःखेन धृष्यते असौ ( दुर धृष-धा+कर्म्मणि-खल ) तं अप्रधृष्यं अन्यैः अनाभगम्यं इत्यर्थः ( कर्म्म-विण ) नृपं=नॄन् मानवान् पाति पालयति यः सः ( नृ-पा-धा+ड ) तं राजानं (कर्म्म) सरित्=नदी ( उपमा कर्त्री, स्रोतस्वतीसमावाहसमावापगानदीसरित् इत्यमरः ) नीचगा अपि=नीचं निम्नस्थानं गच्छति या सा ( गम-धा+ड ) निम्नगा अपि ( कर्त्री-विण ) दुर्द्धर्षं=अन्यैः अगम्यं समुद्रं इव ( उपमा-कर्म्म ) नरं=मनुष्यं ( कर्म्म णिजन्तत्वात् द्विकर्म्मकत्वं ) सङ्गमयति=सम्मेलयति ( सम्-गम धा+ णिच+लट, क्रिया ), यथा मनुष्यः नदीमार्गेण समुद्रं गच्छति, तथा नीचवंशोद्भवः पुरुषः विद्याबलेनैव नृपेण सह बन्धुत्वं लभते इत्यर्थः अतः=अस्मात् नृपसमात् ( अपा ५मी ) परं=उत्तमं ( कर्त्री-विण ) भाग्यं=सौभाग्यं ( कर्त्री ) जायते इति शेषः । ३ ॥

वाच्यान्तरं । विद्यया नीचगया अपि दुर्द्धर्षं नृपं सरिता समुद्रं इव नरः सङ्गम्यते । ३ ॥

नीचगामिनी नदी जैसे मनुष्य को समुद्र को पंहुचाती है वैसेही नीचगामिनी विद्या भी मनुष्य को राजा के पास पंहुचती है, इस के पीछे उसका भाग्य । ३ ॥

(3.) Just as a river follows a level in its course and ultimately joins the ocean, so learning even in low origin, enables a man to have an access to the king.—The future then be his destiny.

**विद्या इति।** अन्वयः। विद्या विनयं ददाति, (लोकः) विनयात् पात्रतां याति, पात्रत्वात् धनं आप्नोति, धनात् धर्म्मं (आप्नोति) ततः सुखं (आप्नोति। ४॥

व्याख्या। विद्या (कर्त्ता-१मा) विनयं (कर्म्म) ददाति (क्रिया) लोकाय इति शेषः, यः यत्नतः विद्यां अभ्यस्यति सः विनयी भवति इत्यर्थः। विनयात् (हेतौ ५मी) पात्रतां=(कर्म्म) याति=प्राप्नोति (क्रिया) लोकः इति शेषः, यः विनयी भवति सर्व्वे लोकाः तं सत्पात्रं मन्यन्ते इत्यर्थः, पात्रत्वात् (हेतौ ५मी) धनं (कर्म्म) आप्नोति=लभते लोकः इति शेषः (आप-धा+लट, क्रिया) सज्जनो हि विद्याविनयादिगुणवत्त्वात् लोकैः गुरुणि कार्य्ये सादरं नियुज्यते, तेन च असौ धनं उपार्ज्जयितुं शक्नोति इत्यर्थः, धनात् (हेतौ ५मी) धर्म्मं (कर्म्म) चाप्नोति इति शेषः, यः धनवान् भवति सः सद्व्ययेन सत्कर्म्माणि अनुष्ठाय धर्म्मोपार्ज्जनं कर्त्तुं समर्थः भवति इत्यर्थः, ततः तस्मात् इत्यर्थः (हेतौ ५मी+तस्, अव्य) सुखं (कर्म्म) आप्नोति (क्रिया) प्रकृतं सुखं धर्म्मादेव जायते इति भावः। ४॥

वाच्यान्तरं। विद्यया विनयः दीयते, धनं आप्यते, धनात् धर्म्मः ततः सुखं (आप्यते)। ४॥

विद्या विनय देती है, विनय से लोग पात्रता पाते है, पात्र होने से धन, धन से धर्म्म और धर्म्म से सुख पाते हैं। ४॥

(4.) Learning teaches a man humility—from humility comes competence—from competence he acquires wealth—from wealth virtue and from it happiness.

**विद्या शस्त्रञ्चेति।** अन्वयः। शस्त्रं च शास्त्रं च द्वे विद्ये प्रतिपत्तये, आद्या वृद्धे हास्याय, द्वितीया सदा आद्रियते। ५॥

व्याख्या। अस्त्रं च=अस्यते हिंस्यते अनेन (अस्-धा+करणे-त्र) तत् च (१मा-विश) एका विद्या धनुर्विद्या इत्यर्थः (प्रातिपदिकार्थे-१मा), शास्त्रं च=शिष्यते उपदेशेन विनीयते अनेन (शास-धा+करणे त्र, १मा विश) तत् च अपरा विद्या शास्त्रविद्या इत्यर्थः (१मा) ततश्च अस्त्रविद्या शास्त्रविद्या च इति द्वे (कर्त्ता-विश, १मा-२या) विद्ये (कर्त्ता-१मा २व,) प्रतिपत्तये (प्रति पद-धा+क्ति) लोकानां यशसे (तादर्थे-४र्थी) भवतः इति शेषः इह संसारे केचित् अस्त्रविद्यया ख्यातिं लभन्ते अन्ये तु शास्त्रविद्यया इत्यर्थः, आद्या=तयोः पूर्व्वोक्तयोः विद्ययोः प्रथमा अस्त्रविद्या इत्यर्थः (कर्त्ता) वृद्धत्वे=वृद्धस्य भावः तस्मिन् वृद्धदशायां (अधि) हास्याय=उपहासाय (हस-धा+ण्यत्, तादर्थे-४र्थी) भवति इति शेषः, सशस्त्रः जराजीर्णः पुरुषः वीरकर्म्मणि प्रवृत्तः लोकैः उपहस्यते इत्यर्थः, द्वितीया=शास्त्रविद्या (कर्म्म-१मा) सदा सर्व्वस्मिन् काले शैशवे यौवने वार्द्धक्ये च इत्यर्थः (सर्व्व-श+दा, अधि-अव्य) आद्रियते,—लोकैः बहुमन्यते (आ-दृ-धा+कर्म्मणि-लट्. क्रिया) शास्त्रस्य बहुदर्शित्वं वयसा सह वर्द्धते, बहुदर्शित्वेन च तस्य समादरोऽपि वर्द्धते इति विशदार्थः। ५॥

वाच्यान्तरं। द्वाभ्यां विद्याभ्यां प्रतिपत्तये भूयते, आद्यया हास्याय भूयते, द्वितीयं आद्रियन्ते (लोकाः)। ५॥

अस्त्र, और शास्त्र यह दो विद्या प्रतिपत्ति के लिए हैं, पहिली विद्या बुढ़ापे में हंसी के लिए होती है, और दूसरी का सदा आदर होता है। ५॥

(5.) Knowledge of arms and knowledge of the shastras both lead to distinction; the former make one an object of laughter in old age—the latter command respect at all times.

अनेकेति। अन्वयः। अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकं शास्त्रं सर्व्वस्य लोचनं यस्य (तत्) नास्ति स अन्ध एव। ६॥

व्याख्या। अनेकसंशयोच्छेदि=न एके अनेके (नञ् तत्) बहवः इत्यर्थः संशयाः सन्देहाः अनेकसंशयाः (कर्म्मधा) तान् उच्छेत्तुं उन्मूलयितुं इति यावत् शीलं यस्य तत् (उत्-छिद धा+ताच्छील्ये-णिन्) सन्देहे सति प्रकृतार्थदर्शक मित्यर्थः (कर्त्ता-विण-नपुं-१मा-१व) परोक्षार्थस्य=अक्ष्णां परं (समासान्तविधानात् अव्ययीभावः अर्शादित्वात् अच्, निपातनात्, उत्वं इति सिद्धान्तकौमुदी), परोक्षः अर्थः (कर्म्मधा) तस्य (६तत्) दर्शकं (दृश धा+णिच+ण्वुल) शास्त्राध्ययनेन अप्रत्यक्षः विषयः प्रत्यक्ष इव प्रतिभाति इत्यर्थः (कर्त्ता-विण) शास्त्रं=वेदादिशास्त्रं (उद्देश्यकर्त्ता-१मा) सर्व्वस्य=जनस्य (सम्ब) लोचनं=चक्षुः (विधेय-कर्त्ता) भवतीति शेषः तत्=शास्त्ररूपं लोचनं (कर्त्ता) यस्य (सम्ब) नास्ति=न विद्यते (क्रिया) सः=जनः (प्रातिपदिकार्थे-१मा) अन्धः एव (१मा-विण) सत्यपि आकर्णविस्तृते लोचनद्वये शास्त्रलोचनविहीनः नरः अन्धः एव इत्यर्थः, यत् वस्तु समीपस्थं अस्थूलं लोचनं तदेव दर्शयति, यच्च दूरस्थं अतीन्द्रियं परमाणुमहेश्वरादिकं तदेव शास्त्रं दर्शयति इति तात्पर्य्यम्। ६॥

वाच्यान्तरं। अनेकसंशयोच्छेदिना दर्शकेन शास्त्रेण भूयते (तेन) न भूयते। ६॥

शास्त्र अनेक संशयों को छेदन करता है, और ऐसे पदार्थों को दिखाता है, जो इन्द्रियों से नहीं दीखते, यह शास्त्र सब की आंख है, जिस के नहीं वह अन्धा है। ६॥

(6.) The shastras remove doubts of all kinds; they present to our sight objects beynod our sense and they serve as eye to all. He who is ignorant of them is blind indeed.

**यौवनमिति ।** अन्वयः। यौवनं धनसम्पत्तिः प्रभुत्वं अविवेकता एकैकं अपि अनर्थाय ( यत्र ) चतुष्टयं, तत्र किमु । ७ ॥

व्याख्या। यौवनं = यूनः भावः (युवन्-श+अण्) तारुण्यं (आषोड़शात् भवेत् बालस्तरुणस्तदनन्तरं,वृद्धः स्यात् सप्ततेरूर्द्ध्वं इत्युक्तेः कर्त्ता-विश) धनसम्पत्तिः=धनानि एव सम्पत्तिः ( सम्-पद-धा+क्ति ) ऋद्धिः ( कर्त्ता-विश) प्रभुत्वं=प्रभोः भावः ( प्र-भू-धा + डु=प्रभु+त्व) ऐश्वर्यं स्वामित्वमित्यर्थः ( कर्त्ता विश) अविवेकता = सदसद्विवेकराहित्यं ( न-वि-विच-धा+घञ् =अविवेक+ता कर्त्ता-विश) एकैकं अपि=प्रत्येकं अपि (कर्त्ता, वीप्सार्थे द्विर्वचनं ) अनर्थाय=अमङ्गलाय ( तादर्थे-४र्थी ) भवतीति शेषः । यत्र जने ( अधि ) चतुष्टयं=चतुर्णां अवयवः ( चतुर-श + तयप ) चतुःसंख्यं यत्र यौवनादीनि चत्वारि मिलितानि इत्यर्थः (कर्त्ता ) भवतीति शेषः तत्र=तस्मिन् जने ( अधि-अत्र ) किमु = किं वक्तव्यं अनर्थं भवत्येव इत्यर्थः। ७ ॥

वाच्यान्तरं । यौवनेन धनसम्पत्त्या प्रभुत्वेन अविवेकितया एकैकेन भूयते, चतुष्टयेन भूयते । ७ ॥

यौवन, धन, प्रभुता और अविवेकिता यह एक एक अनर्थ के लिए होते हैं, चारों जहां हों वहां की तो कोई बातही नहीं । ७ ॥

(7) Youth, wealth and prosperty, exercise of power and imprudence—each of these leads to evil, what, if there be a combination of all four ?

**गुणिगणेति ।** अन्वयः। गुणिगणगणनारम्भे यस्य सुसम्भ्रमा कठिनी न पतति, तेन अम्बा यदि सुतिनी, वन्ध्या कीदृशी भवति वद । ८ ॥

व्याख्या। गुणिगणगणनारम्भे = गुणिनां ( ६तत् ) गणाः तेषां ( ६तत् ) गणना तस्याः ( ६तत् ) आरम्भः तस्मिन्, अस्मिन् देशे के के

गुणिनः सन्ति इति नामोल्लेखसमये इत्यर्थः (अधि) यस्य=जनस्य (सर्व्व-सम्ब) सुसम्भवति या सा (सु-सम्-भू-धा+कर्त्तरि-अच्) उचिता लेखनोपयुक्ता इत्यर्थः (कर्त्ता-विश) कठिनी=लेखनार्था खटिका (कर्त्ता), न पतति=न अङ्कपातं करोति, यस्य नाम न लिखति इत्यर्थः (क्रिया) यस्य नाम गुणिगणमध्येषु न गण्यते इति भावः, तेन=अगुणवता पुत्रेण (धान्येन धनवानित्यादिवत् ३या) यदि=चेत् (अव्य) अम्बा=माता (कर्त्ता, अम्बामाताथ बालास्याद्वासुरार्यस्तु मारिषः इत्यमरः) सुतिनी= सुतः विद्यते अस्याः (सुत-अ+इन् स्त्रियां ईप्) पुत्रवती (कर्त्ता-विश) भवतीति शेषः, वन्ध्या=निष्फला अजातपुत्रा इत्यर्थः (कर्त्ता) कीदृशी= (किम्-दृश-धा+टक्, स्त्रियां ईप) किंप्रकारा (कर्त्ता-विश) भवति का इव दृश्यते (क्रिया) वद=कथय (वद-धा+लोट, क्रिया) अगुणवता पुत्रेण माता पुत्रवती न, सः पुत्रः मातुः उभार एव यौवनच्छेदे कुठारश्च इति भावः । ८ ॥

व्याख्या । सुसम्भवया कठिन्या न पत्यते, अम्बया सुतिन्या भूयते, वन्ध्यया कीदृश्या भूयते, उच्यतां । ८ ॥

गुणियों की गणना के समय कठिनी जिस का नाम नहीं लिखती, उस लड़के से जो माता पुत्रवती कहलाए तो, कहो वन्ध्या कैसी होती है । ८ ॥

(8.) If the name of a person does not fall in the list of the meritorious men then his mother though possessor of a son in reality may be called a barren (wife).

धर्मेति । अन्वयः । यस्य धर्मार्थकाममोक्षाणां एकः अपि न विद्यते अजागलस्तनस्य इव तस्य जन्म निरर्थकं । ९ ॥

व्याख्या । यस्य=जनस्य (सर्व्व सम्ब) धर्मार्थकाममोक्षाणां=धर्मः वेदादिविहितकर्मानुष्ठानं, अर्थः धनोपार्ज्जनं, कामः विषयभोगः, मोक्षः

मुक्तिः भवसागरात् परित्राणं सालोक्यसायुज्यनिर्व्वाणादन्यतरः ( द्वन्द्व ) तेषां ( निर्द्धारे-६ष्ठी ) एकः अपि ( कर्त्ता ) न विद्यते=न अस्ति ( विद-धा+कर्त्तरि-लट्, क्रिया ) यः धार्म्मिकः धनवान् वा विषयी वा मुमुक्षुः न इत्यर्थः । अजागलस्तनस्य=अजायाः छाग्याः ( ६तत् ) गलः तत्र जातः ( ७तत् ) स्तनः तस्य ( सम्ब ) जन्म इव ( उपमा कर्त्ता ) तस्य=धर्म्माद्यन्यतमरहितस्य जनस्य ( सर्व्व-सम्ब ) जन्म=जननं ( कर्त्ता-१मा ) निरर्थकं=नास्ति अर्थः यस्य ( बहुब्रीह्यर्थे वाः ) निष्फलं वृथा इत्यर्थः ( कर्त्ता-विण ) भवतीति शेषः, दुग्धविहीनः अजागलस्तनः न स्वशिशुपोषणाय नापि मनुष्याणां उपकाराय नापि परेषां उपकाराय इति भावः ।९॥

वाच्यान्तरं । एकेन न विद्यते, जन्मना निरर्थकेन भूयते । ९ ॥

धर्म्म, अर्थ, काम और मोक्षों में जिस के एक भी नहीं है, उस का जनम अजा गल स्तन की तरह निरर्थक है । ९ ॥

( 9. ) Of virtue, wealth, desire and final liberation who has none, his life is useless as the throat-nipple of a she-goat.

यथेति । अन्वयः । सुगमः । व्याख्या । यथा=यादृशं (अव्य) एकेन ( करण-विण ) चक्रेण ( करण ) रथस्य ( गतिः इत्यस्य कर्त्ता-६ष्ठी ) गतिः=गमनं ( गम-धा+क्ति, कर्त्ता ) न भवेत् ( क्रिया ) रथः न चलति इत्यर्थः, एवं=तथा ( अव्य ) पुरुषकारेण=पुरुषचेष्टितेन पौरुषेण इत्यर्थः ( विनायोगे-३या ) विना ( अव्य ) दैवं=दैवात् आगतं ( दैव-अ+षण ) भाग्यं फलोन्मुखशुभाशुभकर्म्म इत्यर्थः ( कर्त्ता ) न सिध्यति=न सफलं भवति ( सिध-धा+कर्त्तरि-लट, क्रिया ) कार्य्यसिद्धौ पुरुषकार-दैवयोः उभयोरेव प्रयोजनं इति भावः । १० ॥

वाच्यान्तरं । गत्या न भूयते, दैवेन सिध्यते । १० ॥

जैसे एक चक्र से रथकी गति नहीं होती है, इसी ढब से पुरुषकार के बिना दैव सिद्ध नहीं होता है । १० ॥

(10) As a carriage cannot move with a single wheel, so fate cannot succeed without manly act.

**उद्योगिनमिति।** अन्वयः। लक्ष्मीः उद्योगिनं पुरुषसिंहं उपैति; कापुरुषाः दैवेन देयं इति वदन्ति, आत्मशक्त्या दैवं निहत्य पौरुषं कुरु, यत्ने कृते यदि न सिध्यति, अत्र कः दोषः ॥ ११ ॥

व्याख्या। लक्ष्मीः=सम्पदधिष्ठात्री देवता (कर्त्ता, लक्ष्मीः सम्पत्ति-शोभयोः इति मेदिनी) उद्योगिनं=उद्युनक्ति यः सः (उत्-युज धा+कर्त्तरि-घिणन्) उद्यमवन्तं (कर्म्म विण) पुरुषसिंहं=पुरुषः सिंहः इव (उपमितं व्याघ्रादिभिः सामान्याप्रयोगे इति उपमितसमासः) पुरुष-श्रेष्ठं (कर्म्म) उपैति=प्राप्नोति तत्समीपं आगच्छति इत्यर्थः (उप-इ-धा+लट क्रिया). कापुरुषाः=कः कुत्सिताः पुरुषाः (कोर्घा, विभाषा पुरुषे इति विभाषया कुशब्दस्य कादेशः पक्षे कुपुरुषः) अनुद्यमशीलाः (वदन्ति इत्यस्य कर्त्ता) दैवेन=भाग्येन देयं इत्यस्य कर्त्ता ३या) देयं =दातव्यं दैवं दास्यति इत्यर्थः अभीष्टं वस्तु इति कर्म्मपदमूह्यं, इति=एवं (वदन्ति इत्यस्य कर्म्म-अव्य) वदन्ति=कथयन्ति (वद-धा+लट, क्रिया) भाग्यं फलति सर्व्वत्र न विद्या न च पौरुषं इति अनुसरन्तः सर्व्वं दैवा-यत्तं इति निश्चित्य कापुरुषाः कालं वृथा नयन्ति इत्यर्थः। दैवं=भाग्यं (कर्म्म) निहत्य=विनाश्य निर्जित्य इत्यर्थः (नि-हन-धा+ल्यप्, अव्य) आत्मशक्त्या=आत्मनः शक्तिः सामर्थ्यं तया (६तत्) स्वसामर्थ्यानुसारेण पौरुषं=पुरुषस्य कर्म्म (पुरुष-श+षण्) पुरुषकारं (कर्म्म) कुरु=प्रकटय (कृ-धा+लोट-मपु-१व, क्रिया) सर्व्वं दैवायत्तं इति विश्वासं मनसः दूरीकृत्य इष्टलाभे यत्नं कुरु इत्यर्थः। यत्ने=पुरुषकारे (यत-धा+न, भावाधिकरणे-७मी) कृते=विहिते (कृ धा+कर्म्मणि-क्त, अधि-विण) यदि=चेत् (अव्य) न सिध्यति=न सफलं भवति न अभीष्टं सम्पद्यते इत्यर्थः (सिध-धा+लट, क्रिया) अत्र=कार्य्यासिद्धौ (इदम-श७मी+त्र, इधि-अव्य)

कः ( सर्व्व-कर्त्ता-विश ) दोषः=अपराधः ( दूष-धा+भावे-घञ, कर्त्ता ) उद्योगिनः पुरुषस्य भवतीति शेषः न कोऽपि दोषः इत्यर्थः अत्र वसन्ततिलकावृत्तं तल्लक्षणं यथा, वसन्ततिलकातभौ जगौ इति पिङ्गलाचार्य्यः। ११।

वाच्यान्तरं। लक्ष्म्या उद्योगी पुरुषसिंहः उपेयते, दैवं दास्यति इति कापुरुषैः उद्यते, पौरुषं क्रियतां न सिध्यते, केन अपराधेन भूयते। ११॥

उद्योगी पुरुष श्रेष्ठ के पास लक्ष्मी आती है, कापुरुष कहते हैं कि, दैव देंगे, दैव को दूर कर अपनी शक्ति अनुसार पौरुष करो, यत्न करने पर सिद्ध न हो, तो इस में पुरुष का दोष क्या है? ११।

(11.) A great man who exerts himself approaches fortune; it is the weak men that say that it must be given them by fate. Without depending upon chance you should exert yourself to the best of your abilities; if you do not succeed after exerting yourself no body would blame you.

उद्यमेन इति। अन्वयः। कार्य्याणि उद्यमेन हि सिद्ध्यन्ति, मनोरथैः न सिध्यन्ति, मृगाः सुप्तस्य सिंहस्य मुखे न प्रविशन्ति। १२॥

व्याख्या। कार्य्याणि (कर्म्म) उद्यमेन=उद्योगेन ( उत्-यम-धा+भावे-अल, करण-३या) हि=निश्चितं (अव्य) सिध्यन्ति=सफलानि भवन्ति (क्रिया)मनोरथैः=मनांसि रथाः इव इष्टमानप्रापकत्वात्,(उपमितसमासः) तैः इच्छाभिः ( करण, इच्छा काङ्क्षा स्पृहेहातृड् वाञ्छा लिप्सा मनोरथः इत्यमरः ) न=न सिध्यन्ति, मृगाः=हरिणाः ( कर्त्ता ) सुप्तस्य=निद्रितस्य (स्वप-धा+कर्त्तरि-क्त, ६ष्ठी-विश), सिंहस्य ( सम्ब-६ष्ठी ) मुखे=मुखमध्ये (अधि) न प्रविशन्ति=न गच्छन्ति ( प्र-विश-धा+लट्, क्रिया ) यत्नं विना अभीष्टं न लभ्यते इति भावः। १२॥

वाच्यान्तरं। कार्य्याणि सिध्यन्ते, मृगैः प्रविश्यते। १२॥

कार्य्य उद्यम से सिद्ध होता है, मनोरथ से नहीं, सोते सिंह के मुंह में जानवर नहीं घुसते। १२॥

(12.) It is by self-exertions that a man can succeed in his actions and not by desire; beasts of game cannot enter the mouth of a sleeping lion.

**काव्येति।** अन्वयः। धीमतां कालः काव्यशास्त्रविनोदेन गच्छति, मूर्खाणां (कालः) व्यसनेन, निद्रया, कलहेन च (गच्छति)। १३॥

व्याख्या। धीमतां=धीप्रशस्ता मेधा विद्यते येषां ते धीमन्तः (धी+प्र+प्रशस्तार्थे-मतुप) तेषां सुधियां (सम्ब) कालः=समयः (कर्त्ता) काव्य-शास्त्रविनोदेन=कविना निर्म्मितं काव्यं इति वैयाकरणिकाः (कवि-श+ष्यण) वाक्यं रसात्मकं काव्यं इति दर्पणकारः, तददोषौ शब्दार्थौ सगुणा-वनलङ्कृतिः पुनः क्वापि इति प्रकाशकारः, चमत्कारात्मकं वाक्यं काव्यं इति प्रेमचन्द्रतर्कवागीशाः, काव्यं शास्त्रं (कर्म्मधा) तस्मात् तदनु-शीलनात इत्यर्थः (पूतत्) उत्पन्नः यः विनोदः चित्तसन्तोषः तेन (करण) गच्छति=अतिवर्त्तते (गम-धा+लट्, क्रिया) धीमन्तः सज्जनाः काव्य-शास्त्रं पठन्तः सुखेन कालं यापयन्ति इत्यर्थः मूर्खाणां=अज्ञानां (सम्ब) कालः इति शेषः, व्यसनेन=व्यस्यते कर्त्तव्यकर्म्मणः दूरं चिप्यते जनः अनेन व्यसनं (वि-अस-धा+करण-ल्युट्) द्यूतक्रीड़ादिकं तेन (करण, मृगयाक्षो दिवास्वप्नः परीवादः स्त्रियोमदः, तौर्य्यत्रिकं वृथाट्या च कामजो दशकोगणः। पैशुन्यं साहसं द्रोह ईर्षासूयार्थदूषणं। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपिगणोऽष्टकः इति) निद्रया=स्वप्नेन (करण) कलहेन=विवादेन (करण) गच्छतीति शेषः, मूर्खास्तु द्यूतक्रीड़ासुरापानादिना निद्रया परस्परविवादेन च कालं यापयन्ति इत्यर्थः। १३॥

वाच्यान्तरं। कालेन गम्यते। १३॥

बुद्धिमानों का समय काव्यशास्त्र की चर्चा से कटता है और मूर्खों का काल व्यसन, निद्रा और कलह से कटता है। १३ ॥

(13.) The time of the wise passes away in the study of entertaining poems while the time of the fools passes away in viceous pursuits, in sleep or in quarrel.

**प्राणा इति।** अन्वयः। आत्मनः=प्राणाः यथा अभीष्टाः भूतानां अपि ते तथा, साधवः आत्मौपम्येन भूतेषु दयां कुर्व्वन्ति। १४ ॥

व्याख्या। आत्मनः=स्वस्य (सम्ब) प्राणाः=जीवनं (कर्म-१मा-३व, प्राणशब्दः नित्यबहुवचनान्तः, पुंसिभूम्नासवः प्राणाः इत्यमरः) यथा (अव्य) अभीष्टाः - अभिलषिताः प्रियाः महता यत्नेन रक्षणीयाः इत्यर्थः (अभि-इष-धा+कर्म्मणि-क्त, क्रिया) लोकानामिति शेषः, भूतानां= अन्येषां आत्मभिन्नानां प्राणिनां इत्यर्थः (सम्ब) ते=प्राणाः (सर्व्व-कर्म- १मा) तथा (तद्-अ+था अव्य) अभीष्टाः इति शेषः। साधवः=सज्जनाः (कर्त्ता-१मा-३व) आत्मौपम्येन=उपमा एव औपम्यं (स्वार्थे ष्यञ्) आत्मना (३तत्) औपम्यं सादृश्यं तेन आत्मतुलनया इत्यर्थः (करण) भूतानां=प्राणिनां भूतेषु इत्यर्थः (सम्बन्धविवक्षया-६ष्ठी) दयां=अनुकम्पां (कर्म्म) कुर्व्वन्ति (क्रिया)। यदेतत् आत्मक्लेशकरं परेषामपि तथा इति विविच्य साधवः सर्व्वभूतेषु आत्मवत् पश्यन्ति इति सरलार्थः। १४ ॥

वाच्यान्तरं। लोकाः प्राणान् अभीष्टवन्तः, तान् (अभीष्टवन्तः) साधुभिः दया क्रियते। १४ ॥

अपने प्राण जैसे प्रिय हैं, और प्राणियों के भी वैसेही प्रिय हैं, साधु अपनी उपमा से प्राणियों पर दया करते हैं। १४ ॥

(14.) Just as one's own life is dear to him so are the lives of other creatures to them; good men show kindness to animals by considering their case in relation to themselves.

दरिद्रान् इति। अन्वयः। हे कौन्तेय दरिद्रान् भर, ईश्वरे धनं मा प्रयच्छ, व्याधितस्य औषधं पथ्यं, निरुजस्य औषधैः किं।१५॥

व्याख्या। हे कौन्तेय—कुन्त्याः अपत्यं पुमान् (कुन्ती-अ+ष्ण) हे कुन्तीपुत्र युधिष्ठिर (सम्बो) दरिद्रान्=दीनान् (कर्म्म) भर=अन्न-वस्त्रादिदानेन प्रतिपालय (भृ-धा+लोट, क्रिया), ईश्वरे=ईष्टे प्रभवति यः सः तस्मिन् (ईश-धा+वर) समर्थे धनवति इत्यर्थः (धनस्य कर्मत्वः आधारत्वविवक्षया सम्प्रदाने ७मी) धनं (कर्म्म) मा=न (अव्य) प्रयच्छ= देहि (प्र-दान धा+लोट, क्रिया), एतदेव दृढ़यन् आह व्याधितस्येति, व्याधितस्य=व्याधिः अस्य जातः (व्याधि-अ+इतच) तस्य औषधं भेषजं (प्रातिपदिकार्थे-१मा) पथ्यं=हितकरं (१मा-विष), (शास्त्रे त्रिषु पथ्याखौ हरिभक्यां हितेत्रिषु इति मेदिनी) नीरुजस्य=निर् नास्ति रुजा रोगः यस्य (बहुव्री स्त्रीरुग्रुजा चोपतापरोगव्याधिगदामया इत्यमरः, रलोपे पूर्व्वस्य दीर्घःऽणः इति दीर्घः) तस्य रोगहीनस्य (सम्ब) औषधैः (किं योगे-३या) किम्=किं प्रयोजनं नास्ति इत्यर्थः (अव्य), दानस्य दारिद्रमोचनमूलत्वात् नीरोगिष्वि औषधप्रयोगः इव धनवति धनदानं निष्फलं इति भावः। १५॥

वाच्यान्तरं। दरिद्राः भ्रियन्तां, धनं मा दीयतां। १५॥

हे कौन्तेय। दरिद्रों को भरण करो, धनवान् को धन दान न करो। औषध रोगी के लिए पथ्य है, निरोग को औषध से क्या प्रयोजन है। १५॥

(15.) Oh son of kunti. (Arjun) support the needy, do not give away money to those that have it, it is the diseased that are benifitted by medicine; those that are free from disease do not require medicine.

विपदि इति। अन्वयः। विपदि धैर्य्यं, अथ अभ्युदये

क्षमा, सदसि वाकपटुता, युधि विक्रमः, यशसि च अभिरुचिः, श्रुतौ व्यसनं इदं हि महात्मनां प्रकृतिसिद्धं। १६ ॥

व्याख्या। विपदि=विपद्काले उपस्थिते सति (अधि) धैर्य्यं= धीरस्य भावः (धीर श+ष्यण्) अव्याकुलता (कर्त्ता-विण) अथ (अव्य) अभ्युदये=उन्नतिसमये सम्पत्काले इत्यर्थः (अभि-उत्-इ-धा+भावे-अल, अधि) क्षमा=अपराधमार्जने अनहङ्कारः इति यावत् (कर्त्ता-विण) सदसि=सभायाम् वहुलोके एकत्र समवेते सति इत्यर्थः (अधि) वाक्-पटुता=वाच् (७तत्) पटुता वाक्नैपुण्यं (कर्त्ता-विण) युधि=युद्धे (अधि) विक्रमः=पराक्रमः साहसप्रदर्शनपुरःसरः बलप्रकाशः इत्यर्थः (कर्त्ता-विण), यशसि=कीर्त्तौ अभिरुचिः=इच्छा यशोलिप्सा इत्यर्थः (कर्त्ता-विण) श्रुतौ=शास्त्रे (अधि, श्रुतिः श्रोत्रे च तत्कर्माख्याम्नाय वार्त्तयोः स्त्रियां इति मेदिनी) व्यसनं (वि-अस-धा+ल्युट्) आसक्तिः, अनुरागः इत्यर्थः (कर्त्ता-विण, व्यसनन्त्वशुभे सक्तौ पानस्त्रीमृगयादिषु इति मेदनी), इदं=विपदि धैर्य्यादिकं सर्व्वं (कर्त्ता) हि=निश्चितं (अव्य) महात्मनां=महान् आत्मा येषां ते (वहुव्री) तेषां उदारचरितानां (सम्ब) प्रकृतिसिद्धं=प्रकृत्या सिद्धं (सिध-धा+क्त, कर्त्ता-विण) भवतीति शेषः, शिक्षां विनापि महात्मसु पूर्व्वोक्ता गुणाः आजन्मसिद्धाः भवन्ति इति भावः। अत्र द्रुतविलम्बितवृत्तं तल्लक्षणं यथा द्रुतविलम्बितं नभौ भरौ। ६। ८६। इति पिङ्गलाचार्य्यः। १६ ॥

वाच्यान्तरं। धैर्य्येण क्षमया, वाक्पटुतया विक्रमेण, अभिरुच्या, व्यसनेन एतेन प्रकृतिसिद्धेन भूयते। १६ ॥

विपद में धैर्य्य, उन्नति के समय क्षमा, सभा में वाग्मिता, लड़ाई में विक्रम प्रकाश, यश में इच्छा, शास्त्र में आसक्ति यह महात्माओं के स्वभाव सिद्ध गुण हैं। १५ ॥

(16.) Firmness in misfortune, moderation in prosperity,

cleverness in speech in an assembly, heroism in battle, desire for fame, diligence in sacred study, all these are the natural accomplishments of great men.

**षड्दोषा: इति ।** अन्वयः । इह भूतिं इच्छता पुरुषेण निद्रा, तन्द्रा, भयं क्रोधः, आलस्यं,दीर्घसूत्रता षट् दोषाः हातव्याः ।१७॥

व्याख्या । इह=अस्मिन् संसारे (अन्य-अधि) भूतिं=उन्नतिं इच्छता इत्यस्य कर्म्म) इच्छता=अभिलषता (इष-धा+शतृ, ३या-१व) उन्नतिकामेन इत्यर्थः (कर्त्ता-विण) पुरुषेण=जनेन ( कर्त्ता-३या) निद्रा=स्वाप: (१मा) तन्द्रा=अनुत्साहः कार्य्येषु वैमुख्यं इति यावत् (तन्द्र-धा+अ+स्त्रियां आप, १मा) भयं=शङ्का ( भी+धा+अल, १मा ) क्रोधः=कोपः (क्रुध-धा+घञ, १मा ) आलस्यं = अलसस्य भावः ( अलस श+ष्यञ ) अलसता दीर्घ-सूत्रता दीर्घेण चिरकालेन सूत्रं ईप्सितकार्य्यं यस्य (बहुव्री) सः दीर्घसूत्रः प्रारब्धस्य कर्म्मणः चिरेण सम्पादयिता इत्यर्थः तस्य भावः चिरक्रियता इत्यर्थः ( १मा, एतानि प्रथमान्तानि षट् पदानि दोषाः इत्यस्य परि-चायकविशेषणानि ) षट्=एते पूर्व्वोक्ताः निद्रादयः ( षष श+१मा ३व, कर्म्म-विण ) दोषाः ( कर्म्म-१मा ) हातव्याः=( हा-धा+कर्म्मणितव्य, क्रिया ), निद्रादयः षट् उन्नतिप्रतिबन्धकाः इत्यर्थः । १७ ॥

वाच्यान्तरं । भूतिं इच्छन् पुरुषः निद्रां तन्द्रां भयं क्रोधं आलस्यं दीर्घसूत्रतां षट् दोषान् जह्यात् । १७ ॥

अपनी भलाई चाहनेवाले पुरुष को चाहिये कि, निद्रा, तंद्रा, भय, क्रोध, आलस्य, दीर्घसूत्रता इन छदोषों को छोड़ दे । १७ ॥

(17.) Six faults are to be avoided in this world, by those who seek for prosperity, namely ; sleep, sloth, fear, anger, laziness and procrastination.

**अल्पानां इति ।** अन्वयः । अल्पानां अपि वस्तूनां संहतिः कार्य्यसाधिका ( भवति ), गुणत्वं आपन्नैः तृणैः मत्तदन्तिनः बध्यन्ते ।१८॥

व्याख्या । अल्पानां अपि=तृणादिवत् क्षुद्राणां अपि ( ६ष्ठी विण ) वस्तूनां=द्रव्याणां ( संहतिः इत्यस्य कर्त्ता-६ष्ठी ) संहतिः=समवायः (सम्-हन-धा+क्ति ) मिलनं इति यावत् ( कर्त्ता-१मा ) कार्य्यसाधिका=कार्य्यस्य ( ६तत् ) साधिका कार्य्यसम्पादिका ( कर्त्ता-विण ) भवतीति शेषः, क्षुद्राः अपि समेत्य महत् कार्य्यं साधयन्ति इति भावः. तदेव अर्थान्तरन्यासेन द्रढ़यति तृणैः इति, गुणत्वं=रज्जुत्वं ( कर्म्म, गुणो मौर्व्व्यामप्रधाने रूपादौ सूद इन्द्रिये, त्यागे शौर्य्यादिसत्वादिसन्ध्याद्यावृत्तिरज्जुषु इति मेदिनी) आपन्नैः=प्राप्तैः रज्जुरूपेण परिणतैः इत्यर्थः ( आ-पद-धा+कर्त्तरि-विण ) तृणैः=कुशादिभिः ( कर्त्ता-३या ) मत्तदन्तिनः=दन्तौ विद्यते येषां ते दन्तिनः ( दन्त-अ+इन् ) हस्तिनः, मत्ताः ( मद-धा+क्त ) दन्तिनः ( कर्म्म धा ) मदस्राविणः हस्तिनः ( कर्म्म १मा-३व, दन्ती दन्तावलो हस्ती इत्यमरः ) बध्यन्ते=नियम्यन्ते संरुध्यन्ते इति यावत् लोकैः इति शेषः ( बन्ध-धा+कर्म्मणि-लट-१पु ३व, क्रिया ) । १८ ॥

वाच्यान्तरं । संहत्या कार्य्यसाधिकया भूयते गुणत्वं आपन्नानि तृणाणि मत्तदन्तिनः बध्नन्ति । १८ ॥

थोड़ी सी वस्तुओं के मेल से कार्य्य सिद्ध होता है, घास के रस्से से हाथी भी बांधे जा सके हैं । १८ ॥

(18.) A combination even of small things tend to the accomplishment of our aim; furious elephants are bound with grass blades made into ropes.

**संहतिः इति ।** अन्वयः । स्वल्पकैः अपि स्वकुलैः ( सह ) संहतिः पुंसां श्रेयसी, तुषेण अपि परित्यक्ताः तण्डुलाः न प्ररोहन्ति ।१९॥

व्याख्या । स्वल्पकैः अपि=अत्यल्पैः अपि एकादिभिरपि इत्यर्थः ( ३या-विण ) स्वकुलैः=स्वगोत्रजैः भ्रात्रादिभिः इत्यर्थः ( सहार्थे ३या ) संहतिः=मिलनं ( सम्-हन-धा+क्ति, कर्त्ता ) पुंसां=पुरुषाणां लोकाना-

मित्यर्थः (सम्ब) श्रेयसी=इयं आसां अतिशयेन प्रशस्ता (प्रशस्य-श्र+ईयस्) मङ्गलदायिका (कर्त्ता-विण) भवतीति शेषः, तुषेण अपि=धान्यत्वचा (करण) परित्यक्ताः=विहीनाः (कर्त्ता-विण) तण्डुलाः (कर्त्ता) न प्ररोहन्ति=न अङ्कुरं उत्पादयन्ति (प्ररुह धा+लट, क्रिया) भावार्दिभिः सह एकत्रावस्थानं बलवर्द्धनम् इति भावः। १९ ॥

वाच्यान्तरं। संहत्या श्रेयसा भूयते परित्यक्तैः तण्डुलैः न प्ररुह्यते।१९॥

अपने स्वजातीय थोड़ों से मेल रखना भी लोगों के लिए अच्छा है, तुष निकाले जाने पर तण्डुल में से अंकुर नहीं निकलते। १९ ॥

(10). It is better for men to have combination with persons, though small in number, of their own family; rice-grains do not grow up even when separated from the husks.

**दारिद्र्यादिति।** अन्वयः। (जनः) दारिद्र्यात् ह्रियं एति ह्रीपरिगतः (जनः) सत्त्वात् परिभ्रश्यते, निःसत्त्वः (जनः) परिभूयते, परिभवात् निर्वेदं आपद्यते, निर्विण्णः (जनः) शुचं एति, शोकनिहतः (जनः) बुद्ध्या परित्यज्यते, निर्बुद्धिः (जनः) क्षयं एति, अहो निधनता सर्व्वापदां आस्पदं। २० ॥

व्याख्या। दारिद्र्यात्=दरिद्रस्य भावः (दरिद्र-श्र+ष्यञ) निर्धनत्वं तस्मात् (हेतौ ५मी) ह्रियं=लज्जां (कर्म) एति=प्राप्नोति (इ-धा+लट, क्रिया) जनः इति शेषः, ह्रीपरिगतः=ह्रिया (३तत्) परिगतः गृहीतः लज्जितः जनः (कर्त्ता) सत्त्वात्=धैर्य्यात् (अपा ५मी) परिभ्रश्यते=परिच्युतो भवति (भ्रंश-धा+कर्त्तरि-लट, क्रिया) निःसत्त्वः=निर् नास्ति सत्त्वं यस्य (बहुव्री) धैर्य्यशून्यः जनः (कर्म-१मा) परिभूयते =पराजीयते तिरस्क्रियते (परि-भू-धा+कर्म्मणि-लट, क्रिया) अन्यैः इति शेषः, परिभवात्=तिरस्कारात्=(परि-भू धा+अल, हेतौ-५मी) निर्व्वेदं=खेदं स्वावमाननं इत्यर्थः (निर्व्वेदः स्वावमानना इति दर्पण-

कारः निर-विद-धा+घञ, कर्म, आपद्यते=प्राप्नोति (आ-पद-धा+कर्मणि-लट, क्रिया) निर्विण्णः+निर्व्वेदयुक्तः जनः (निर विद धा+क्त, कर्त्ता) शुचं=शोकं मानापगमात् वृथा मे जीवितं इत्याकारकपं (कर्म) एति=प्राप्नोति (क्रिया), शोकनिहीतः=शोकेन (शुच्-धा+घञ, इतत्) निहीतः आच्छादितः शोकाभिभूत जनः (कर्म) बुद्ध्या=विवेकशक्त्या (कर्त्ता-३या) परित्यज्यते=परिहीयते (परि-त्यज-धा=कर्म्मणि-लट, क्रिया), (निर्बुद्धिः=निर्बोधः जनः (कर्त्ता) क्षयं=विनाशं (क्षि-धा+घञ, कर्म) एति=प्राप्नोति (क्रिया) बुद्धिनाशात् प्रणश्यति इति गीतोक्तिः, अतएव निधनता दारिद्रं इति यावत् (प्रातिपदिकार्थे १मा) सर्व्वापदां सर्व्वाः (कर्म-धा) आपदः तासां लज्जाहीनतादीनां (सम्ब) आस्पदं स्थानं (आ-पद-धा+घञ, १मा-विधेय-विश) अहो (खेदे-अव्य) दारिद्र-दोषो गुणराशिनाशी इति भावः अत्र शार्दूलविक्रीडितं वृत्तं, तल्लक्षणं यथा पिङ्गले शार्दूलविक्रीडितं मसौ तौ गादित्य ऋषयः ।७॥।७॥।२०॥

व्याख्यान्तरं। श्रीः इयते, श्रीपरिगतेन प्रभश्यते, निस्तेजसं परिभवन्ति, निर्व्वेदः आपद्यते, निर्विण्णेन शुक् इयते, शोकनिहितं बुद्धिः परित्यजति निर्बुद्धिना क्षयः इयते। २०॥

दरिद्र होने से लज्जा होती है, लज्जा होने से बल जाता रहता है, निबल आदमी हार जाने से अपने तईं अवमानित समझते हैं, अपने तईं अपमानित समझने वाले शोक पाते है, जिसे शोक होता है, उसकी बुद्धि जाती रहती है, निर्धन क्षय प्राप्त होते हैं, अहो दरिद्रता सब आपदों की जड़ है। २०॥

(20.) From poverty one goes to shame; being laden with shame one is deprived of his strength, being strengthless one is oppressed; from oppression one falls into despondency; the despondent goes to sorrow; the sorrow-stricken is forsaken by reason; and the reasonless gots to destruction. Oh! poverty is the root of all evils.

**वरमिति ।** अन्वयः। व्याघ्रगजेन्द्रसेवितं वनं वरं, द्रुमालयः ( वरं ) पक्वफलाम्बुभोजनं ( वरं ) तृणानि शय्या वरं, परिधानवल्कलं ( वरं ) बन्धुमध्ये धनहीनजीवनं न ( वरं ) । २१ ॥

व्याख्या। व्याघ्रगजेन्द्रसेवितं=व्याजिघ्रन्ति ये ते व्याघ्राः शार्दूलाः गजेषु इन्द्राः गजेन्द्राः हस्तिश्रेष्ठाः व्याघ्राश्च गजेन्द्राश्च ( द्वन्द्व ) तैः (३तत्) सेवितं अधिष्ठितं ( सेव-धा+क्त, १मा-विण ) वनं=अरण्यं ( १मा ) वरं=श्रेयः ईषत् प्रियं इत्यर्थः ( अव्य ) वरं तादृशे भीषणे वने मे वासः भवेत् इति भावः । द्रुमालयः=आलीयते अवतिष्ठते यस्मिन् (आ-ली-धा+अधि-अल ) आलयः आवासः, द्रुमः वृक्षः एव आलयः ( रूपककर्म्म-धारयः, १मा ) वरं=ईषत् प्रियः ( अव्य ) वरं वृक्षमूले मम अवस्थानं अस्तु ; पक्वफलाम्बुभोजनं=पक्वानि ( पच-धा+क्त ) फलानि पक्वफलानि ( कर्म्म धा ) तानि च अम्बूनि जलानि च ( द्वन्द्व ) तेषां (६तत्) भोजनं ( १मा ) वरं=ईषत् प्रियं ( अव्य ) वरं पक्वफलभोजनेन जलपानेन च जीवनधारणं मह्यं रोचते इति भावः, तृणानि=घासाः ( १मा ) शय्या=शय्यते अस्यां ( शी धा + अधि-क्यप् स्त्रियां आप ) शयनीयं ( १मा-विधेय विण ) वरं=ईषत् प्रियं (अव्य) वरं अरण्ये कुशादिरचितशय्यायां सुखेन निद्रां यास्यामि इत्यर्थः, परिधानवल्कलं=परिधीयते यत् तत् परिधानं ( परि-धा+कर्म्मणि ल्युट् ) वस्त्रं तदेव वल्कलं ( अत्र वल्कलं इति उद्देश्यपदं परिधानं इति विधेयपदं उद्देश्यस्य प्रथमकथनमेव उचितं, अत्र तु विधेयपदं परिधानं प्रथमत कथितं अतः विधेयाविमर्षदोषः, वल्कलं परिधानं इति उचितं, वसनञ्च वल्कलं इति पाठान्तरं साधु, अत्र सर्व्वत्र प्रथमा प्रातिपदिकार्थे ) वरं=ईषत् प्रियं ( अव्य ) वरं वल्कलं परिदधानः सुखेन कालं नेष्यामि इत्यर्थः, बन्धुमध्ये=बन्धूनां धनशालिनां स्वजनानां ( ६तत् ) मध्ये ( अधि ) धनहीनजीवनं=धनेन ( ३तत् ) हीनं ( हा-धा+क्त ) इत्थं धनहीनं तत् च तत् जीवनञ्चेति ( कर्म्म धा-

१मा ) न—न वरं ईषत् प्रियमपि न ( अव्य ). धनगर्वितबन्धुमध्ये धनहीनजीवनात् उक्तप्रकारः वनवासः सर्व्वथा श्रेयान् इत्यर्थः अत्र वंशस्थावृत्तं तल्लक्षणं यथा पिङ्गले, वंशस्था जतौ जौ। ६। २७॥ २१॥

व्याघ्र और हाथियों से भराहुआ वन बलकि अच्छा, पेड़ों के नीचे बसना, और पके हुए फल और पानी पीना बलकि अच्छा, घासों का बिछौना और बाकल का परिधान बल कि अच्छा, पर बन्धुओं के बीच में वे धन के बसना अच्छा नहीं। २१॥

(21.) It is better for a man to be in a wood, infested by tigers and elephants, to have tree for his house, to have ripe fruits for food and water for driuk, to have the grass for bed and the bark of trees for clothing, but not to live a life of penury in the midst of friends.

देशं इति। अन्वयः। सिंहाः सत्पुरुषाः गजाः देशं उत्सृज्य गच्छन्ति, काकाः कापुरुषाः मृगाः तत्र एव निधनं यान्ति। २२॥

व्याख्या। सिंहाः=मृगेन्द्राः ( कर्त्ता ) सत्पुरुषाः=सन्तः ( कर्म्मधा ) पुरुषाः साधवः ( कर्त्ता ) गजाः हस्तिनः ( कर्त्ता ) देशं=स्थानं जन्मभूमिं इत्यर्थः ( कर्म्म ) उत्सृज्य=परित्यज्य ( उत्-सृज-धा+ल्यप ) गच्छन्ति ( क्रिया ) यथा सिंहादयः स्वदेशवात्सल्यं विधाय यत्र मृगादयः लभ्यन्ते तत्रैव प्रतिवसन्ति, सज्जनाः अपि तथा इति भावः, काकाः=वायसाः ( कर्त्ता ) कापुरुषाः=कुत्सितपुरुषाः ( कुशब्दस्य कादेशः, कर्म्मधा, कर्त्ता ) मृगाः=हरिणाः ( कर्त्ता ) तत्र एव=तस्मिन् स्थाने एव स्वदेशे इत्यर्थः ( अधि-अव्य ) निधनं=मृत्युं (कर्म्म-२या, अन्तो नाशो द्वयोः मृत्युः मरणं निधनोऽस्त्रियां इत्यमरः) यान्ति=प्राप्नुवन्ति ( अत्र गत्यर्थस्य प्राप्त्यर्थत्वं, या धा+लट, क्रिया ) यथा स्वभावकातराः काकाः मृगाः स्वस्वस्थानं परित्यक्तुं असमर्थाः तत्रैव प्राणान् मुञ्चन्ति, कापुरुषाः अपि

तथैव आसन्नविपदि स्वदेशं त्यक्तुं अशक्नुवानाः विपद्यन्ते इति सरलार्थः। २२॥

वाच्यान्तरं। सिंहैः सत्पुरुषैः गजैः गम्यते, काकैः कापुरुषैः मृगैः निधनं याप्यते। २२॥

सिंह, सत्पुरुष और गज देश छोड़ के जाते हैं, पर काक कापुरुष और मृग वहीं नाश को प्राप्त होते हैं। २२॥

(22) Lions, men of courage and elephants, ~~live~~ away from their country; but the crows, cowards and deer, meet their death by remaining there.

**अधोऽधः इति।** अन्वयः। अधोऽधः पश्यतः कस्य महिमा न उपजायते, उपर्युपरि पश्यन्तः सर्व्वे एव दरिद्रति। २३॥

व्याख्या। अधोऽधः=आत्मानं अपेक्ष्य क्रमशः हीनतरहीनतमान् स्वल्पधनान् जनान् (कर्म्म-अव्य, उपर्य्यध्यधसः सामीप्ये इति द्विर्वचनं) पश्यतः=अवलोकयतः हीनतरैः सह आत्मतुलनां कुर्व्वतः (दृश-धा+शतृ ६ष्ठी १व,सम्ब-विश) कस्य=जनस्य (सम्ब) महिमा=महतः भावः (महत्-श+इमन्) महत्वं अहं धनी इति ज्ञानरूपं धनित्वाभिमानं इति यावत् (कर्त्ता) न उपजायते=न वर्द्धते (उप-जन-धा+कर्त्तरि-लट, क्रिया) सर्व्वे एव आत्मानं अपेक्ष्य निर्द्धनान् वीक्ष्य आत्मानं धनिनं मन्यन्ते इत्यर्थः, उपरि=उन्नतरोन्नतमान् आत्मापेक्षया धनवतः (कर्म्म, अव्य, पूर्व्ववत् द्विवचनं) पश्यन्तः=अवलोकयन्तः धनवत्तरैः आत्मतुलनां कुर्व्वन्तः इत्यर्थः (दृश-धा+शतृ·१मा-३व) सर्व्वे=जनाः (कर्त्ता) दरिद्रति=आत्मानं दरिद्रं मन्यन्ते (दरिद्र-धा+लट १पु, ३व, क्रिया) सर्व्वेएव आत्मापेक्षया धनिनः दृष्ट्वा आत्मानं निर्धनं मन्यन्ते इत्यर्थः, अतः सर्व्वथा धनवृद्धिः करणीया इति भावः। २३॥

वाच्यान्तरं। महिमा न उपजन्यते, सर्व्वैः दरिद्र्यते। २३॥

अपनी अपेक्षा नीचे को जो देखता है, ऐसे किस आदमी की महिमा नहीं बढ़ती है, ऊपर ऊपर को देखनेवाले सब अपने तईं दरिद्र समझते हैं। २३ ॥

(23,) Who has not his importance raised on loo king to the position of those below him? On looking to the position of those that are superior to him every one considers himself lowered in importance,

**आलस्यं इति।** अन्वयः। आलस्यं, स्त्रीसेवा, सरोगिता जन्मभूमिवात्सल्यं, सन्तोषः, भीरुत्वं (एते) षट् महत्वस्य व्याघाताः। २४ ॥

व्याख्या। आलस्यं=अलसस्य भावः (अलस-अ+ष्यण) जड़ता कार्य्येषु वैमुख्यमित्यर्थः (कर्त्ता विण) स्त्रीसेवा=स्त्रीणां (६तत) सेवा=स्त्रीभिः सहवासेन कालयापनं इत्यर्थः (कर्त्ता-विण) सरोगिता=चिररोगभोगः (कर्त्ता-१मा), जन्मभूमिवात्सल्यं=वत्सलस्य भावः (वत्सल-अ+ष्यण) वात्सल्यं स्नेहः, जन्मनः (६तत्) भूमिः तस्यां (७तत्) वात्सल्यं स्वदेशानुरागेण विदेशगमनवैमुख्यमिति यावत (कर्त्ता-विण) सन्तोषः—मनसः तुष्टिः (सम्-तुष-घा+अल) यत् किञ्चिल्लाभात् पर्य्याप्तज्ञानेन अर्ज्जने निवृत्तिः इत्यर्थः (कर्त्ता-विण) भीरुत्वं=भयशीलत्वं सर्व्वेषु कार्य्येषु विपदः विघ्नस्य वा आशङ्का इत्यर्थः (सर्व्वत्र कर्त्तः परिचारक-विण) एते षट् (षष्-अ+१मा ३व, (कर्त्ता) महत्वस्य=महतः भावः (महत्-अ+त्व) तस्य महिम्नः (व्याघाताः इत्यस्य कर्म्म-६ष्ठी) व्याघाताः=विघ्नस्वरूपाः (वि-हन्-घा+घञ, कर्त्ता विण) भवन्तीति शेषः एतेषां अन्यतमदोषेण युक्तः नरः न उन्नतिं लभते इत्यर्थः। २४ ॥

वाच्यान्तरं। आलस्येन, स्त्रीसेवया, सरोगतया, जन्मभूमिवात्सल्येन, सन्तोषेण, भीरुत्वेन षड्भिः व्याघातैः भूयते। २४ ॥

आलस्य, स्त्रीसेवा, रोगी रहना, जन्मभूमि पर चाह, सन्तोष, भीरुता, यह महिमा के व्याघात हैं। २४ ॥

(24.) Idleness, passion for women, diseased state, home-sickness, want of aspiration, and cowardice, are the six obstacles in the way of greatness.

**अलब्धं इति।** अलब्धं च लिप्सेत एव, लब्धं अवेक्षया रक्षेत्, रक्षितं नित्यं वर्द्धयेत्, वृद्धं तीर्थेषु निःक्षिपेत्। २५॥

व्याख्या। अलब्धं अप्राप्तं अनुपार्ज्जितं (न-लभ-धा+क्त,) वस्तु (कर्म्म) लिप्सेत=लब्धुं इच्छेत् उपार्ज्जितुं यतेत इत्यर्थः (लभ्-धा+सन=लिप्स-धा+विधि, क्रिया) लब्धं=उपार्ज्जितं वस्तु (कर्म्म) अवेक्षया=प्रतिदिनदर्शनपेटकादिमध्यस्थापनरूपप्रतिपालनेन (अव-ईक्ष-धा+ड, करण) रक्षेत्=गोपयेत् चौरादिभिः यथा अपहृतं न भवेत् तथा कुर्य्यात् (रक्ष-धा+विधि, क्रिया) रक्षितं=गुप्तं वस्तु (कर्म्म) नित्यं प्रतिदिनं (अत्यन्तसंयोगे २या) वर्द्धयेत्=वृद्धिं प्रापयेत् वाणिज्यादौ नियोज्य अधिकं कुर्य्यादित्यर्थः वृद्धं=वृद्धिप्राप्तं वस्तु (कर्म्म) तीर्थेषु=पात्रेषु दानयोग्यपात्रेषु इत्यर्थः (अधि, तीर्थंशास्त्राध्वरक्षेत्रोपायनारीरजःसु च, अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु इति मेदिनी) निक्षिपेत्=विनियोजयेत्=दद्यात् इत्यर्थः (नि-क्षिप-धा+विधि, क्रिया)। २५॥

वाच्यान्तरं। अलब्धं लिप्स्येत, लब्धं रक्ष्यंत, रक्षितं वर्द्ध्येत, वृद्धं निक्षिप्येत। २५॥

जो नहीं मिला है, उस के पाने के लिए इच्छा करनी और पाए हुए की रक्षा करनी, उसको, जिसको रक्षा की गई है, बढ़ाना, और बढ़ाए हुए को सत्पात्र में देना चाहिए। २५॥

(25.) You should seek for that which you have not gained, and preserve carefully what you have gained; you should constantly increase your stock, and what you thus save bestow on deserving men.

**अञ्जनस्येति ।** अन्वयः । अञ्जनस्य क्षयं वल्मीकस्य च वर्द्धनं दृष्ट्वा दानाध्ययनकर्म्मभिः दिवसं अवन्ध्यं कुर्य्यात् । २६ ॥

व्याख्या । अञ्जनस्य=मस्याः ( क्षयं इत्यस्य कर्त्ता-६ष्ठी ), क्षयं=नाशं ( क्षि-धा+अल, कर्म्म ) वल्मीकस्य=कीटविशेषकृतमृत्तिकास्तूपः वल्मीकः तस्य ( सञ्चयं इत्यस्य कर्त्ता-६ष्ठी ) सञ्चयं=संग्रहं वर्द्धनं इत्यर्थः ( सम्-चि-धा+अल, कर्म्म ) लिखन्व्ययपरिमितव्ययेन मसी क्षयति, क्षुद्र-कीटैरानीताभिः मृत्तिकाभिः वल्मीकः वर्द्धते इति दृष्ट्वा=अवलोक्य ( दृश-धा+क्त्वा ) दानाध्ययनकर्म्मसु=दानं सत्पात्रेषु निक्षेपः ( दा-धा+भावे-ल्युट ) कर्म्म यागादिक्रिया परोपकारादि कर्म्म वा ( द्वन्द्व) तेषु (अधि-करण-विवक्षया-७मी ) दिवसं=दिनं ( कर्म्म ) अवन्ध्यं=वन्ध्यं, निष्फलं वृथा इत्यर्थः न वन्ध्यं ( नञ् तत् ) अवन्ध्यं सफलं ( कर्म्म-विण ) कुर्य्यात् ( क्रिया ) । २६ ॥

वाच्यान्तरं । दिवसं अवन्ध्यं क्रियेत । २६ ॥

मसी के क्षय को और वल्मीक की वृद्धि को देख के दान, अध्ययन और परोपकारादि कर्म्म से अपने दिन को सफल करना चाहिए । २६ ॥

( 26. ) On observing the consumption of ink in writing and accumulation of particles of earth by warms, you should spend your days profitabiy in charity and study of sacred books.

**जलबिन्द्विति ।** अन्वयः । घटः जलबिन्दुनिपातेन क्रमशः पूर्य्यते, सः सर्व्वविद्यानां धर्म्मस्य धनस्य च हेतुः । ६७ ॥

व्याख्या । उक्तमर्थं भङ्ग्यान्तरेणाह जलेति । घटः कलसः ( कर्म्म-१मा ) जलबिन्दुनिपातेन=जलानां ( ६तत् ) बिन्दवः तेषां ( ६तत् ) निपातः तेन बिन्दुक्रमेणाज सपातनेन (कर्त्ता-३या) क्रमशः=क्रमेण ( क्रम-श+चशस् ) पूर्य्यते=परिपूर्णः भवति ( पूर-धा+कर्म्मणि लट, क्रिया )

सः—विन्दुनिपातः ( प्रातिपदिकार्थे १मा ) सर्व्वविद्यानां=सर्व्वाः ( कर्म्मधा ) विद्याः तासां ( सम्ब ) धर्म्मस्य ( सम्ब ) धनस्य च ( सम्ब ) हेतुः=कारणं ( १मा-विधेय-विण ) जनः प्रतिदिनं अल्पाभ्यासेन विद्वान् ; यत्किञ्चिद्धर्म्म-संग्रहेण धार्म्मिकः, कपर्द्दकसञ्चयेन धनवान् च भवतीति भावः। २७॥

वाच्यान्तरं। जलविन्दुनिपातः घटं पूरयति। २७॥

एक एक बूंद जल गिराने से हौले हौले कलसा भर जाता है, वही सब विद्या, धर्म्म और धन के बढ़ाने का ढंग है। २७॥

(27.) A vessel is gradually filled up by constant fall of water-drops; the same is the way of acquiring knowledge of all kinds, virtue and wealth.

**हीनसेवा इति।** अन्वयः। हीनसेवा न कर्त्तव्या महदाश्रयः कर्त्तव्यः, शौण्डिनीहस्ते पयः अपि वारुणी इति अभिधीयते। २८॥

व्याख्या। हीनसेवा=हीनस्य ( ६तत् ) सेवा नीचपुरुषाश्रयः (कर्म्म-१मा ) न कर्त्तव्या=न विधेया ( कर्म्मणि तव्यत्, क्रिया ), महदाश्रयः=आश्रियते इति आश्रयः शरणं ( आ-श्रि-धा+भावे अल् ) महतः ( ६तत् ) आश्रयः साधुजनसंसर्गः ( कर्म्म १मा ) कर्त्तव्यः=विधेयः ( क्रिया ) लोकैः इति शेषः। अत्र हेतुमाह, शौण्डिनीहस्ते=शौण्डिनः शौण्डिकस्य स्त्री शौण्डिनी सुराविक्रेत्री तस्याः ( ६तत् ) हस्ते ( अधि ) पयः अपि=दुग्धं अपि ( कर्म्म-१मा ) वारुणी=सुरा मद्यं ( इतियोगे १मा वारुणीगण्ड दूर्व्वायां प्रतीचीसुरयोरपि इति मेदिनी ) इति ( अव्य ) अभिधीयते=कथ्यते ( अभि-धा-धा+कर्म्मणि लट्, क्रिया ) लोकैः इति शेषः, असत्संसर्गेण साधुत्वं न गम्यते इत्यर्थः। २८॥

वाच्यान्तरं। हीनसेवां न कुर्य्यात्, महदाश्रयं कुर्य्यात् पयः अपि अभिदधाति। २८॥

हीन की सेवा करनी नहीं चाहिये, बड़े का आश्रय लेना चाहिए, शौण्डिनी के हात में दूध भी हो, तो लोग कहते हैं कि, मद्य है । २८ ।

( 28. ) You should not serve persons of mean spirit, but those that are high-minded; even milk in the hand of a woman of the wine-selling cast passes for wine.

**मतिः इति ।** अन्वयः । मतिः एव बलात् गरीयसी यदभावे करिणां इयं दशा, करिणः डिण्डिमः हस्तिपकाहतः क्वणन् ( सन् ) इति घोषयति इव । २९ ॥

व्याख्या । मतिः एव=बुद्धिः एव ( प्रातिपदिकार्थे-१मा ) बलात्= बलं अपेक्ष्य ( पञ्चमी विभक्तेः इति ५मी ) गरियसी=गुरुतरा ( गुरु- श्र=ईयसुन-स्त्रियां ईप्, १मा-विष ) शरीरबलं धिक् बुद्धिबलं बलमेव इति भावः यदभावे=यस्याः मतेः ( ६तत् ) अभावे ( अपि ) करिणः= करः शुण्डं विद्यते येषां ( बहुव्री, करीवर्णोपली रश्मी पानी प्रत्यायः शुण्डयोः इति मेदिनी ) तेषां हस्तिनां ( सम्ब ) इयं=प्रत्यक्षदृश्यमाना ( १मा-विष ) दशा=अवस्था ( प्रातिपदिकार्थे-१मा ) हीनबलमनुष्य- वहनं तदधीनता च इत्यर्थः, करिणः=हस्तिनः, तद्गमखलप्र: इत्यर्थः ( सम्ब ) डिण्डिमः=वाद्यविशेषः ( कर्त्ता ) हस्तिपकाहतः=हस्तिनं पाति पालयति यः सः हस्तिपः ( पा-धा+क्त ) सः एव हस्तिपकः ( स्वार्थे-क ) हस्तिनः यन्ता हस्त्यरोहकः तेन ( ३तत् ) आहतः वादितः ( आ-हन-धा+क्त, कर्त्ता-विष ) अतएव क्वणन्=शब्दं कुर्व्वन् सन् (क्वण- धा+शतृ ) इति=एवं पूर्व्वोक्तां दशां ( अव्य ) घोषयति इव=प्रचा- रयति इव ( ( घुष-धा+णिच+लट, अव्य, इव उत्प्रेक्षावाचि अव्ययं ), पुरा हस्तिगमनमवये लोकानां ज्ञापनाय हस्तिपकेन डिण्डिमः वाद्यते, तत्र उत्प्रेक्षते, डिण्डिमं लोकज्ञापनाय न वादयति अपितु मतिरेव बलात् गरीयसीति ज्ञापयितुं वादयति इति सरलार्थः । २९ ॥

वाच्यान्तरं। हस्तिपकाहतेन क्वणता डिण्डिमेन घुष्यते। २९॥

हाथी की घण्टी माहुत से बजाई जाके यह घोषना करती है कि बुद्धि बल से बड़ी है, जिस के न रहने से हाथिहों की यह दशा हुई है। २९॥

(29.) Intellect is superior to physical strength, it is from want of intellect that the elephants are reduced to this state: it is announced by beat of drum that elephants are struck by the *mahuts*.

---

## गुरूणां पूजा।

गुरूणां=पित्रादिपूज्यानां (कर्म्मणि ६ष्ठी) पूजा=सम्मानना (पूज-धा+अ, प्रातिपदिकार्थे-१मा), युधिष्ठिर उवाच। युधिष्ठिरः=युधि युद्धे स्थिरः अचलः (अलुकसमासः) पाण्डोः ज्येष्ठपुत्रः (कर्त्ता, अस्य विवरणं वकवधे द्रष्टव्यं) उवाच=कथयामास पप्रच्छ इति यावत् (वच-धा+लिट्, क्रिया)।

वाच्यान्तरं। युधिष्ठिरेण ऊचे।

**महानिति।** अन्वयः। भारत अयं धर्म्मपथः महान् बहुशाखः च। इह स्वित् धर्म्माणां किंएव अनुष्ठेयतमं मतं। १॥

व्याख्या। भारत=भरतस्य गोत्रापत्यं (भरत-अ+षण्) हे भीष्म (सम्बो) अयं=मन्वादिप्रणीतः (सर्व्व-कर्म्म-विण) धर्म्मपथः धर्म्मस्य पन्थाः (६तत समासान्तः अच्) धर्म्ममार्गः (प्रातिपदिकार्थे-१मा) महान्=अतिविस्तीर्णः (१मा-विण) बहुशाखः च=बह्वः शाखाः यस्य (बहुव्री) नानाविषयभेदेन विविधः इत्यर्थः १मा-विण) इह=जगति (अधि अव्य)

स्वित् ( प्रश्ने अव्य ) धर्म्माणां ( सम्ब ) किंएव ( कर्म्म-१मा ) अनुष्ठेयतमं =अनुष्ठेयं आचरितव्यं ( अनु-स्था-धा+यत् ) इदं एषां अतिशयेन अनुष्ठेयं ( अनुष्ठेय-अ+तमप ) सर्व्वेभ्यः धर्म्मेभ्यः अतिकर्त्तव्यं इत्यर्थः ( कर्म्म-विण ) मतं=अनुमोदितं भवतः इति शेषः, ( मन-धा+वर्त्तमाने क्त, क्रिया ) भक्तियोगकर्म्मयोगाष्टाङ्गयोगज्ञानयोगभेदेन धर्म्मः तु विविधः, तेषु किं आचरिष्यामि इति भावः । १ ॥

वाक्यान्तरं । किं अनुष्ठेयतमं भवान् मन्यते । १ ॥

युधिष्ठिर ने कहा, हे भारत यह धर्म्ममार्ग बहुत बड़ा हैं, इस की बहुत शाखें हैं, इस संसार में इन धर्म्मों में से किस धर्म्म को आप बढ़के अनुष्ठानयोग्य समझते है । १ ॥

Yudhisthir said,

(1.) Oh Bharat! Extensive is this way to duty and it has many branches; which of these paths of duty are considered as excellent in practice?

**किंकार्य्यमिति ।** अन्वयः । सर्व्वधर्म्माणां गरीयः किं कार्य्यं भवतः मतं । यथा अहं इह प्रेत्य च परमं धर्म्मं आप्नुयाम् । २ ॥

व्याख्या । सर्व्वधर्म्माणां=सर्व्वे धर्म्माः ( इन्द्व ) तेषां ( निर्द्धारि-६ष्ठी ) गरीयः=इदं एतेषां गुरु ( गुरु-अ—ईयस् ) गुरुतरं ( कर्म्म-विण ) कार्य्यं=कर्म्म ( कर्म्म-१मा ) भवतः=तव भीष्मस्य ( कर्त्ता-६ष्ठी ) मतं=अनुमोदितं ( क्रिया ) यथा=येन कार्य्येण ( यद्-अ+था, अव्य ) अहं ( कर्त्ता ) इह=अस्मिन् जगति ( अधि-अव्य ) प्रेत्य च=परलोकंच गत्वा ( प्र-इ-धा+ल्यप् अव्य ) मरणान्तर मित्यर्थः परमं=उत्कृष्टं ( कर्म्म-विण ) धर्म्मं=धर्म्मफलं सुखं इत्यर्थः ( कर्म्म ) आप्नुमः=लभेमहि ( आप्-धा+लट-१ब, क्रिया ) तत्धर्म्मं ब्रूहि, यत् इह परत्र च सम सुखाय भवति इति भावः । २ ॥

वाच्यान्तरं। गरीयः किं कार्य्यं भवान् मतवान्। यथा मया परमः धर्म्मः आप्यते। २॥

सब धर्म्मों के कार्य्य में से किस कार्य्य को बहुत बड़ा समझते हैं? जिस से मैं इस संसार और परलोक में परमधर्म्म को पाऊं। २॥

(2.) Which of the acts enjoined by all systems of morality are considered by you as most excellent? so, by doing which, I may attain to the highest standard of morality in this world as well as in the next.

भीष्मः उवाच=भीष्यते यस्मात् (भी धा+णिच+अपादाने-मक) भीष्मो हि अष्टवसूनां अष्टमः वसुः, शापात् शान्तनोः औरसात् गङ्गागर्भे जातः, सहि अस्त्रविद्यायां भार्गवस्य अन्तेवासी, अद्वितीयधनुर्धरश्च युद्धे कोऽपि तस्य प्रतिद्वन्द्वी नासीत्। अथ भीष्मजनन्यां स्वर्गतायां शान्तनुः मत्स्यगन्धां पराशरोपभुक्तां पश्चात् पद्मगन्धा इति विख्यातां धीवरदुहितरं सत्यवतीं उद्वोढ़ु मैच्छत् धीवरस्तु भीष्मे तदर्थं वा वर्त्तमाने मद्दौहित्रः राज्यं न लप्स्यते इति विचिन्त्य तं प्रत्याचचे, तेन शान्तनुः दुःखितमना अभवत्, पितृभक्तभीष्मः तत्परिज्ञाय प्रतिज्ञातवान् नाहं राज्यं न वा दारान् ग्रहीष्यामि तेन मदंशात् धीवरदौहित्रस्य भयं न भवेत्, धीवरः तच्छ्रुत्वा शान्तनवे सत्यवतीं ददौ। ततः प्रभृति भीष्मः ऊर्द्धरेताः अनासक्तः संसारं सिसेवे।

कुरुक्षेत्रसमरे दुर्य्योधनपक्षे सः एव प्रथमः सेनापतिः, तेन पाण्डवसैन्येषु निहन्यमानेषु पाण्डवाः शङ्किताः अभवन्, ततः नारायणावतारः कृष्णः तान् उपदिदेश, युद्धे नपुंसकं अवलोक्य भीष्मः अस्त्रं न ग्रहिष्यते, तत द्रुपदपुत्रं नपुंसकं शिखण्डिनं पुरतः स्थापयित्वा अर्ज्जुनेन योद्धुं गन्तव्यमिति तथा कृते भीष्मेण धनुः परित्यक्तः तदैव कृष्णोपदेशेन अर्ज्जुनः शरवर्षैः तं अपातयत्, भीष्मः तेन प्रकारेण शरशय्यायां निपपात, उत्तरायणे मुमुर्षुः इच्छामृत्युवशात् तदा दक्षिणायने प्राणान् न मुमोच, ततः

युधिष्ठिरः शरशय्याशयानं पितामहं भीष्मं उपसंगम्य धर्मं पप्रच्छ, तदेव अस्मिन् संगृहीतं । भीष्मः ( कर्त्ता ) उवाच ( क्रिया ) ।

**मातापित्रोरिति ।** अन्वयः । मातापित्रोः गुरूणां च पूजा मम बहुमता, इह युक्तः नरः लोकान् महत् यशः च अश्नुते । ३ ॥

व्याख्या । आदौ गुरुपूजायाः गुणं वर्णयति, मातापित्रोः = माता च पिता च ( द्वन्द्व ) तयोः जनकजनन्योः ( पूजा इत्यस्य कर्म्म-६ष्ठी-२व ) गुरूणां च = आचार्य्याणां वेदाध्यापकानां इत्यर्थः ( पूजा इत्यस्य कर्म्म ६ष्ठी-३व ) ( पूज-धा+कर्म्म १मा ) मम = भीष्मस्य ( कर्त्ता ६ष्ठी ) बहुमता ( बहु-मन-धा+क्त, क्रिया ) सर्व्वदेवतापूजाभ्यः यागयज्ञादिभ्यः च अधिकां स्वीकरोमि इति शेषः, इह = अस्यां पूजायां ( अधि-अव्य ) युक्तः = रतः इत्यर्थः ( युज-धा+कर्त्तरि क्त, कर्त्ता-विण ) नरः = मनुष्यः ( कर्त्ता ) लोकान् = स्वर्गान् लोकान् ( कर्म्म ) महत् = अत्यन्तं ( कर्म्म-विण ) यशः च = ख्यातिं च ( कर्म्म २या-१व ) अश्नुते = प्राप्नोति ( अश-धा+लट, क्रिया ) तस्य इह यशोलाभः परत्रच सुखलाभः भवेदित्यर्थः । ३ ॥

वाच्यान्तरं । पूजा अहं बहुमतवान्, युक्तेन नरेण लोकाः अश्यन्ते यशः च अश्यते । ३ ॥

भीष्म ने कहा, माता पिता की पूजा मैं सब से बड़ी समझता हूं । जो नर इस पूजा में लगा रहता है, वह ( स्वर्गादि ) लोक, और यश को पाता है । ३ ॥

( 3. ) I highly approve of the honor done to father, mother, and spritual guide ; a man that does so, attains-to-heaven and gains high reputation.

**सम्यगिति ।** अन्वयः । भारत एतेषु सम्यक् वर्त्तस्व, ( ततः ) त्रिषु लोकेषु यशः प्राप्स्यसि, ते भद्रं ( भविष्यति ) सुमहत् फलं धर्म्मं च प्राप्स्यसि । ४ ॥

व्याख्या। भारत=भरतस्य गोत्रापत्यं पुमान् तत्सम्बुद्धौ हे युधिष्ठिर ( सम्बो ) एतेषु=मात्रादिषु ( अधि ) सम्यक्=यथोचितं (क्रिया-विश ) वर्त्तस्व=आचर इत्यर्थः त्वमिति शेषः ( वृत-धा+लोट-२यु-१व, क्रिया ) ततः तस्मात् त्रिषु ( अधि-विश ) लोकेषु=स्वर्गमर्त्त्यपातालेषु=( अधि ) यशः=ख्यातिं ( कर्म्म-२या ) अवाप्स्यसि=लप्स्यसे (अव-आप-धा+लृट, क्रिया ) ते=तव ( सम्ब ) भद्रं=शुभं (कर्त्ता ) भविष्यतीति शेषः, सुमहत् फलं=सुमहत् अत्यधिकं फलं धर्म्मं च=सुकृतं पुण्यमित्यर्थः ( कर्म्म ) अवाप्स्यसि ( क्रिया ) ते सर्व्वत्रैव शुभं भविष्यति इति भावः। ४ ॥

वाच्यान्तरं। इष्यतां ( त्वया ) यशः प्राप्यते, भद्रेण भविष्यते, धर्म्मः प्राप्यते। ४ ॥

इस का आचरण अच्छे से करो, तीनों लोक में यश, भलाई, धर्म्म और महाफल प्राप्त होगे। ४ ॥

( 4. ) If you act strictly in the above ways, you would acquire fame in the three worlds—you would be blessed thereby—you would acquire virtue—and you would be highly rewarded.

**नैतानिति।** अन्वयः। जातु एतान् न अतिशयीत, न अत्यश्नीयात्, न दूषयेत्, नित्यं परिचरेत् च तत् वै उत्तमं सुकृतं। ५ ॥

व्याख्या। जातु=कदाचित् ( अधि-अव्य ) एतान्=मातापितृगुरून् ( कर्म्म ) न अतिशयीत=न अतिक्रामेत् भोगेषु वा क्रियासु वा स्वस्य आधिक्यं न प्रदर्शयेत् इत्यर्थः ( अति-शी-धा+लट, परस्मै-पदम् आर्षं। क्रिया ) सर्व्वत्रैव जनः इति कर्तृपद मध्याहार्य्यं। न अत्यश्नीयात्=न अतिक्रम्य भक्षयेत्, तेभ्यः अदत्त्वा केवलं स्वयमेव मिष्टादीनि न भक्षयेत् किन्तु तेभ्यः दत्त्वा तैः प्रसादीकृतानि खाद्यानि स्वयं भक्षयेत् इति भावः ( अश-धा+विधि क्रिया), न दूषयेत्=न उपालभेत न तिरस्कुर्य्यात् इत्यर्थः

( दूष-धा+णिच्+विधि, क्रिया ), नित्यं=नियतं सततं वा ( अत्यन्त संयोगे-२या ) परिचरेत् च=सेवेत ( परि-चर-धा+विधि, क्रिया ) तत्= अनतिशयतादिकं ( प्रातिपदिकार्थे-१मा ) वै=एव निश्चितमित्यर्थः (धर्म्य सुकृतं=सुकार्य्यं पुण्यमित्यर्थः ( १मा-विभ ) गुरुषु सदा विनीतैर्भवितव्यमिति भावः । ५ ॥

वाच्यान्तरं । एते नातिशय्येरन्, नात्यश्नीरन्, दूष्येरन्, परिचर्य्येरन् । ५ ॥

कभी इनको भोग या और कामों में अपनी अधिकाई दिखानी, या बिन उनको दिए भोजन करना और इनकी निन्दा करनी न चाहिए, नित्य इनकी सेवा करनी चाहिये, यही सब से बड़े पुण्यका काम है । ५ ॥

( 5. ) You should never carry these things to excess ; you should not eat at good things to the exclusion of them (parents and teacher ) nor find fault with them ; you should do homage to them every day ; this is your highest duty.

कीर्त्तिमिति । अन्वयः । राजसत्तम=कीर्त्तिं पुण्यं यशः लोकान् च आप्स्यसे यस्य एते त्रयः आदृताः, तस्य सर्व्वे लोकाः आदृताः । ६ ॥

व्याख्या । राजसत्तम=अयं एषां अतिशयेन सन्-(सत्-श+तमप ) सत्तमः श्रेष्ठः राजसु ( ७तत् ) सत्तमः तत्सम्बुद्धौ हे नृपश्रेष्ठ युधिष्ठिर ( सर्व्वी ) कीर्त्तिं=प्रतिष्ठां ( कृत्-धा+भावे-क्त, कर्म्म ) पुण्यं=सुकृतं ( कर्म्म आत्कर्म्ममङ्गिया पुण्यश्रेयसी सुकृतं वृषः इत्यमरः ) यशः= शौर्य्यादिजनितां ख्यातिं लोकान्=स्वर्गादिलोकान् (कर्म्म) आप्स्यसे= लप्स्यसे ( आप-धा+लट, क्रिया ) एतेषां पूजनमिति शेषः । यस्य= जनस्य येन जनेन इत्यर्थः ( कर्त्ता-६ष्ठी) एते त्रयः=मातापितृगुरवः (कर्म्म- १मा-३व ) आदृताः=सम्मानिताः ( आ-दृ-धा+कर्म्मणि-क्त, क्रिया ) तस्य=जनस्य तेन जनेन इत्यर्थः सर्व्वे लोकाः=समस्ताः जनाः त्रिभुवन-

श्विन: इत्यर्थ: ( कर्म-१मा ) आदृता:=सम्मानिता: मातापितृगुरूणां पूजनात् सर्व्वेषां पूजा भवेत् इत्यर्थ: ( क्तस्य च वर्त्तमाने इति कर्त्तरि-६ष्ठी क्रिया ) । ६ ॥

वाच्यान्तरं । कीर्त्तिः पुण्यं यशः आप्स्यते, लोका: आप्स्यन्ते, सर्व्वान् आद्रितवान् सः, यः एतान् त्रीन् आद्रितवान् । ६ ॥

हे राजश्रेष्ठ कीर्त्ति, पुण्य, यश और स्वर्गादि लोक की प्राप्ति होगी। जो इन तीनों का आदर करता है, उसने सब लोक का आदर किया। ६ ॥

( 6 ) You will gain fame, virtue, credit ; and the heaevns, Oh Yudhisthir ; the world is honored by him who honors those three.

अनादृता: इति । अन्वय: । परन्तप यस्य तु एते अनादृता: तस्य सर्व्वा क्रिया: अफला:, तस्य अयं लोक: न, परलोक: च एव न । ७॥

व्याख्या । अधुना अपूजने दोषमाह, एते=मातापितृगुरव: ( सर्व्व-कर्म-१मा ) यस्य=जनस्य ( कर्त्तरि-६ष्ठी ) अनादृता:=अवज्ञाता: ( न-आ-दृ-धा+कर्म्मणि-क्त, क्रिया ), तस्य=जनस्य ( सर्व्व-सम्ब ) सर्व्वक्रिया: =यागयज्ञहोमादिका: ( प्रातिपदिकार्थे-१मा ) अफला=न फलं यासां ( बहुव्री ) निष्फला वृथा इत्यर्थ: ( १मा-विध ), तस्य=जनस्य ( सर्व्व-सम्ब ) अयं लोक.=संसार: ( प्रातिपदिकार्थे-१मा ) न ( अव्य ) अस्मिन् संसारे यश: न भवेत् इत्यर्थ:। पर: लोक: च न। तस्य परलोके च यश: न स्यात् इत्यर्थ: । ७॥

उस को सब क्रिया निष्फल है, और न वह इस लोक का और न परलोक का रहा, जिस ने इन तीनों गुरुओं की अवमानना की। ७ ॥

( 7. ) All the acts of him that disregards them go for nothing. Oh Yudhisthir ! neither this world nor the next is

for that man who treats with contempt all those three persons every day.

**अमानिता: इति ।** अन्वय: । यस्य एते त्रय: गुरव: नित्यं एव अमानिता:, अस्मिन् अपरे च लोके तस्य यश: न प्रकाशते, परत्र अन्यत् अपि कल्याणं न समुदाहृतं । ८ ॥

व्याख्या । पूर्व्वोक्तमेव विवृणोति । यस्य=जनस्य (कर्त्ता-६ष्ठी) एते त्रय: गुरव: मातापितृज्ञानदातार: (कर्म्म-१मा) नित्यं एव=सततं एव (अत्यन्तसंयोगे-२या) अमानिता:=अनादृता: अवज्ञाता: इत्यर्थ: (न-मन-धा=णिच्+कर्म्मणि-क्त, क्रिया), अस्मिन् लोके=इहलोके अपरे लोके स्वर्गादौ च इत्यर्थ: (अधि) तस्य जनस्य (सम्बन्ध) यश:= सुख्याति: (कर्त्ता १मा) न प्रकाशते=न प्रकटीभवति स कुत्रापि न यशस्वी भवति इत्यर्थ: (प्र-काश-धा+लट, क्रिया), परत्र=परलोके (पर-श+त्र, अधि-अव्य) अन्यत् अपि=अपरं किमपि (कर्म्म-विण) कल्याणं =मङ्गलं सुखं इति यावत् (कर्म्म) न समुदाहृतं=न कथितं शास्त्र-कारै: इति शेष: (सम्-उत्-आ ह-धा+कर्म्मणि-क्त, क्रिया) । ८ ॥

वाच्यान्तरं । य: एतान् त्रीन् गुरून् अमन्यते, यशसा न प्रकाश्यते, समुदाहृतवन्त: (शास्त्रकारा:) । ८ ॥

न इस लोक में और न परलोक में उसका यश प्रगट होता है, और परलोक में कुछ कल्याण भी उसके लिए नहीं है । ८ ॥

(8.) His fame does not spread in this world or the next; no other blessings of the other world are mentioned for him in the shastras.

**य: इति ।** अन्वय: । य: अवितथेन कर्म्मणा ऋतं ब्रुवन् अमृतं संप्रयच्छन् सन् आवृणोति, तं पितरं मातरं च एव मन्येत, अस्य कृतं जानन् तस्मै न द्रुह्येत् । ९ ॥

व्याख्या । पूजायां हेतुमाह । य:=जन: गुरु: इत्यर्थ: (कर्त्ता)

अवितथेन=न वितथं न मिथ्या तेन (करण विण) कर्म्मणा=कार्य्येण प्रवचनेन व्याख्यानेन इत्यर्थः (करण) ऋतं सत्यं वेदमित्यर्थः (कर्म्म) ब्रुवन्–कथयन् व्याचक्षाणः इत्यर्थः (ब्रू-धा+शतृ, कर्त्ता-विण) अमृतं =सुधां (कर्म्म) संप्रयच्छन्=ददत् वेदव्याख्यानं अमृतदानतुल्यं इत्यर्थः (सम्-प्र-दा-धा+शतृ) आवृणोति=वेदोपदेशदानेन अनुगृह्णाति इत्यर्थः (आ-वृ-धा+लट्, क्रिया) तं=गुरुं (कर्म्म) पितरं=जनकं (पा-धा+तृच् कर्म्म) मातरं (मा-धा+तृच्, कर्म्म) च एव (अव्य) मन्येत= आद्रियेत (मन-धा+कर्त्तरि लट्, क्रिया अस्य=गुरोः (कृतं इत्यस्य कर्त्ता-६ष्ठी) कृतं=कार्य्यं तत्कृतमुपकारं इत्यर्थः (कर्म्म) जानन्=संस्मरन् कृतज्ञः सन् इत्यर्थः (ज्ञा-धा+शतृ) तस्मै=गुरवे (क्रुधद्रुहेर्ष्यासूयार्थानां यम्प्रति कोपः इति ४र्थी) न द्रुह्येत्=न हिंसेत विरुद्धं नाचरेदित्यर्थः (द्रुह-धा+विधि, क्रिया)। ६॥

वाच्यान्तरं। येनाद्रियते ऋतं ब्रुवता अमृतं ददता। सः पिता च माता च मन्येत, कृतं जानता न द्रुह्येत। ६॥

जो सत्य प्रवचन से अमृत तुल्य वेदवाणी कहता हुआ अनुग्रह करता है, उस गुरुका, माता और पिता का आदर करना चाहिए, इन के किए हुए कामों को स्मरण करके इनका विरुद्धाचरण करना नहीं चाहिए। ६॥

(9.) One should honor the charjya Athat spreads nector, as it were, by expounding the *vedas* by a correct interpritation of them, and regard him as his father and mother; and should not, in acknowledgement of the benifits conferred on him by the teacher injure him.

**विद्यामिति।** अन्वयः। ये विद्यां श्रुत्वा प्रत्यासन्नाः (सन्तः) मनसा कर्म्मणा वा गुरुं न आद्रियन्ते अथवा गुरुं नाद्रियन्ते ते इत्यन्वयः तेषां भ्रूणहत्याविशिष्टं पापं, लोके तेभ्यः अन्यः पापकृत् न अस्ति। १०॥

व्याख्या। ये=जनाः (सर्व्व-कर्त्ता) विद्यां=ज्ञानं (कर्म्म) श्रुत्वा=

चाकीर्णं अधीत्य इत्यर्थः (गृ धा+क्ता) प्रत्यासन्नाः=काले काले गुरुसमीपे- गताः सन्तः (प्रति-आ-सद-धा+क्त), मनसा=अन्तःकरणेन भक्त्या इत्यर्थः (करण) कर्मणा=कार्य्येण शरीरचेष्टया प्रणामादिना इत्यर्थः (करण) गुरुं=ज्ञानदातारं (कर्म्म) न आद्रियन्ते=न पूजयन्ति (आ- दृ-धा+कर्त्तरि लट, क्रिया), तेषां गुरोः अनादरकारिणां (सर्व्व सम्ब) भ्रूणहत्याविशिष्टं=भ्रूणः गर्भस्थः वालकः भ्रूणोऽर्भकेस्त्रे णगर्भ इत्यमरः) तस्य (६तत्) हत्या विनाशः (हन-धा+क्यप्) तया (५तत्) विशिष्टं युक्तं तत्सदृशं इत्यर्थः (कर्त्ता विश) पापं (कर्त्ता) भवति इति शेषः । लोके=जगति (अधि) तेभ्यः=गुरोरनादरकारिभ्यः (अन्ययोगे-५मी) अन्यः=अपरः (कर्त्ता विश) पापकृत=पापं करोति यः सः (पाप- कृ- धा+कर्त्तरि क्विप्) पापकारी जनः (कर्त्ता) न अस्ति=न विद्यते (अस- धा+लट, क्रिया) अथवा ये विद्यां अधीत्य मनसा कर्म्मणा वा गुरुं न आद्रियन्ते अवमन्यते ते प्रत्यासन्नाः=विपर्य्ययेन विशीर्णाः नष्टाः भवन्ति इति नीलकण्ठव्याख्यानम् । १० ॥

वाच्यान्तरं । यैः प्रत्यासन्नैः गुरुः नाद्रियते, पापेन भूयते, अन्येन पापकृता न भूयते । १० ॥

विद्याध्ययन करके जो समय समय पर पास जाके गुरुको सम्मानमा नहीं करते उनका पाप भ्रूणहत्या के बराबर है, उनसे बढ़के संसार में और कोई पापी नहीं हैं । १० ॥

(10.) They that after receiving education, do not honor the teacher by close attendance as well as by acts and intention, are guilty of the sin of murdering a child in the womb; they are the worst sinners the world has ever seen.

**यथैव इति ।** अन्वयः । सुगमः । व्याख्या । ते=पुत्रशिष्यादयः (कर्म-१मा) यथाएव=येन प्रकारेणेव (अव्य) मावनीया=ख्रिन्ननीया रक्षणावेक्षणयत्नविषयाः आसन् इत्यर्थः (भू धा+णिच्+कर्म्मणि+अनीय, क्रिया) बाल्यावस्थायां यथा पित्रादयः पुत्रादीन् पालयन्ति इति भावः ।

तथा=तेन प्रकारेण ( अव्य ) तेषां=पुत्रादीनां ( कर्त्तरि-६ष्ठी ) गुरवः अपि=पित्रादयः ( कर्म्म ) अर्च्चनीयाः पूजनीयाः वार्द्धक्ये पित्रादीन् अपि पुत्रादयः तथा पालयेयुः इति भावः । ११ ॥

गुरु उनको लिए जैसा सोचते हैं, उन्हें भी चाहिए कि, गुरु की वैसी ही पूजा करें । ११ ॥

( 11. ) As they ( sons and students ) are taken care of by them, ( parents and teacher) the latter should, in their turn, be attended by the former.

**न ते इति** । अन्वयः । ते अवमानं अर्हन्ति । तेषां कार्य्यं न दूषयेत्, महर्षिभिः ( सह ) देवाः एव गुरूणां सत्कारं ~~आचक्षि~~ विदुः । १२ ॥

व्याख्या । ते=पित्रादयः गुरवः ( सर्व्व-कर्त्ता ) अवमानं=असम्मानं अवज्ञामित्यर्थः ( कर्म्म ) न अर्हन्ति=( अर्ह-धा+लट, क्रिया ) तेषां=गुरूणां ( कृतं इत्यस्य कर्त्ता ६ष्ठी ) कृतं=कार्य्यं ( कृ-धा+भावे-क्त, कर्म्म ) न दूषयेत्—दोषं अर्पयित्वा न निन्देत् ( दूषि-धा+विधि, क्रिया )। महर्षिभिः=महान्तः ऋषयः ( कर्म्मधा ) तैः सह देवाः ( कर्त्ता ) गुरूणां ( सत्कारं इत्यस्य-कर्म्म-६ष्ठी ) सत्कारं=पूजां ( सत्-कृ-धा+भावे-घञ, कर्म्म ) विदुः=जानन्ति ( विद-धा+लट, प्रपु ३व, क्रिया ) । १२ ॥

वाच्यान्तरं । तैः अवमानं न अर्ह्यते, कृतं न दूष्येत, सत्कारः देवैः विद्यते । १२ ॥

वह अपमान के योग्य नहीं हैं, और न उन के किए हुए की निन्दा करनी चाहिए । गुरुओं का सत्कार देवता और महर्षि जानते हैं । १२

(12. ) They ( parents and teacher ) do not deserve contempt nor should their acts be criticised ; even the Gods and Rishis approve of honor done to parents and teacher.

**उपाध्यायमिति** । अन्वयः । ये उपाध्यायं पितरं मातरं

च मनसा कर्म्मणा वा अभिद्रुह्यन्ति, तेषां भ्रूणहत्याविशिष्टं पापं (भवति) लोके तस्मात् अन्यः पापकृत् न अस्ति । १३ ॥

व्याख्या। ये=जनाः ( सर्व्व-कर्त्ता ) उपाध्यायं=आचार्य्यं ( उप-अधि-इ-धा+घञ, कर्म्म ) पितरं=जनकं (जन-धा+तृच, कर्म्म) मातरं=जननीं ( कर्म्म ) मनसा=अन्तःकरणेन ( करण ) कर्म्मणा वा शरीर-चेष्टया वा ( करण ) अभिद्रुह्यन्ति=हिंसन्ति विरुद्धमाचरन्ति (अभि-द्रुह-धा+लट, क्रिया ), उत्तरार्द्धव्याख्या दशमश्लोके द्रष्टव्या । १३ ॥

वाच्यान्तरं। यैः उपाध्यायः पिता माता अभिद्रुह्यते । १३ ॥

जो आचार्य्य, पिता और माता का मन या कर्म्म से विरुद्धाचरण करते हैं, उन का पाप भ्रूणहत्या के बराबर है, उन से बढ़के संसार में और कोई पापी नहीं है । १३ ॥

(13.) Those that by acts and intentions run counter to parents and teacher commit the sin of murdering a child in the womb ; they are the worst sinners in this world,

**भृतः इति।** अन्वयः। भृतः वृद्धः स्वयोनिजः यः पुत्रः पितरं मातरं न बिभर्त्ति, ( तस्य ) भ्रूणहत्याविशिष्टं तत् पापं भवति, तस्मात् अन्यः पापकृत् न अस्ति । १४ ॥

व्याख्या। भृतः=प्रतिपालितः ( भृ-धा+कर्म्मणि क्त, कर्त्ता-विण ) वृद्धः=वृद्धिप्राप्तः प्राप्तवयस्क इत्यर्थः ( वृध्-धा+कर्त्तरि-क्त, कर्त्ता-विण ) स्वयोनिजः=स्वस्य ( ६तत् ) योनेः जायते यः सः, ( जन-धा+ड ) औरसः इत्यर्थः ( कर्त्ता-विण ) यः ( सर्व्व कर्त्ता-विण ) पुत्रः=तनयः ( पुत्-त्रै-धा+ड, कर्त्ता ) पितरं ( कर्म्म ) मातरं ( कर्म्म ) न बिभर्त्ति=न प्रतिपालयति ( भृ-धा+लट्, १पु-१व, क्रिया (, उत्तरार्द्धं व्याख्यातं । १४ ॥

वाच्यान्तरं। भृतेन वृद्धेन स्वयोनिजेन येन पुत्रेण पिता माता च न भ्रियते । १४ ॥

पाल पोषके बड़ा किया हुआ जो औरष पुत्र पिता माता का पोषण नहीं करता, उसका पाप भ्रूणहत्या के बराबर है, उस से बढ़के कोई पापी संसार में नहीं हैं । १४ ॥

( 14. ) That true-begotten son, who being fed and fostered by his father and mother, does not feed them in his turn, commits the sin of murdering a child in the womb—that man is the worst of sinners in this world.

मित्रद्रुहः इति । अन्वयः । मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य गुरुघातिनः एतेषां चतुर्णां निष्कृतिं वयं न अनुशुश्रुम । १५ ॥

व्याख्या । मित्रद्रुहः=मित्रं द्रुह्यति यः सः (मित्र-द्रुह धा+कर्त्तरि-क्विप ) तस्य मित्रहत्याकारिणः ( ६ष्ठी विण ) कृतघ्नस्य=कृतं हन्ति यः सः ( हन-धा+कर्त्तरि-ड ) तस्य उपकर्त्तुः अपकारकारिणः ( ६ष्ठी-विण ) स्त्रीघ्नस्य=स्त्रियं हन्ति यः सः ( हन-धा+ड ) गुरुघातिनः=गुरुं हन्ति यः सः ( हन्-धा+कर्त्तरि-णिन् ) तस्य गुरुहत्याकारिणः ( ६ष्ठी-विण ) एतेषां=पूर्व्वोक्तानां ( ६ष्ठी-विण ) चतुर्णां=जनानां ( निष्कृतिं इत्यस्य कर्म्म-६ष्ठी ) निष्कृतिं=परित्राणं ( निर् कृ-धा+भावे-क्ति ) नरकात् निस्तारं इत्यर्थः ( कर्म्म ) वयं ( कर्त्ता-१मा ) न अनुशुश्रुम=न आकर्णयामासिम ( श्रु-धा+लिट्-१मु-१व, अत्र लिटि उत्तमपुरुषप्रयोगः आर्षः क्रिया ), शास्त्रेषु तेषां प्रायश्चित्तव्यवस्था न दृश्यते अतः तेषां निष्कृतिः न अनुशुश्रुवे । १५ ॥

वाच्यान्तरं । अस्माभिः निष्कृतिः न अनुशुश्रुवे । १५ ॥

मित्रद्रोही, कृतघ्नः, स्त्रीहत्याकारी और गुरुघाती इन चारों के पाप की निष्कृति नहीं है, एसा सुनते हैं । १५ ॥

( 15. ) We have never heard of salvation of the following four persons namely, murderer of friends, an ungrateful man, murderer of a woman, and murderer of a teacher.

एतदिति । अन्वयः । इहलोके पुरुषेण यत् कर्त्तव्यं, एतत् सर्व्वं अनिर्देशेन एवं उक्तं, एतत् श्रेयः, अस्मात् अन्यत् विशिष्टं ( श्रेयः ) न सर्व्वान् धर्म्मान् अनुसृत्य एतत् उक्तं । १६ ॥

व्याख्या । इह=अस्मिन् ( अधि विण-अव्य ) लोके=जगति (अधि-७मी ) पुरुषेण=नरेण ( कर्त्ता ३या ) यत् ( कर्म्म-१मा ) कर्त्तव्यं=विधातव्यं ( कर्म्मणि-तव्य, क्रिया ) एतत् ( सर्व्व कर्म्म-विण ) सर्व्वं ( कर्म्म-१मा ) अनिर्द्देशेन=विस्तरेण नतु निर्द्देशमात्ररूपेण संक्षेपेण इति नीलकण्ठः ( न-निर्-दिश-धा+अल, प्रकृत्यादिभ्य इति ३या)एवं=इत्थं (अव्य) उक्तं=कथितं मया इति शेषः ( वच धा+कर्म्मणि-क्त, क्रिया ) एतत्=मदुक्तं गुरुपूजनं ( प्रातिपदिकार्थे १मा ) श्रेयः=मङ्गलं ( १मा विण ), अस्मात् गुरुपूजनात् ( अन्ययोगे ५मी ) अन्यत्=भिन्नं ( कर्त्ता-विण ) विशिष्टं=विलक्षणं अधिक मित्यर्थः ( कर्त्ता-विण ) न=श्रेयः ( कर्त्ता ) न अस्ति ( क्रिया ), सर्व्वान् ( कर्म्म-विण ) धर्म्मान् ( कर्म्म ) अनुसृत्य=अनुगम्य एकीकृत्य इत्यर्थः ( अनु-सृ-धा+ल्यप, अव्य ) उक्तं=कथितं मया इति शेषः ( वच-धा+कर्म्मणि-क्त, क्रिया ) इयं गुरुपूजा सर्व्वधर्म्मसारः इति भावः । १६ ॥

वाख्यान्तरं । एतत् सर्व्वं उक्तवान् पुरुषः यत् कुर्य्यात्, एतत् उक्तवान् । १६ ॥

जो कुछ इस संसार में पुरुष को करना चाहिए, यह मैं ने विस्तारपूर्व्वक कहा है, इस से बढ़के और भलाइ नहीं है, यह सब धर्म्म के अनुसार कहा गया है । १६ ॥

( 16. ) What the duty of a man in this world is, is spoken of in details in this place; there is no higher standard of morality than this; this maxim is laid down in accordance with all the system of morality.

# संस्कृतशिक्षाविवृतिः।



## महाभारतम्।

### बकराक्षसवधः।

हस्तिनापुरे चन्द्रवंशावतंसः कौरव्यः शान्तनुर्नाम राजा आसीत्। गङ्गा सत्यवती च तस्य द्वे पत्न्यौ; तयोः गङ्गायां भीष्मो सत्यवत्यांहि चित्राङ्गः विचित्रवीर्य्यश्चेति द्वौ पुत्रौ समुत्पन्नौ। न दारान् ग्रहिष्यामीति भीष्मेन पितृतुष्टये प्रतिश्रुतम्। चित्राङ्गः शैशवे एव गन्धर्व्वेण निहतः। विचित्रवीर्य्यः काशीराजदुहितरौ अम्बिकां अम्बालिकां च उपयेमे। कियता कालेन सोऽपि अप्राप्तपुत्रमुखदर्शनसुखः अमरेषु अगण्यत। तदा सत्यवती शान्तनुसन्तानविच्छेदं विलोक्य भीष्मेन सह मन्त्रयित्वा कानीनपुत्रं कृष्णद्वैपायनं सस्मार उपस्थितञ्च तमवलोक्य विचित्रवीर्य्यस्य क्षेत्रे क्षेत्रज-पुत्रोत्पादनाय अनुमेने। द्वैपायनोऽपि मातुरादेशात् अम्बिकायां धृतराष्ट्रं, अम्बालिकायां पाण्डुं, दास्यां विदुरं च उत्पादयामास। धृतराष्ट्रः जन्मान्धः आसीत्, तेन राज्यं न प्राप, विदुरो दासीगर्भजः तेन सोऽपि राज्यं न लेभे; पाण्डुस्तु राज्यं शशास।

गान्धारदेशाधिपतेः सुबलस्य शकुनि र्नाम पुत्रः गान्धारी नाम्नी कन्या च अभवत्। धृतराष्ट्रो गान्धारीमुदवहत्, तस्यां तस्य दुर्य्योधनादिभिः शतेन पुत्रैः दुःशलया एकया कन्यकया च समजनि।

मथुरानगरे यदुवंशोद्भवः शूरः नाम कश्चित् महात्मा आसीत्, तस्य वसुदेव नाम पुत्रः पृथानाम्नी कन्या च बभव, स च वसुदेवः नारायणा-

ततः स्य कंसारिः कृष्णस्य जनकः पितृष्वस्रीयाय प्रियसुहृदे कुन्तिभोजाय पृथां अपत्यकृतिकां ददौ। ततः सा कुन्ती इति ख्यातिमवाप, पाण्डुः तां कुन्तीं मद्रराजस्य शल्यस्य स्वसारं माद्रीञ्च उपयेमे।

अथैकदा मृगयासक्तमानसः पाण्डुः मृगरूपधारिणं मृगरूपधारिण्या स्वभार्य्यया सह रममाणं मुनिपुत्रं अविदित्वा वाणेन विव्याध, "यतः रममाणो ऽहं त्वया शरेण विद्धः, अतः रममाणः त्वं मृत्युमवाप्स्यसि" इति मुमुर्षुणा मुनिपुत्रेण पाण्डुः अभिशप्तः। ततः औरसपुत्रमुखदर्शने हताशः सः क्षेत्रजपुत्रोत्पादनाय कुन्तीं माद्रीं च अनुमेने। तदनुमत्या कुन्ती धर्म्मात् युधिष्ठिरं, पवनात् भीमं, इन्द्रात् अर्ज्जुनं तनयमवाप, माद्री च अश्विनीकुमारद्वयात् नकुलं सहदेवञ्च पुत्रद्वयं प्राप्तवती।

अथ स्वर्गते पाण्डौ मायाञ्च सह मृतायां धृतराष्ट्रः सहापत्यां कुन्तीं समानीय पालयामास। पाण्डवेषु दुर्य्योधनस्य ईर्षा क्रमशः व्यवर्द्धत, विशेषतो भीमे; स सविषान्नादिप्रयोगेन भीमं हन्तुं चेष्टतेस्म च। अपूर्णमनोरथश्च स सुयोधन एकदा मातुलेन शकुनिना सह मन्त्रयित्वा जतुगृहनिर्म्माणाय पुरोचनं वारणावते प्राहिणोत्, पाण्डवान् वारणावते निवासयितुं पितरं सनिर्वन्धं प्रार्थयामास च, धृतराष्ट्रोऽपि पुत्रानुरोधेन पाण्डवान् आहुय वारणावतं गन्तुं अनुजज्ञे, ते ऽपि अलङ्घ्याः गुरवः इति मत्वा मात्रा सह गन्तुं प्रचक्रमुः। गृहात् अग्निश्च बोद्धव्यः इति विदुरः वारणावतगमनसमये म्लेच्छभाषया तान् बोधयामास। पाण्डवाः अपि वारणावतमासाद्य तद्गन्धमादाय जतुगृहमिति विदित्वा विदुरप्रेरितेन खनकेन गृहमध्ये पाषाणपिहितमुखं गुप्तविलं कारयित्वा रात्रौ तस्मिन् ऊषुः, दिवा च मृगयार्थं चेरुः।

अथैकदा कुन्ती ब्राह्मणान् भोजयामास, तत्र पञ्चपुत्रा एका निषादी बहुभुक्त्वा सुराञ्च पीत्वा मदविह्वला तस्मिन् निवेशने सुष्वाप।

अथरात्रौ जनेषु सुप्तेषु भीमः जतुगृहं व्यादीपयत्, कातरं भ्रातृंश्च

स्वभमारोप्य सुरङ्गपथेन निर्गत्य गङ्गातीरं उपगम्य विदुरप्रेरितया नावा गङ्गां तीर्त्वा वनं विविशु।

अथ विभावर्य्यां महान् शब्दः प्रादुरासीत्, तेन जनव्रजो बुबुधे ते तत्रागत्य पञ्चपुत्रां निषादीं दग्धां विलोक्य सहापत्या कुन्ती दग्धेति निश्चिक्युः। पाण्डवदाहरूपा किम्वदन्ती वितस्तार च। पाण्डवा अपि माता सह नानावनं पर्य्यटन्तः एकचक्रानगरीं आसाद्य कस्यचित् ब्राह्मणस्य गृहे कियन्तं कालं ऊषुः, ततः वकराक्षसवधः। वकोनाम राक्षसः तस्य (६तत्) वधः (प्रातिपदिकार्थे-१मा)

**एकचक्रामिति।** अन्वयः। महारथाः ते कुन्तीपुत्राः तु एकचक्रां गताः सन्तः ब्राह्मणस्य निवेशने नातिचिरं ऊषुः। १॥

व्याख्या। महारथाः=महान् रथः येषां (वहुव्री) ते महावीराः (कर्त्ता-विण, एको दशसहस्राणि योधयेत् यस्तु धन्विनां शस्त्रशस्त्रप्रवीणश्च महारथः इति स्मृतः) ते (सर्व्व कर्त्ता-विण) कुन्तीपुत्राः=कुन्त्याः (६तत्) पुत्राः युधिष्ठिरभीमार्ज्जुननकुलसहदेवाः (कर्त्ता-१मा अत्र कुन्त्या पालिततया नकुलसहदेवौ अपि गृह्यते) एकचक्रां=तन्नाम्नीं नगरीं (कर्म्म-२या) गताः=तत्र उपस्थिताः सन्तः (गम-धा+कर्त्तरि-क्त, कर्त्ता-विण) ब्राह्मणस्य=ब्रह्म वेदं वेत्ति अधीते वा (ब्रह्मण-श+षण) तस्य कस्यचित् विप्रस्य (सम्ब) निवेशने=निविशते अस्मिन् (नि-विश-धा=अधि-ल्युट) तस्मिन् आलये (अधि-७मी) नातिचिरं=न अतिचिरं (नञर्थस्य न-शब्दस्य सुपसुपेति समासः ननु नञर्थेन्पुरुषः तेन नस्य लोपः नुडागमश्च न) नातिदीर्घकालं कियन्तं कालं इति यावत् (अत्यन्तसंयोगे-२या) ऊषुः=वसन्तिस्म (वस धा+लिट्-१पु-२व, क्रिया)। १॥

वाच्यान्तरं। महारथैः तैः कुन्तीपुत्रैः ऊषिरे। १॥

महारथ वे कुन्तीपुत्र एकचक्रा ग्राम में जाके कुछ दिनों तक एक ब्राह्मणके घर में वसे थे १॥

( I. ) The great warriors, the sons of Kunti having gone to the village of Ackachkra lived there for a while, in the house of a Brahman.

**रमणीयमिति इति ।** अन्वयः । हे विशाम्पते तदा ते सर्व्वे एव रमणीयानि विविधानि वनानि च, अपिच पार्थिवान् उद्देशान्, सरितः च, सरांसि च पश्यन्तः सन्तः भैक्ष्यं चेरुः स्वैः गुणैः नागराणां प्रियदर्शनाः च बभूवुः । २ २ ॥

व्याख्या । विशांपते=विशांमनुजानां ( ६तत् अलुकसमासः ) पतिः तत्सम्बोधने ( द्वौ विशौ वैश्यमनुजौ इत्यमरः ) हे मनुजाधिप जनमेजय ( वैशम्पायनस्य उक्तिरियं, सम्बो ) तदातु=तस्मिन् कालेतु एकचक्रा निवासकाले इत्यर्थः ( अधि-अव्य ) ते सर्व्वे=पञ्च एव पाण्डवाः ( कर्त्ता) रमणीयानि रम्यते एषु ( रम-धा+अधि-अनीयच् ) रम्याणि (कर्म्म-विण) विविधानि=अनेकप्रकाराणि ( कर्म्म-विण ) वनानि=अरण्यानि ( कर्म्म-२या ) अपिच—किञ्च (अव्य ) पार्थिवान्=पृथिवीसम्बन्धान् ( पृथिवी-अ+षण, कर्म्म-२या ) उद्देशान् उत्कृष्टदेशान् सरितः=नदीः च (कर्म्म-२या-३व ) सरांसि च=सरोवरान् च ( कर्म्म-२या-३व ) पश्यन्तः सन्तः ( दृश-धा+शतृ, १मा-३व, कर्त्ता-विण ) भैक्ष्यं=भिक्षाणां समूहं ( भिक्षा-अ+ष्यण) भिक्षालब्धं वस्तुजातं ( कर्म्म ) चेरुः=अधिगतवन्तः ( चर-धा+ +लिट्-१पु-१व,) चरगतौ इत्यस्य प्रामाण्यं, अथवा भैक्ष्यं भक्षयित्वा प्राणधारणं चक्रुः । आपदि क्षत्रियस्यापि तत् न विगर्हितं । तथा ( अव्य ) स्वैः=स्वकीयैः ( सर्व्व-करण-विण) गुणैः=शौर्य्यादिभिः गुणैः ( करण-३या ) नागराणां=नगरे एकचक्रायां भवाः ( नगर-अ+षण् ) तेषां नगरवासिनां जनानां प्रियदर्शनाः=प्रियं ( प्री-धा+क्त ) दर्शनं येषां ( बहुव्री ) ते प्रीतिकरदर्शनाः (कर्त्ता-विण) बभूवुः (भू-धा+लिट १पु-३व क्रिया ) । २ २ ॥

वाच्यान्तरं। तैः सर्व्वैः भैक्ष्यं चेरे, प्रियदर्शनैः बभूवे। २ ३ ॥

हे महाराज सुन्दर और नाना भांतके वन, पृथ्वी में नानादेश, नदी और तालाव देखते हुए वे सब भिक्षा करके प्राण धारण करते थे, और अपने गुणों से नगर के रहनेवालों के प्यारे हुए थे। २। ३ ॥

(2-3) O king! At that time they went about begging and visited various romantic forests, lands, rivers and lakes. They rndeared themselves to the citizens by their virtues.

**अथेति।** अन्वयः। (हे) भारत अथ कुन्ती ब्राह्मणस्य निवेशने उत्पतितं भृशं घोरं आर्त्तिजं शब्दं शुश्राव। ४ ॥

व्याख्या। हे भारत=भरतस्य गोत्रापत्यं पुमान् (भरत-अ+षण) हे जनमेजय (सम्ब) अथ=अनन्तरं (अव्य) कुन्ती (कर्त्ता-१मा) ब्राह्मणस्य=एकचक्रानिवासिनः दत्ताश्रयस्य तस्य विप्रस्य (सम्ब) निवेशने= भवने (अधि) उत्पतितं=सहसा उत्थितं (उत्-पत-धा+कर्त्तरि-क्त, कर्म्म-विण) भृशं=अत्यन्तं (कर्म्म विण) घोरं=भीषणं (कर्म्म-विण) आर्त्तिजं = आर्त्तेः पीड़ायाः जातः तं (कर्त्ति-जन-धा+ण, कर्म्म-विण) महाशब्दं=महान् शब्दः (कर्म्म-धा) तं अत्युच्चैः आर्त्तनादं (कर्म्म-२या) शुश्राव=श्रुतवती (श्रु-धा+लिट, क्रिया)। ४ ॥

वाच्यान्तरं। कुन्त्या उत्पतितः भृशः घोरः आर्त्तिजः महाशब्दः शुश्रुवे। ४ ॥

हे भारत इसके पीछे कुन्ती ने उस ब्राह्मण के घर में घोर शोक का महा शब्द उठते सुना। ४ ॥

(4.) O descendant of Bharat! At this time Kunti heard deep lamentations arise from the inner part of the Brahman's house.

**रोरूयमाणां इति।** अन्वयः। हे राजन् सा कुन्ती तान् रोरूयमाणान् परिदेवयतः च दृष्ट्वा कारुण्यात् साधुभावात् च न चक्षमे। ५ ॥

व्याख्या। राजन्=हे भूपते जनमेजय (सम्ब) सा सर्व्व-कर्त्तृ-विण) कौन्ती=पृथा (कर्त्ता) तान्=आश्रयप्रदं विप्रं तत्परिवारवर्गं च इत्यर्थः (दृष्टा इत्यस्य (कर्म्म) रोरुयमाणान्=भृशं रुवतः आर्त्तनादं कुर्व्वतः इत्यर्थः (रु धा+यङ्=रोरुय-धा+शानच्) परिदेवतः च=विलपतः च (परि-देवि+शतृ) दृष्टा=निशम्य इत्यर्थः (दृश-धा+क्ता) कारुण्यात्= स्वतः करुणार्द्रचित्तत्वात् (हेत्वर्थे-५मी) साधुभावात् च=सत्स्वभावात् च (हेत्वर्थे-५मी) न चक्षमे=न सोढ़वती (क्षम-धा+लिट, क्रिया), तेषां आर्त्तनादः कुन्त्याः सहजं कारुण्यं साधुभावनिबन्धनां प्रत्युपकारबुद्धिं चोद्दीपयामास इत्यर्थः। ५॥

वाच्यान्तरं। कुन्त्या न चक्षमे। ५॥

हे माहाराज उन को रोते और विलाप करिते देख दया और साधुता के कारण कुन्ती से सहा नहीं गया। ५॥

(5.) O king! Kunti, who was generous and tender-hearted, was affected by these cries and bewailings.

**अन्तःपुरमिति।** अन्वयः। ततः कुन्ती बद्धवत्सा सौरभी इव त्वरिता तस्य महात्मनः ब्राह्मणस्य अन्तःपुरं विवेश। ६॥

व्याख्या। ततः=आर्त्तनादश्रवणानन्तरं (५मी+तस्, अव्य) कुन्ती (कर्त्ता १मा) बद्धवत्सा=बद्धः बन्धनंप्राप्तः (बन्ध धा+क्त) वत्सः यस्याः (बहुव्री) सा (उपमा-कर्त्तृ-विण) सौरभी इव=सुरभेः कामधेनोः अपत्यं स्त्री (सुरभि-अ+षण्) (सुरभितनया गौरिव (उपमा-कर्त्ता) त्वरिता=त्वरा जाता अस्याः (त्वरा-अ+इतच्) द्रुतगतिः सती (कर्त्तृ-विण) तस्य (सर्व्व-सम्ब-विण) महात्मनः=महान् आत्मा यस्य (बहुव्री) तस्य महोपकारकत्वात् महानुभावस्य (सम्ब-विण) ब्राह्मणस्य=विप्रस्य (सम्ब) अन्तःपुरं (कर्म्म) विवेश=प्रविष्टवती (विश-धा+लिट, क्रिया)। ६॥

वाच्यान्तरं। कुन्त्या बद्धवत् सौरभ्या इव अन्तःपुरं विविशे। ६॥

तब कुन्ती धेनु की तरह, जिसका बछा हुआ है, झट उस ब्राह्मण के अन्तःपुरमें जा घुसी । ६ ॥

( 6. ) Then Kunti, entered into the inner apartment of the noble-minded Brahman's house swiftly, like the cow whose calf has been shut up.

**ततः इति ।** अन्वयः । ततः ( सा ) तत्र भार्य्यया च सुतेन च दुहित्रा च एव सहितं विकृताननं तं ब्राह्मणं ददर्श । ७ ॥

व्याख्या । ततः=प्रवेशानन्तरं ( प्रभी+तस् अव्य ) सा ( कर्त्तृपद मुख्यं ) कुन्ती ( कर्त्ता ) तत्र=अन्तःपुरे ( तद् श+त्रल्, अधि-अव्य ) भार्य्यया च=स्त्रिया ( सहितं इत्यस्य कर्त्ता-अथवा, सहयोगे ३या ) सुतेन=पुत्रेण च ( पूर्व्ववत् ३या ) दुहिता च एव=कन्यया एव च ( पूर्व्ववत् ३या ) सहितं=समभिव्याहृतं युक्तं इति यावत् अथवा भार्य्यादिभिः सह-स्थितं ( सम्-धा+घा+कर्म्मणि-क्त, सह-श+इतच् ) विकृताननं=विकृतं विकारप्राप्तं विषस्स मित्यर्थः आननं मुखं यस्य ( बहुव्री ) तं शोकेन म्लान-मुखं (कर्म्म-विण ) ब्राह्मणं = गृहस्वामिनं विप्रं ( कर्म्म ) ददर्श=दृष्टवती ( दृश-धा+लिट, क्रिया ) । ७ ॥

वाच्यान्तरं । तया सहितः विकृताननः सः ब्राह्मणः ददृशे । ७ ॥

वहां उस ब्राह्मण को भार्य्या, पुत्र और कन्या के साथ शोक से मलिन मुख देखा । ७ ॥

( 7. ) She found the Brahman with his wife, son and daughter, sitting with down-cast eyes.

ब्राह्मण उवाच—ब्राह्मणः ( कर्त्ता ) उवाच=कथयमास ( वच्-धा+लिट, क्रिया । ( वाच्यान्तर—ब्राह्मणेन ऊचे ।

**यतितं उति ।** अन्वयः । (हे) ब्राह्मणि यतः क्षेमं (भवेत्) ततः गन्तुं मया पूर्व्वं यथा यतितं वै, तथा त्वं तत् वेत्थ, त्वया तु मम न श्रुतं । ८ ॥

व्याख्या। ब्राह्मणि=ब्राह्मणस्य पत्नी बहुव्रीहि ( स्त्रियां-ङीप् ) हे प्रिये यत्र=यत्र यस्मिन् स्थाने ( ७मी। त्रस् अधि-अव्य ) गमनेन इति शेषः क्षेमं=मङ्गलं मङ्गलसम्भावना इति यावत् ( कर्त्ता ) भवेत् इति शेषः, तत्र=तस्मिन् स्थाने ( ७मी+त्रस्, अव्य ) गन्तुं यातुं ( अस्मत् ) मया ( कर्त्ता-३या ) पूर्व्वं=विपदः पातात् प्राक् ( अत्यन्तसंयोगे २या ) यथा=येन प्रकारेण ( अव्य ) यतितं=चेष्टितं (यत-धा+भावे क्त, क्रिया, वै पादपूरणे-अव्य ) तत्=मम यतितं ( कर्म्म-२या ) तथा=स्वरूपतः ( अव्य ) वेत्थ=वेत्सि जानासि ( विद-धा+लट-मपु-१व, क्रिया ) त्व मिति शेषः, मया यः पलायनोपायः उद्भावितः, त्वं तत यथायतं विदितवती असि, त्वया ( कर्त्ता३या ) तु=किन्तु ( अव्य ) मम=वचनं ( सम्ब ) न श्रुतं=न आकर्णितं ( श्रु धा+भावे क्त ) मद्वचसि त्वया न कर्णपातः कृतः इत्यर्थः। ८॥

वाच्यान्तरं। यतितवान् अहं, विद्यते त्वया तत्, यतः क्षेमेण भूयते, त्वं न श्रुतवती। ८॥

ब्राह्मण ने कहा कि, हे ब्राह्मणि, मैं ने पहिले वहां जाने के लिये जहां जाने से कुशल होता जतन किया था, तू जानती है, पर तैं ने मेरी नहीं सनी। ८॥

The Brahmin said.

(8.) O wife! You know how much did I wish to go to the place where we might be safe, but you did not listen to my words.

**पितेति।** अन्वयः। पित्रा माता च सदा गार्हस्थ्यभागिनीं विहितां कुलीनां शीलसम्पन्नां अपत्यजननीं अपि साध्वीं अनपकारिणीं नित्यं अनुव्रतां भार्य्यां त्वां यथान्यायं वरयित्वा मन्त्रवत् परिणीय च जीवितस्य अर्थे परित्यक्तुं न शक्ष्यामि। ९। १०॥

व्याख्या। पित्रा=तव जनकेन ( विहितां इत्यस्य कर्त्ता-३या )

माता च=तव जनन्या च विहितां प्रदत्तां ( पूर्व्ववत् ३या ) गृहस्थः द्वितीयाश्रमी ; तस्य कर्म्म गार्हस्थ्यं ( गृहस्थ-श्र+षण् ) तत् भजते या सा ( गार्हस्थ्य भज-धा+चिण्वन्, स्त्रियां ईप ) तां मया सह गृहस्थधर्म्मावलम्बिनीं ( कर्म्म-विण ) कुलीनां=कुले सत्कुले जातां ( कुल-श्र+खीन ) आभिजात्यवतीं ( कर्म्म-विण ) शीलसम्पन्नां=शीलेन सत्स्वभावेन (३तत्) सम्पन्ना युक्ता ( सम्-पद-धा+क्त ) तां सच्चरित्रां ( कर्म्म-विण ) अपत्यजननीं=न वंशः पतति अनेन इति अपत्यं ( न-पत-धा+यत् ) जनयति या सा जननी अपत्यं पुत्रः दुहिता च (जन-धा+णिच+ल्युट स्त्रियां ईप) अपत्यानां ( ६तत् ) जननी उत्पादयित्री नतु वन्ध्या नापि केवलं स्त्री जननी इति भावः तां ( कर्म्म-विण ) साध्वीं=पतिव्रतां ( कर्म्म-विण) अनपकारिणीं=न अपकरोति या सा ( न अप कृ धा+णिन्, स्त्रिया ईप ) तां अकृतापकारां ( कर्म्म-विण ) नित्यं=सतं ( नि-श्र+त्यक ) अनुव्रतां=व्रतं अनुगता ( ६तत् ) तां नियतव्रतानुष्ठानतत्परां (कर्म्म-विण) भार्य्यां=भ्रियते असौ ( भृ धा+ण्यत् स्त्रियां आप ) तां पत्नीं (कर्म्म-विधेय-विण ) त्वां=भवतीं ( कर्म्म-२या ) अहं ( कर्त्ता ) यथान्यायं=न्यायं अनतिक्रम्य ( अव्ययी ) यथाविधि ( क्रिया विण ) वरयित्वा=अर्चयित्वा ( वृ-धा+णिच्+क्त्वा, अव्य ) मन्त्रवत्=समन्त्रवर्ज्जं ( क्रिया-विण ) परिणीय च=उद्वाह्य ( परि-णी-धा+ल्यप, अव्य ) जीवितस्य=प्राणानां ( जीव-धा+भावे क्त ) अर्थे=रक्षाविषये प्राणरक्षार्थं इत्यर्थं ( अधि ) परित्यक्तुं=विहातुं वकराक्षसस्य मुखे अर्पयितुं इत्यर्थः ( परि-धा+तुमन्) न शक्ष्यामि=न शक्तः भविष्यामि ( शक धा+लृट, क्रिया )। ९। १० ॥

वाच्यान्तरं। यत्ता शक्यते। ९ १० ॥

तेरे पिता माता ने मुझे दान किया है, तु मेरे गार्हस्थ्य की सुख-दुःख की भागी है, तुझे मैं ने यथाविधि मन्त्र पाठ पूर्व्वक व्याह क्रिया है, तू कुलीन, सत्स्वभाववती अपत्यजननी और पतिव्रता है, तें ने कुछ मेरा

अपकार नहीं किया है, तू सदा व्रतादि का अनुष्ठान करती है, मैं तुझे अपने प्राण के लिए परित्याग नहीं कर सकुंगा । ९ १० ॥

( 9-10. ) You are my partner in the performance of religious ceremonies and my chief support in all things. You are gentle and always devoted to the welfare of your husband. The gods have made you my companion and your parents have made you the sharer of my domestic happiness and misery. You are born of a good family, you are a well-behaved, child-begetting, virtuous, and innocent wife and you are ever observant of vows ; I have after duly pronouncing the *muntras* married you. How can I forsake you to save my own life ?

कुतः इति । अन्वयः । अहं बालं अप्राप्तवयसं अजातव्यञ्जनाकृतिं सुतं स्वयं परित्यक्तुं कुतः एव शक्ष्यामि । ११ ॥

व्याख्या । तर्हि पुत्रः एव त्यज्यतामित्यशङ्क्याह कुतः इति । अहं ( कर्त्ता ) बालं=शिशुं ( कर्म्म-विश ) अप्राप्तवयसं अजात व्यञ्जनाकृतिं= व्यञ्जनानि=व्यज्यते प्रकाश्यते यौवनं यैः ( वि-अञ्ज-धा+करणे ल्युट ) तानि लक्षणानि वचोविशालत्वस्वरगाम्भीर्य्यश्मश्रूद्भेदप्रभृतीनि यौवन चिह्नानि इत्यर्थः, न जातानि उत्पन्नानि ( जन-धा+क्त ) व्यञ्जनानि यस्य ( बहुव्री ) सा तादृशी आकृतिः यस्य ( बहुवी ) तं ( कर्म्म-विश ) सुतं= सूयते असौ ( सू धा+कर्म्मणि-क्त ) तं पुत्रं ( कर्म्म ) स्वयं+आत्मना ( प्रकृत्यादिभ्यश्चेति ३या, अव्य ) परित्यक्तुं=बकराक्षस कवलतां प्रापयितुं ( अव्य ) कुतः एव शक्ष्यामि=न कथञ्चित् शक्तः भविष्यामि ( क्रिया ) । ११ ॥

वाच्यान्तरं । मया शक्ष्यते । ११ ॥

बालक पुत्र को, जिस की उम्र अभी थोडी है और यौवन के लक्षण नहीं प्रगट हुए है, कैसे छोड़ सकुंगा । ११ ॥

(11,) Besides, how can I forsake this son of mine who is so young and who has not yet got hair on his chin.

**भर्त्तुः इति।** अन्वयः। यथा पितृभिः (सह) दौहित्रजान् लोकान् आशंसे, महात्मना धात्रा भर्त्तुः अर्थाय न्यासं निक्षिप्तां तां बालां स्वयं उत्पाद्य उत्स्रष्टुं कथं उत्सहे। १२॥

व्याख्या। तर्हि कन्या त्यज्यतां इत्याह भर्त्तुः इति। यया कन्यकया (करण-३या) पितृभिः=स्वधाभुक्भिः अग्निष्वात्तादिभिः पितृलोकैः सह (सहार्थे ३या) दौहित्रजान्=दुहितुः अपत्यं पुमान् दौहित्रः (दुहितृ-श+षण) तस्मात् जायन्ते इति दौहित्रजाः (जन धा+ड) तान् दौहित्रमुखदर्शनात् लभ्यान् (कर्म्म विण) लोकान्=पुण्यलोकान् (कर्म्म) आशंसे=कामये प्रार्थये इत्यर्थः (आ-शंस धा+लट-३पु-१व, क्रिया, इच्छायां इति आत्मनेपदं) या कन्या दौहित्रमुखदर्शनजन्य पुण्यलोकप्राप्तिः हेतुमती इत्यर्थः, महात्मना=महान् आत्मा यस्य (बहुव्री) तेन महाशयेन विवेकवता इति यावत् (कर्त्ता-विण) विधात्रा=विदधाति यः सः (वि-धा-धा+तृच) सृष्टि कर्त्ता तेन (निक्षिप्तं इत्यस्य कर्त्ता-३या) भर्त्तुः=बिभर्त्ति यः सः भर्त्ता (भृ-धा+तृच) तस्य पत्युः (सम्ब) न्यासं=न्यस्यते पुनः ग्रहीतुं विश्वस्तहस्ते निक्षिप्यते इति न्यासः (नि-अस-धा+भावे-घञ) तं (बालां इत्यस्य विधेय विण) निक्षिप्तां=अर्पितां (नि-क्षिप-धा+कर्म्मणि-क्त, कर्म्म विण) तां (सर्व्व-कर्म्म-विण) बालां=बालिकां कन्यां (उत्पाद्य इत्यस्य कर्म्म) स्वयं=आत्मना (अव्य) उत्पाद्य=जनयित्वा (उत् पद-धा+णिच+ल्यप) उत्स्रष्टुं=परित्यक्तुं वकराक्षसाय दातुं इत्यर्थः (उत्-सृज धा+तुमुन्) कथं उत्सहे समर्थो भवामि (उत्-सह-धा+लट, क्रिया) न कथञ्चित् इत्यर्थः या कन्या पुत्रप्रसवेन पितृलोकैः सह पितरं पुण्यलोकं गमयति या परकीयः एव अर्थः केवलं आप्रदानकालं

पितुः हस्ते विधात्रा निक्षेपः इव स्थापितः इति जानन् अहं तां कथं राक्षसाय कथं उपहारीकरोमि इति परलार्थः । १२ ॥

वाच्यान्तरं । दौहित्रजाः लोकाः आशंस्यन्ते, उत्सृज्यते । १२ ॥

स्वामी के लिए जिस कन्याको महात्मा ब्रह्मने धरोहर रखा है, जिस कन्याके द्वारा पितृ पुरुषों के साथ दौहित्र लोक को जाने की प्रार्थना करता है, उस कन्याको जन्म देके मैं क्यों कर त्याग कर सक्ता हूं ।१२॥

(12.) How am I, being a father have the heart to leave that young daughter who has been entrusted to me by the great God in order to be united to a worthy husband, the son born of whom will as I hope, be the means of enabling me to go to the *dowhitriya loka* with my ancestors ?

**मन्यन्ते इति ।** अन्वयः । केचित् नराः पुत्रे पितुः अधिकं स्नेहं मन्यन्ते, केचित् अपरे कन्यायां, मम तु उभौ तुल्यौ मतौ । १३ ॥

व्याख्या । केचित्=( किम् श+१मा-३व+चित्, कर्त्ता-विश-अव्य ) नराः=लोकाः ( कर्त्ता-१मा ) पुत्रे=( अधि ) पितुः=जनकस्य ( स्नेहः इत्यस्य कर्त्ता-६ष्ठी ) अधिकं ( कर्म्म-विश ) स्नेह=वात्सल्यं ( स्निह धा+अल, कर्म्म ) मन्यन्ते=स्वीकुर्व्वन्ति ( मन धा+कर्त्तरि-लट, क्रिया ) पिता यथा पुत्रे स्निह्यति तथा कन्यायां न इति वदन्ति इत्यर्थः, केचित् अपरे लोकाः ( कर्त्ता ) कन्यायां=दुहितरि ( अधि ) पितुः अधिकं स्नेहं मन्यन्ते इत्यर्थः, पिता कन्यायां यथा स्निह्यति तथा न पुत्रे इति अपरे आहुः इति भावः, मम ( मतौ इत्यस्य कर्त्ता-६ष्ठी ) उभौ=कन्या पुत्रौ ( कर्म्म-१मा-२व ) तुल्यौ=समौ ( कर्म्म विश ) मतौ=मतौ ( मन्-धा+वर्त्तमाने-कर्म्मणि-क्त, क्रिया) मया कन्यापुत्रौ समं स्नेहास्पदं मन्यते इत्यर्थः उक्तं च "यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा" इति । १३ ॥

वाच्यान्तरं । कैश्चित् नरैः स्नेहः मन्यते, कैश्चित् अपरैः कन्यायां, अहं उभौ तुल्यौ मतवान् । १३ ॥

कुछ लोग समझते हैं कि, पिता का स्नेह पुत्र पर अधिक होता है, कुछ समझते हैं कि, कन्या पर, परन्तु मैं दोनों को बराबर समझता हूं। १३ ॥

(13.) Some say that a father feels the greatest affection for his son, while others say that he loves his daughter most; but in my opinion both are equal.

**यस्यां इति।** अन्वयः। यस्यां लोकाः स्थिताः, प्रसूतिः च (स्थिता) अथो नित्यं सुखं (स्थितं) अहं अपापां तां बालां उत्स्रष्टुं कथं उत्सहे। १४ ॥

व्याख्या। यस्यां=बालिकायां (अधि) लोकाः=दौहित्रमुखदर्शनजन्याः पुण्यलोकाः इत्यर्थः (कर्त्ता) स्थिताः (स्था-धा+कर्त्तरि-क्त, क्रिया) या तल्लोकप्राप्तिनिदानभूता इत्यर्थः। यस्यां इति शेषः, प्रसूतिः=सन्तानः मम वंशाविच्छेदः दौहित्रः इति यावत् (कर्त्ता) स्थिता इति शेषः या स्वतनयद्वारा पितुरपि वंशवर्द्धिनी इत्यर्थः, अथो=अपिच (ओकारान्तमव्ययं) यस्यां नित्यं=निरन्तरं (क्रिया-विश) सुखं (कर्त्ता) स्थितं इति शेषः, या पुत्रादपि समधिकं शुश्रुषमाणा पितरौ सुखयति इत्यर्थः, अहं (कर्त्ता) तां (सर्व्व-कर्म्म-विश) अपापां=नास्ति पापं यस्याः (बहुव्री) तां निर्दोषां (कर्म्म विश) बालां=कन्यां (कर्म्म) उत्स्रष्टुं=त्यक्तुं बकराक्षसाय उपहर्तुं इत्यर्थः (तुमुन्, अव्य) कथं उत्सहे=न कथञ्चित् शक्ष्यामि (क्रिया)। १४ ॥

पाठान्तरं। लोकैः स्थितं, प्रसूत्या सुखेन च, मया शक्यते। १४ ॥

जिस कन्या में (दौहित्र) लोक, प्रसूति और सुख है, मैं उस पापशून्या कन्या को क्यों कर त्याग करूं। १४ ॥

(14.) How have I the heart to leave that sinless daughter who is to be the means of leading me to a world of purity and who is to give birth to a grandson.

आत्मानं इति। अन्वयः। अपिच आत्मानं उत्सृज्य परलोकगः ( सन् ) तप्स्यामि, एते हि मया त्यक्ताः इह जीवितुं न शक्ष्यन्ति। १५॥

व्याख्या। तर्हि आत्मत्यागः क्रियतां इत्याह आत्मानमिति, अपिच= किञ्च ( अव्य ) आत्मानं=स्वदेहं ( कर्म्म ) उत्सृज्य=परित्यज्य वकाय उपहृत्य इत्यर्थः ( उत्-सृज-धा+ल्यप् ) परलोकगः=परलोकं गच्छति यः सः ( परलोक-गम-धा+ड ) लोकान्तरगतः सन् ( कर्त्ता-विण ) अहं इति शेषः ( कर्त्ता ) तप्स्यामि=परितप्तः भविष्यामि ( तप-धा=लृट्, क्रिया )। कुतःहि=यतः ( अव्य ) एते=पुत्रकलत्रादयः ( सर्व्व-कर्त्ता-१मा-३व ) मया ( त्यक्ताः इत्यस्य कर्त्ता-३या ) त्यक्ताः=उत्सृष्टाः सन्तः ( त्यज-धा+कर्म्मणि-क्त ) इह=अस्मिन् संसारे ( अधि-अव्य ) जीवितुं= प्राणितुं जीविकां निर्व्वाहयितुं इत्यर्थः ( जीव-धा+तुमुन् ) न शक्ष्यन्ति= न शक्ताः भविष्यन्ति ( शक्-धा+लृट्, क्रिया )। अहं एव एतेषां एकमात्रं अवलम्बनं, मया विना एते अन्नाभावात् मरिष्यन्ति, मम मरणे एतेषां मरणमेव जानतः कथं मे परलोकान्तरितस्यापि निर्वृतिरिति संक्षेपः। १५॥

वाच्यान्तरं। परलोकगेन तप्स्यते, एतैः त्यक्तैः शक्यते। १५॥

आत्माको त्याग करके परलोक को जाकर अनुताप करूंगा, पर मैं इनको छोड़ूंगा तो यह यहां जी नहीं सकेंगे। १५॥

(15.) If I myself be killed I shall be uneasy in the next life ; for being left by me they will not be able to preserve their own lives.

एषां इति। अन्वयः। एषां अन्यतमत्यागः च नृशंसः बुधैः गर्हितः, आत्मत्यागे कृते च इमे मया विना मरिष्यन्ति। १६॥

व्याख्या। एषां=पत्न्यादीनां ( सम्ब ) अन्यतमत्यागः च = अन्यतमस्य

एतेषां यस्य कस्यापि एकस्य ( ६तत् ) त्यागः ( कर्म्म-१मा ) नृशंसः= निष्ठुरः ( कर्म्म-विण ) बुधैः=पण्डितैः (कर्त्तरि-३या ) गर्हितः=निन्दितः ( गर्ह-धा+कर्म्मणि-क्त, क्रिया ), आत्मत्यागे=आत्मनः ( ६तत् ) त्यागः तस्मिन् स्वदेहविसर्ज्जने (भावाधिकरण) कृते=अनुष्ठिते सति (अधि-विण ) इमे=पत्न्यादयः ( सर्व्व-कर्त्ता-१मा ३व ) मया (विनायोगे-३या ) विना= मां अन्तरेण मया परित्यक्ताः इत्यर्थः ( अव्य ) मरिष्यन्ति=विपत्स्यन्ते ( क्रिया ) दारादीनां अन्यतमत्यागे नृशंसता लोकनिन्दा च, आत्मत्यागे अन्नाभावात् एषां मरणं निश्चितमेव, तत् किं करिष्यामि मन्दभाग्यः इति विशदार्थः। १६ ॥

वाच्यान्तरं। अन्यतमत्यागं नृशंसं गर्हितवन्तः बुधाः, एभिः मरिष्यते। १६ ॥

पण्डितों ने कहा है कि, इन में से एक को त्याग करना निष्ठुर काम है, आत्माके त्याग करने पर यह मेरे विन मरजागें। १६ ॥

(16.) To sacrifice one of them will be an act of cruelty condemned by all good men, and if I sacrifice myself they will all die without me.

**स कृच्छ्रां इति।** अन्वयः। सः अहं कृच्छ्रां आपदं आपन्नः तर्त्तुं न शक्तः, अहोधिक् अद्यतु सवान्धवः कां गतिं गमिष्यामि, सर्व्वैः सह मृतं श्रेयः, मे जीवितुं न च क्षमं। १७ ॥

व्याख्या। सः=कार्य्यद्वयाकुलः ( सर्व्व कर्त्ता-विण ; सः कृच्छ्रां इति सन्धिविच्छेदः ) अहं ( कर्त्ता ) कृच्छ्रां=अतिक्लेशकरीं ( कर्म्म-विण ) आपदं=विपत्तिं ( आपन्नः इत्यस्य कर्म्म-२या ) आपन्नः प्राप्तः ( आ-पद-धा+कर्त्तरि-क्त, क्रिया ), तर्त्तुं ( आर्षप्रयोगः तृ-धा+तुमुन् तरीतुं तरितुं वा इति साधु) आपदमिति शेषः न शक्तः=समर्थः न भवामि ( शक्-धा + कर्त्तरि क्त क्रिया ) अहं दुस्तरां अतिकष्टप्रदां आपदं प्राप्तो-

ऽस्मि इत्यर्थः । अहोधिक् ( खेदे अव्य ) अद्यतु=अस्मिन् अहनि ( अव्य, अधि ) सबान्धवः=बान्धवैः सह वर्त्तमानः ( बहुव्री ) सपरिवारः ( कर्त्ता-विण ) अहं इति शेषः ( कर्त्ता ) कां ( सर्व्व-कर्म्म-विण ) गतिं—उपायं ( कर्म्म ) गमिष्यामि=प्राप्स्यामि ( क्रिया ) सपरिवारस्य मे इतः निष्क्रमणोपायः नास्ति इत्यर्थः । सर्व्वैः=पुत्रकलत्रादिभिः ( सहयोगे-३या ) सह=सार्द्धं ( अव्य ) मृतं—मरणं ( मृ-धा+भावे-क्त, प्रातिपदिकार्थे-१मा ) श्रेयः=प्रशस्ततमं मङ्गलमित्यर्थः ( प्रशस्य-श्र+इयसुच्, १मः-विण ) मे=मम=( जीवितं इत्यस्य कर्त्ता-६ष्ठी ) जीवितं=जीवनं प्राणधारणं ( जीव-धा+भावे-क्त, प्रातिपदिकार्थे-१मा ) न क्षमं=न हितं ( १मा-विण, क्षमं शक्ते हिते त्रिषु इत्यमरः, अहं सबान्धवः एव युगपत् मरिष्यामि न पुनः दारादीनां अन्यतमवियोगदुःखं सहिष्ये, नापि स्वयं परलोकं गत्वा एतान् विपत्सागरे पातयिष्यामि इत्यर्थः । १७ ॥

वाच्यान्तरं । तेन मया कृच्छ्रा आपत् आपन्ना, न शक्तं, का गतिः गमिष्यते सबान्धवेन । १७ ॥

मैं बड़ी आपदा में पड़ा हूं, इस के पार नहीं जा सक्ता हूं, मुझे धिक् है, मैं सब बान्धवों के साथ आज क्या उपाय करूं, सभों के साथ मेरा मरना भला है, आपको बचाना नहीं चाहता । १७ ॥

(17.) I am in a great dilema. How am I to get out of it ? Fie on me ! I see no means of saving my own family. The best course (therefore) is to die all together. I should not save myself.

ब्राह्मणी ( कर्त्ता ) उवाच ( क्रिया ) । [ वाच्यान्तरं—ब्राह्मण्या ऊचे । ]

**न सन्तापः इति ।** अन्वयः । त्वया प्राकृतेन इव कर्हिचित् सन्तापः न कार्य्यः, वेदस्य तव अयं सन्तापकालः न हि विद्यते । १८ ॥

व्याख्या। त्वया ( कर्त्ता-३या ) प्राकृतेन इव=पृथक्जनेन तुल्यः ( इवेन अलुकसमासः ) कर्हिचित्=कदाचित् ( कस्मिन् इति कर्हि+चित्, अधि-अव्य ) सन्तापः=दुःखं ( कर्म्म-१मा ) न कार्य्यः=न विधेयः ( कृ-धा+ण्यत्, क्रिया ), वैद्यस्य=विद्या अस्ति अस्य ( विद्य-अ+ष्णा ) तस्य विद्यावतः पण्डितस्य ( सम्ब विण ) तव ( सम्ब ) अयं=एषः वर्त्तमानः ( सर्व्व-कर्त्ता-विण ) सन्तापकालः=सन्तापस्य ( ६तत् ) कालः समयः ( कर्त्ता ) न हि विद्यते=न अस्ति ( विद्-धा+कर्त्तरि-लट, क्रिया ) नायं ते नीचमनुष्यस्य इव वृथाशोकेन कालातिपातसमयः, धैर्य्यमास्थाय विदुषा इव कार्य्यपरिच्छेदः करणीयः इति विशदार्थः। १८ ॥

वाच्यान्तरं। सन्तापं त्वं कुर्य्याः प्राकृतः इव, सन्तापकालेन न विद्यते। १८ ॥

ब्राह्मणी ने कहा कि, आप नीच मनुष्यकी तरह कभी सन्ताप न करो, आप विद्वान् हैं, आपके संताप करने का समय नहीं है। १८ ॥

(18) The Brahman's wife said,—You, who are learned, should not lament like vulgar people. For you this is no time to mourn.

**अवश्यमिति।** अन्वयः। इह सर्व्वैः मानवैः निधनं गन्तव्यं इह अवश्यम्भाविनि अर्थे सन्तापः न वै विद्यते। १९ ॥

व्याख्या। सन्तापवैयर्थ्यं दर्शयति अवश्यमिति। इह=अस्मिन् जगति ( अधि-अव्य ) सर्व्वैः मानवैः=मनुष्यैः ( कर्त्ता-३या ) अवश्यं=नियतं एव ( क्रिया-विण ) निधनं=मृत्युः ( कर्म्म-१मा ) गन्तव्यं=प्राप्तव्यं ( गम्-धा+कर्म्मणि तव्य, क्रिया ), इह=अस्मिन् ( अधि-विण, अव्य ) अवश्यम्भाविनि=अवश्यं भवति यः सः ( अवश्यम्-भू-धा+णिन् ) तस्मिन् अनिवार्य्ये इत्यर्थः ( अधि-विण ) अर्थे=विषये ( अधि ) सन्तापः=चित्त-क्षोभः ( कर्त्ता ) न विद्यते=नास्ति ( क्रिया ) अस्माकं वारः समायातः

अवश्यं एकेन वकोपहारेण भवितव्यं, तत् किं वृथाशोकेन काल: अति-वाह्यते, अहं एव कार्य्यनिर्णयं करिष्यामि इति संक्षेप: । १९ ।

वाच्यान्तरं । सर्व्वे मानवा: निधनं गमिष्यन्ति, सन्तापेन न विद्यते ।१९॥

इस संसार में सब मनुष्य अवश्य निधन को प्राप्त होंगे, अवश्य होने-वाले विषय में कुछ सन्ताप नहीं है । १९ ॥

(19.) All men must die. One should not therefore grieve for what must come to pass.

**भार्य्या इति ।** अन्वय: । भार्य्या पुत्र: अथ दुहिता सर्व्वं आत्मार्थं इष्यते, त्वं स्वबुद्ध्या व्यथां जहि, अहं स्वयं तत्र यास्यामि च ।२०॥

व्याख्या । भार्य्या = पत्नी ( प्रातिपदिकार्थे-१मा ) पुत्र: = तनय: अथ=तथा ( अव्य ) दुहिता = कन्या ( पूर्व्ववत्-१मा ) सर्व्वं=भार्य्यादिकं समस्तं ( सामन्यत्वात् नपुंसकं, कर्म्म १मा ) आत्मार्थं=आत्मने इदं ( अर्थेन नित्यसमास: ) आत्महितार्थं इत्यर्थ: ( क्रिया-विण ) इष्यते = काम्यते प्रार्थ्यते इत्यर्थ: ( इष-धा+कर्म्मणि-लट्, क्रिया ) त्वं ( कर्त्ता ) स्वबुद्ध्या—स्वस्य (६तत्) बुद्धि: तया निजबुद्धिं अवलम्ब्य इत्यर्थ: (करण) व्यथां=मानसीं यातनां ( कर्म्म ) जहि=नाशय (हन-धा+लोट्-मपु-१व, क्रिया ), स्वयं = आत्मना नतु अन्येन प्रेरिता इति भाव: ( अव्य ) अहं इति शेष: ( कर्त्ता ) तत्र=वकसन्निधौ ( अधि-अव्य ) यास्यामि च= गमिष्यामि च ( या-धा+लृट्, क्रिया ) २० ॥

वाच्यान्तरं । सर्व्वं इच्छति । त्वया व्यथा हन्यतां, मया यास्यते । २० ।

लोग अपने लिए भार्य्या, पुत्र और कन्या सबको चाहते हैं, आप अपनी बुद्धि से दुख दूर करिए, मैं वहां आप जाऊंगी । २० ॥

(20.) For personal happiness, men wish to have wives, sons and daughters—understanding this well give up sorrowing. I shall myself go there.

**एतत् इति ।** अन्वयः । (नारी) प्राणान् परित्यज्य अपि यत् भर्त्तृहितं आचरेत्, एतत् हि लोके नार्य्याः परमं सनातनं कार्य्यं । २१ ॥

व्याख्या । स्वयं गमने हेतुं निर्द्दिशति एतदिति । नारी (कर्त्ता) प्राणान्=असून् (कर्म्म) परित्यज्यापि विमुच्य अपि शरीरव्ययेन अपि इत्यर्थः (असमा) यत् (क्रिया-विण) भर्त्तृहितं=भर्त्तुः (६तत्) हितं कल्याणं (कर्म्म) आचरेत्=कुर्य्यात् (आ·चर-धा+विधि, क्रिया)। एतत् हि=प्राणव्ययेनापि भर्त्तृहितानुष्ठानमेव (कर्त्ता) लोके=संसारे (अधि) नार्य्याः=पत्न्याः (कार्य्यं इत्यस्य कर्त्ता ६ष्ठी) परमं (कर्त्ता-विण-१मा) सनातनं=सना सदा (सना इति सदार्थकं अव्ययं) भवः (सना ञ+तनप्) तत् शाश्वतं नित्यं इत्यर्थः (कर्त्ता-विण-१मा) कार्य्यं=कर्त्तव्यं कर्म्म कर्त्ता) भवतीति शेषः, पत्नी पत्युः हितार्थं यत् प्राणान् अपि मुञ्चति तेन असौ अति दुष्करं विस्मयावहं किञ्चित् न करोति, केवलं नित्यानुष्ठेयं स्वकर्त्तव्यं साधयति इति विशदार्थः । २१ ॥

वाच्यान्तरं । एतेन परमेण सनातनेन कार्य्येण भूयते, हितं आचर्य्येत । २१ ॥

नारी के लिए इस लोक में यही सनातन परम धर्म्म है कि, प्राण देके भी पति का हित करे । २१ ॥

(21.) On earth it is ever the best duty of a woman to promote the welfare of her husband even at the sacrifice of her own life.

**तच्चेति ।** अन्वयः । तत् इदं कर्म्म च तत्र कृतं तव अपि सुखावहं, अमुत्र अक्षय्यं च, अस्मिन् लोके यशस्करं च भवति । २२ ॥

व्याख्या । तत् इदं=स्वप्राणत्यागेन भर्त्तृप्राणरक्षणरूपं (कर्त्ता-विण) कर्म्म-कार्य्यं (कर्त्ता) तत्र=तस्मिन् भर्त्तृहितनिमित्ते इत्यर्थः (अधि-

अव्य ) कृतं=मया अनुष्ठितं सत् ( कर्त्ता-विण ) तव अपि ( सम्ब ) सुखावहं—सुखं आवहति जनयति यत् ( सुख-आ वह-धा+अच ), तत् सुखजनकं ( कर्त्ता-विण ) भवति ( क्रिया ) अपि शब्देन ममापि इति अधिगम्यते, ( अमुत्र=तत्र, अधि-अव्य ) अक्षय्यं=न क्षेतुं शक्यं ( न क्षि-धा+यत्, क्षय्यजय्यौ शक्यार्थे इति सूत्रेण सिद्धं, अन्यत्र अक्षेयं अक्षणीयं ( कर्त्ता-विण ) स्वदेहार्पणेन भर्त्तृप्राणरक्षणात् मे अक्षयः स्वर्गवासः ( भविष्यतीत्यर्थः ) अस्मिन् लोके=इह संसारे ( अधि ) यशस्करं च=यशः करोति यत् तत् (यशस्-कृ-धा+लट) यशःसाधकं च=( कर्त्ता-विण ) भवति भविष्यति ( क्रिया ) इह जगति सर्व्वे मां प्रशंसिष्यन्ति इति भावः। २२ ॥

वाच्यान्तरं। तेन कृतेन कर्म्मणा सुखावहेन भूयते, अक्षय्येन यशस्करेण च भूयते। २२

पति के हित लिए प्राण देना आपके लिए सुख और मेरे लिए परलोक में अक्षय पुण्य और इस लोक में यश देनेवाला है। २२ ॥

22.) Therefore, what I shall accomplish there will be a passport to everlasting residence in heaven and establish my fame in this world; moreover, it shall make you happy.

**एषः इति।** अन्वयः। एषः एव च गुरुः धर्म्म एव, अहं यं तव प्रवक्ष्यामि, अत्र तव भूयान् अर्थः च धर्म्मः च प्रदृश्यते। २३ ॥

व्याख्या। एषः च वक्ष्यमाणः ( सर्व्व-१मा-विण ) गुरुः=महान् ( प्रमा-विण ) धर्म्मः एव=न्यायः एव ( प्रातिपदिकार्थे-१मा ) अहं ( कर्त्ता ) यं=धर्म्मं ( कर्म्म ) तव=तुभ्यं त्वां वा ( सम्बन्धविवक्षायां-६ष्ठी ) प्रवक्ष्यामि=कथयिष्यामि ( प्र-वच-धा+लृट्-३पु-१व. क्रिया ) अत्र=अस्मिन् धर्म्मे एतन्न्यायानुसरणे इत्यर्थः ( अधि-अव्य ) तव ( सम्ब) भूयान्=विपुलः ( बहु-अ+ईयसु, कर्म्म-विण-१मा ) अर्थः=प्रयोजनं

इष्टसिद्धिः इत्यर्थ. ( कर्म्म-१मा ) प्रदृश्यते=लक्ष्यते ( प्र दृश-धा+कर्म्मणि-लट्, क्रिया ) न इयं इष्टसिद्धिः धर्म्मोपपीड़का इत्याह, धर्म्मः च= धर्म्मानुष्ठानजन्यं पुण्यं च ( कर्म्म-१मा ) प्रदृश्यते (क्रिया ) मम निर्द्दिश्या युक्तिः अनुस्रियतां, तथा कृते अर्थधर्म्मौ अनापीड्य विवेकवता यत क्रियते तत्कृतं भविष्यति इति संक्षेपः। २६ ॥

वाच्यान्तरं । मया यः प्रवक्ष्यते, भूयांसं अर्थं धर्म्मं च पश्यन्ति ।२६॥

जो धर्म्म मैं आप से कहतो हूं वह गुरु धर्म्म है, इस में आपके लिए अर्थ और धर्म्म दोनों अधिक दिखलाई देता है । २३ ॥

(23.) What I am speaking of is the best course for you; it will, as it seems to me, secure your wordly interest and add immensely to your virtues.

**यदर्थं इति ।** अन्वयः। भार्य्या यदर्थं इष्यते, त्वया सः अर्थः एका कन्या च ( एकः ) कुमारः च मयि प्राप्तः, त्वया अहं अनृणा कृता । २४ ॥

व्याख्या । न्यायं प्रदर्शयति, यदर्थं इति । भार्य्या=पत्नी ( कर्म्म-१मा ) यदर्थं=यस्मै लाभाय ( क्रिया-विण, अर्थेन नित्यसमासः ) इष्यते= अभिलष्यते प्रार्थ्यते इत्यर्थः ( इष-धा+कर्म्मणि-लट्, क्रिया ) लोकैः इति शेषः, त्वया ( कर्त्ता-३या ) मयि=मत्तः इत्यर्थः ( अधिकरण विवक्षया ७मी ) प्राप्तः=अधिगतः (प्र-आप-धा+कर्म्मणि-क्त, क्रिया) किं स्वरूपोऽयं अर्थः इत्याह एकेति । एका (सर्व्व कर्म्म विण) कन्या च=तनया ( अर्थस्य विधेय-विण ) एकः कुमारः च=पुत्रः च स च त्वया लब्ध इत्यर्थः ( पुत्रार्थे क्रियते भार्य्या इति स्मृतिः ), त्वया ( कर्त्ता-३या ) अहं ( कर्म्म-१मा ) अनृणा=नास्ति ऋणं यस्याः सा (बहुव्री) ऋणमुक्ता (कर्म्म-विण ) कृता विहिता ( कृ धा+कर्म्मणि-क्त, क्रिया ) मत्पाणिग्रहणेन तुभ्यं अहं यत् यत् अधारयम्, अपत्यप्रसवेन तत् सर्व्वं परिशोधितं अभूत,

अतः अनृणा अहं किञ्चित् पतिहितसाधननिबन्धनं अतिरिक्तं स्वं पारलौकिकं सुकृतं अर्जयितुं इच्छामि इति भावः । २४ ॥

वाच्यान्तरं । भार्य्यां इच्छति, त्वं तं अर्थं प्राप्तवान् एकां कन्यां कुमारं च, त्वं मां अनृणां कृतवान् । २४ ॥

जिस लिए भार्य्या चाहते हैं, आपने वह प्रयोजन एक कन्या और पुत्र पाके मुझ से पाया है, मुझे आपने अनृणां किया है। २४ ॥

(24.) The object for which men wish to have wives, has been secured by me in your case. By me you have had a son and a daughter and thus my debt to you has been repaid.

**समर्थः इति ।** अन्वयः । ( त्वं ) सुतयोः पोषणे तथा रक्षणे च समर्थः असि, अहं तु सुतयोः तथा रक्षणपोषणे न शक्ता । २४ ॥

व्याख्या । इतः अपि भवज्जीवनं आशास्यं इत्याह समर्थः इति । त्वं इति उह्यं ( कर्त्ता ) सुतयोः=सुता च सुतः च ( एकशेषद्वन्द्व ) तयोः ( पोषणे = रक्षणेच इत्यनयोः कर्म्म ६ष्ठी ) पोषणे=अन्नवस्त्रादिदानेन भरणे ( अधि ) तथा रक्षणे = भयात् परित्राणे च ( अधि ) समर्थः=शक्तः ( कर्त्ता-विण ) असि=भवसि ( अस्-धा+लट्, क्रिया ) अहं तु (कर्त्ता-१मा ) सुतयोः ( पूर्व्ववत् समासः विभक्तिश्च ) तथा = यथात्वं ( अव्य ) रक्षण-पोषणे = रक्षणं च पोषणं च ( समाहारद्वन्द्व ) तस्मिन् ( अधि ) न शक्ता=न समर्था ( शक-धा+क्त, कर्त्ता-विण ) भवामि इति शेषः ।२५॥

वाच्यान्तरं । समर्थेन भूयते, मया शक्तया न भूयते । २५ ॥

कन्या के रक्षण और पोषण में आप समर्थ हैं, में आप विन इन को पोष पाल नहीं सकुंगी । २५ ॥

(25.) You are able to support as well as to look after the two children ; but I am not.

**मम इति ।** अन्वयः । हे सर्व्वप्राणधनेश्वर तद्विहीनायाः मम बालौ सुतौ कथं स्यातां अहं तु कथं भवेयं । २५ ॥

व्याख्या। हे सर्व्वप्राणधनेश्वर=प्राणाः च धनानि च प्राणधनानि (द्वन्द) सर्व्वाणि प्राणधनानि (कर्म्म-धा) तेषां (६तत्) ईश्वरः तत्सम्बुद्धौ अस्माकं प्राणधनानि च त्वदधीनानि इति भावः (सम्बो) तद्विहीनाया:= त्वया (३तत्) विहीना विरहिता (वि-हा-धा+क्त) त्वयि न तिष्ठति इति भावः (६ष्ठी-विण) मम (सम्ब) बालौ=बाला च बालः च (एकशेष द्वन्द) तौ अल्पवयस्कौ (कर्त्ता-विण) सुतौ=सुता च सुतः च (पूर्व्ववत् समासः) तौ पुत्रौ (कर्त्ता-१मा-२व) कथं=केन प्रकारेण (अव्य) स्यातां=वर्त्तेतां (अस-धा+विधि, क्रिया) त्वद्विहीनौ कथञ्चित् न जीवेतां इत्यर्थः, अहं (कर्त्ता) कथं (अव्य) भवेयं=वर्त्तेयं (क्रिया) न कथञ्चित् जीवेयं इत्यर्थः। २६॥

वाच्यान्तरं। बालाभ्यां सुताभ्यां भूयते, मया च भूयते। २६॥

हे प्राण धन सब के ईश्वर आप मुझे छोड़ जाएंगे तो मेरे लड़कों की और मेरी क्या दशा होगी। २६॥

(26.) O thou the lord of life and all that I own, without thee what will become of this son and this daughter? What, too, will be my own fate?

कथं इति। अन्वयः। त्वया विना अनाथा विधवा बालपुत्रा (अहं) साधुगते पथि स्थिता सती मिथुनं कथं हि जीवयिष्यामि। २७॥

व्याख्या। त्वया (विनायोगे ३या) विना=कृते त्वयि बकेन भक्षिते सति इत्यर्थः (अव्य) अनाथा=नाथशून्या रक्षकविहीना इत्यर्थः (कर्त्ता-विण) विधवा=विगतः धवः यस्याः (बहुव्रो) सा भर्त्तृरहिता (कर्त्ता-विण) बालपुत्रा=बालौ पुत्रौ कन्यापुत्रौ यस्याः (बहुव्रो) सा (कर्त्ता-विण) अहं (कर्त्ता) साधुगते=साधुभिः सज्जनैः (३तत्) गतः चुण्णः आचरितः इत्यर्थः तस्मिन् (अधि-विण) पथि=मार्गे (अधि) स्थिता=वर्त्तमाना पतिव्रता धर्म्मं पालयन्ती सती इत्यर्थः (कर्त्ता विण)

मिथुनं=सुतयुग्मं ( कर्म्म, अत्र मिथुनशब्दप्रयोगः आर्षः अथवा स्त्री पुरुषमात्रपरत्वं इति बोध्यं ) कथं=केन उपायेन ( अव्य ) हि=(निश्चये-अव्य ) जीवयिष्यामि=जीवितं रक्षिष्यामि ( जीव-धा+णिच+लृट, क्रिया, अकर्म्मकत्वात् मिथुनं इति अनिजन्तकर्त्तुः कर्म्मत्वं ) त्वद्विहीना सती कथञ्चित् जीवन्ती अपि पातिव्रत्यं रक्षितुं सुतौ जीवितौ वा स्थापयितुं न शक्ता भविष्यामि इत्यर्थः । २७ ॥

वाच्यान्तरं । विधवया अनाथया बालपुत्रया पथि स्थितया मिथुनं जीवयिष्यते । २७ ॥

मैं अनाथ विधवा होजाऊंगी, मेरे लड़के छोटे हैं, मैं आप के विना अच्छी राह में रह कैसे लड़के और लड़की को पालूंगी । २७ ॥

(27.) When you are no more, I shall be husbandless and helpless. How shall I then be able to save the lives of these two children keeping myself in the path of virtue?

**अहङ्कृतेति ।** अन्वयः । अहङ्कृतावलिप्तैः तव सम्बन्धे अयुक्तैः ( जनैः ) प्रार्थ्यमानां इमां सुतां कथं रक्षितुं शक्ष्यामि । २८ ॥

व्याख्या । पूर्व्वं भरणपोषणे असामर्थ्यं उक्ता सम्प्रति धर्म्मरक्षायां असामर्थ्यं त्रिभिः, श्लोकैः कथयति, अहङ्कृतेति । अहङ्कृतावलिप्तैः= अहङ्कृताः गर्व्विताः अवलिप्ताः कलङ्किताः ( विशेषणसमासः कर्त्ता-विण ) तव ( सम्ब ) सम्बन्धे=तव जामातृसम्बन्धे ( अधि ) अयुक्तैः=अनुपयुक्तैः नीचवंशोद्भवैः इत्यर्थः ( कर्त्ता-विण ) जनैः इति शेषः ( कर्त्ता-३या ) प्रार्थ्यमानां=याच्यमानां ( कर्म्म-विण ) इमां ( कर्म्म-विण ) सुतां=कन्यां ( कर्म्म) रक्षितं तेभ्यः त्रातुं ( असमा ) कथं शक्ष्यामि=समर्था भविष्यामि (शक्-धा+लृट, क्रिया ) अहं इति शेषः अवर्त्तमाने त्वयि यः कश्चिदागम्य कन्यां प्रार्थयिष्यते अहं त्वबला रक्षकविहीना न पारयिष्यामि रक्षितुं इत्थं च नीचकुलोद्भवेन दौहित्रेण ते लोका अपि विनश्यन्ति इति निर्गलितार्थः । २८ ॥

बाच्यान्तरं । शक्यते । २८ ॥

अहङ्कारी और कलंकित ऐसे लोग जब इस कन्या को मांगेंगे जो आप के साथ सम्बन्ध करने के अयोग्य हैं, तब मैं क्योंकर रक्षा कर सकूंगी । २८ ॥

(28.) How shall I be able to protect the daughter when her hand will be covetted by men of pride and of reproachable character ?

**उत्सृष्टम् इति ।** अन्वय: । खगा: भूमौ उत्सृष्टम् आमिषं यथा प्रार्थयन्ति । तथा सर्व्वे जना: पतिहीनां स्त्रियं प्रार्थयन्ति । २९ ॥

व्याख्या । खगा:=खं आकाशं गच्छन्ति ये ( ख-गम-धा+ड ) ते पक्षिण: ( कर्त्ता ) भूमौ=पृथिव्यां ( अधि ) उत्सृष्टं=परित्यक्तं ( उत्-सृज-धा+क्त ) अरक्षितं इत्यर्थ: ( कर्म्म-विश ) आमिषं=मांसं ( कर्म्म, आमिषं पुं नपुंसके भोग्यवस्तुनि सम्भोगे प्युत्कोचे पालनेऽपिच इति मेदिनी ) यथा=यादृशं (यद्-श+था, अव्य ) सर्व्वे जना: (कर्त्ता ) पति-हीनां=पत्या ( ३तत् ) हीना ( हा-धा+क्त) तां विधवां निराश्रयां अनाथां इत्यर्थ: ( कर्म्म-विश ) स्त्रियं=नारीं ( कर्म्म ) प्रार्थयन्ति—अभिलषन्ति लब्धुं यतन्ते इत्यर्थ: दुर्ज्जना: अवलीलया एव अनाथायां दुष्प्रवृत्तिं सम्पा-दयितुं शक्नुवन्ति इति भाव: । २९ ॥

बाच्यान्तरं । खगै: आमिषं प्रार्थ्यते, सर्व्वै: जनै: पतिहीना स्त्री प्रार्थ्यते । २९ ॥

जैसे भूमि में पड़े हुए मांस को चिड़िया चाहती हैं उसी ढब से पतिहीना स्त्री को सब लोग चाहते हैं । २९ ॥

( 29. ) As the birds wish to take the flesh left on the ground, so do the people desire to have a widow.

**साहं इति ।** अन्वय: । हे द्विजोत्तम सा अहं दुरात्मभि: प्रार्थ्यमाना विचाल्यमाना च (सती) सज्जनेष्टे पथि स्थातुं न शक्ष्यामि ।३०॥

व्याख्या। हे द्विजोत्तम=द्विजेषु उत्तमः (७तत्) हे ब्राह्मणश्रेष्ठ (सम्बो) सा=पतिहीना (सर्व्व-कर्त्ता-विण) अहं (कर्त्ता) दुरात्मभिः=दुष्टः आत्मा येषां (बहुव्री) तैः दुर्ज्जनैः लम्पटैः इत्यर्थः (प्रार्थ्यमाना विचाल्यमाना च इति पदद्वयस्य कर्त्ता-३या) प्रार्थमाना=याच्यमाना (कर्म्मणि-शानच) विचाल्यमाना=प्रलुब्धमाना प्रलोभनादिभिः आकृष्य-माना सती इत्यर्थः (वि-चल-धा+णिच+कर्म्मणि शानच) सज्जनेष्टे=सज्जनानां साधूनां (६तत्) इष्टः अभिलषितः साधुभिः आचरित इत्यर्थः तस्मिन् (अधि-विण) पथि=मार्गे धर्म्मे इत्यर्थः (अधि) स्थातुं=वर्त्तितुं (असमा) न शक्ष्यामि=न समर्था भविष्यामि, (क्रिया) तेषां कौशलेन पातिव्रत्यं रक्षितुं न समर्था भविष्यामीति भावः। ३० ॥

वाच्यान्तरं। तया मया प्रार्थ्यमानया विचाल्यमानया न शक्यते ।३०॥

हे ब्राह्मणश्रेष्ठ जब दुरात्मा मुझे प्रार्थना करेंगे और लोभ दिखाएंगे तब मैं भलेमानसों की राह पर न रह सकूंगी। ३० ॥

(30.) O best of Brahmins! How, by being tempted by wicked men, shall I be able to keep in the path desired by the pious men.

**कथं तस्य इति।** अन्वयः। अहं इमां असंस्कृतां तस्य कुलस्य एकां बालां पितृपैतामहे मार्गे कथं नियोक्तुं उत्सहे। ३१ ॥

व्याख्या। अहं (कर्त्ता-१मा) इमां=पार्श्वस्थां (सर्व्व-कर्म्म-विण) असंस्कृतां (सम्-कृ धा+क्त) तां अविवाहितां (कर्म्म-विण) तस्य=प्रसिद्धस्य (सम्ब-विण) कुलस्य=तव वंशस्य (सम्ब) एकां=अद्वितीयां अस्याः अपात्रे पतनात् तव कुलहानिः स्यात् इत्यर्थः (कर्म्म विण) बालां=कन्यां (कर्म्म) पितृपैतामहे=पितुः पिता पितामहः (पितृ अ+मह) पिता च पितामहः च (द्वन्द) पितृपितामहौ तयोः अयं (इदमर्थे-

थय् ) तस्मिन् ( अधि-विश ) मार्गे=पथि (अधि) नियोक्तुं=स्थापयितुं ( असमा ) कथं=केन उपायेन ( अव्य ) उत्सहे=समर्था भवामि ( उत्-सह-धा+लट्, क्रिया ) कथं पितृपैतामहं मार्गं अनुसरन्ती एनां सत्-कुलीनकन्यकां कर्त्तुं शक्नोमि इति भाव:। ३१ ॥

वाच्यान्तरं। मया उत्सह्यते। ३१ ॥

इस अविवाहिता कुल की एक कन्या को पिता पितामह की राह पर कैसे रख सकूंगी। ३१ ॥

( 3I. ) How shall I be able to put this only daughter of your family who is sinless, in the path of righteousness followed by your father and grandfather ?

**कथं शक्ष्यामि इति।** अन्वय:। अनाथे सर्व्वत: लुप्ते अस्मिन् वाले धर्म्मदर्शिवान् त्वं यथा ( तथा अहं ) ईप्सितान् गुणान् आधातुं कथं शक्ष्यामि। ३२ ॥

व्याख्या। अनाथे=नाथशून्ये पितृहीने इत्यर्थ: ( अधि-विश ) सर्व्वत: सर्व्वं लुप्तं शून्यं यस्य ( वहुव्री, सर्व्वत: इति द्वितीयाया: तसिल् अन्यत्रापि दृश्यते इति सूत्रेण तसिल: सर्व्वविभक्तिकत्वात्, अथवा मयूर-व्यंसकादित्वात् समास: ) सर्व्वथा तत्वावधानशून्ये इत्यर्थ: ( त्वधि-विश ) अस्मिन् ( सर्व्वं-अधि-विश ) वाले=अप्राप्तवयसि पुत्रे ( अधि ) धर्म्मदर्शि-वान्=धर्म्मं दर्शिवान् धर्म्मज्ञ: (२तत् गम्यादीनामुपसंख्यानं इति विधानात्, दर्शिवान् इति आर्षप्रयोग:, क्वसुप्रत्यये ददृश्विवान्, वनिप्प्रत्यये दृष्टवान् इति साधु ) त्वं ( उपमानकर्त्ता ) यथा=त्वं इव यथात्वं गुणान् आधातुं शक्नोषि इति भाव:, तथा अहं इति शेष:, ईप्सितान्=वाञ्छितान् ( आप-धा+सन्=ईप्स-धा+क्त, कर्म्म विश ) गुणान्=विद्याविनयादि-सद्गुणान् (कर्म्म) आधातुं=स्थापयितुं शिक्षयितुं इत्यर्थ: (आ-धा+धा+तुमुन्) कथं शक्ष्यामि=न कथञ्चित् समर्था भविष्यामि (क्रिया)। ३२ ॥

वाच्यान्तरं। त्वया यथा, तथा मया कथं भव्यते। ३२॥

इस अनाथ और सब के लोप होने की हालत में धर्मिक तुम्हारी तरह इस लड़के को चाहे हुए गुण कैसे सिखा सकूंगी। ३२॥

(32.) When this boy becomes fatherless and there is no one to look after him, how shall I be able to implant in him desirable qualities in the way you, who are so well-versed in sacred lore, would have done.

**अवज्ञाता इति।** अन्वयः। ब्रह्मन् लोकेषु अवलिप्तैः नरैः तथा अवज्ञाता आत्मानं अजानती (सती) मरिष्यामि, संशयः न। ३३॥

व्याख्या। ब्रह्मन्=हे विप्र (सम्बो) लोकेषु=लोकानां मध्ये (अधि) अवलिप्तैः=कलङ्कितैः लम्पटैः इत्यर्थः तथा (कर्त्ता-विश) नरैः=मनुष्यैः (अवज्ञाता इत्यस्य कर्त्ता-३या) तथा=तादृशं (अव्य) अवज्ञाता=अपमानिता=(अव ज्ञा-धा+कर्म्मणि-क्त) आत्मानं=स्वं (कर्म्म) अजानती=न जानती (ज्ञा-धा+शतृ, स्त्रियां ईप) विस्मरन्ती तेषां धर्षणेन आत्महत्यामहापापं विस्मृत्य इति भावः (कर्त्ता-विश) मरिष्यामि=उद्बन्धनादिना आत्महत्यां सम्पादयिष्यामि इत्यर्थः (क्रिया) अहं इति शेषः, अत्र संशयः=सन्देहः (प्रातिपदिकार्थे-१मा) न=नास्ति। ३३॥

वाच्यान्तरं। अवज्ञातया अजानत्या मया मरिष्यते। ३३॥

अहङ्कारी लोग मुझे अपमान करेंगे, मैं अपने तईं भूल आत्महत्या करूंगी, हे ब्राह्मण इस में शक नहीं है। ३३॥

(33.) O Brahmin! There is no doubt that being hated by men of stained character and forgetting myself, I shall commit suicide.

**तौ इति।** अन्वयः। त्वया तथा मया च एव हीनौ, तौ बालौ आत्मजौ च जलक्षये मत्स्यौ इव विनश्येतां, सन्देहः न। ३४॥

व्याख्या। त्वया तथा मया च एव (कर्त्ता-३या) हीनौ=विरहितौ

आवयोः मृतयोः सतोः इत्यर्थः ( हा-धा+कर्म्मणि-क्त ) तौ=सा च न: च तौ ( एकशेषद्वन्द्व ) इमौ ( कर्त्ता-विश ) वालौ=वाला वालः च ( पूर्व्ववत् समासः ) अप्राप्तवयस्कौ ( कर्त्ता-विश ) आत्मजौ आत्मनः जायते यः ( आत्मन्-जन-धा+ड ) सः आत्मजः पुत्रौ ( आत्मा वै जायते पुत्रः इति श्रुतिः ) आत्मजा च आत्मजः च ( पूर्व्ववत् समासः ) तौ= कन्यापुत्रौ ( कर्त्ता-१मा-२व ) जलचये=जलानां ( ६तत् ) चये शेषे सति ( अधि ) मत्स्यौ इव=मीनवत् ( उपमानकर्त्ता ) विनश्येतां=रक्षका- भावात् विनष्टौ भवेतां ( वि-नश-धा+विधि, १पु-२व, क्रिया ) सन्देहः न=संशयो नास्ति । ३४ ॥

वाच्यान्तरं । हीनाभ्यां ताभ्यां वालाभ्यां मत्स्याभ्यां इव विनश्येत ।३४॥

येह लड़की और लड़का आपके और मेरे विन निःसन्देह पानी सूखने पर मछलिओं की तरह विनाश प्राप्त होंगे । ३४ ॥

( 34. ) As the fish dies when there is no water so shall our two children perish without us.

**वितयं इति ।** अन्वयः । एवं वितयं अपि त्वया विहीनं (सत्) सर्व्वथा असंशयं विनशिष्यति, तस्मात् त्वं मां परित्यक्तुं अर्हसि ।३५॥

व्याख्या । एवं=इत्थं तन्नाशे मन्नाशः मन्नाशे सुतयोः नाशः इत्येवं इत्यर्थः, वितयं अपि=त्र्यवयव ( त्रि-श+अवयवे-२या ) पत्नी पुत्रः कन्या च एतत् त्रयं एव इत्यर्थः ( कर्त्ता-१मा ) त्वया=भवता ( विहीनं इत्यस्य- कर्त्ता-३या ) विहीनं=परित्यक्तं सत् ( वि-हा-धा+कर्म्मणि क्त ) सर्व्वथा =सर्व्वप्रकारेण ( अव्य ) असंशयं=नास्ति संशयः ( सम्-शी-धा=अल ) यस्मिन् ( वहुव्री ) तत् निःसन्देहं यथा तथा ( क्रिया-विश ) विनशि- ष्यति=मरिष्यति ( वि-नश-धा+लृट, क्रिया ), तस्मात् ( हेत्यर्थे-५मी ) त्वं ( कर्त्ता ) मां ( कर्म्म ) परित्यक्तुं=विहातुं वकसमीपे प्रेरयितुं ( परि- त्यज-धा+तुमुन् ) अर्हसि ( अर्ह धा+लट, क्रिया ), तन्नाशे अस्माकं

सर्व्वोच्छेदः मन्नाशे केवलं ममैव नाशः, अतः मन्नाशः एव श्रेयान् इति निर्गलितार्थः । ३५ ॥

वाच्यान्तरं । चितयेन विहीनेन विनशिष्यते, त्वया भर्त्स्यते । ३५ ॥

आप के विन हर तरह से तीनों ( भार्य्या, कन्या और पुत्र ) निःसन्देह मरेंगे इस लिए आप मुझे छोड दीजिये । ३५ ॥

(35.) When you are gone, all three of us are sure to die. Therefore it behoves you to sacrifice me.

**व्युष्टिरिति** । अन्वयः । ब्रह्मन् भर्त्तुः पूर्व्वं परां गतिं गन्तुं सपुत्राणां स्त्रीणां एषा परा व्युष्टिः इति धर्म्मविदः विदुः । ३६ ॥

व्याख्या । ब्रह्मन् = हे विप्र धर्म्मज्ञ इति भावः ( सम्बो ) भर्त्तुः = पत्युः ( अथारादित्यादिना-५मी ) पूर्व्वं = प्रथमं भर्त्तृमरणात् प्राक् इत्यर्थः ( अत्यन्तसंयोगे-२या ) परां = अन्यां ( कर्म्म-विण ) गतिं = दशां मृत्युं इति यावत् ( कर्म्म ) गन्तुं = प्राप्तुं ( गम-धा+तुमुन् ) सपुत्राणां = पुत्रेण सह वर्त्तमानानां पुत्रवतीनां यदर्थं भार्य्या क्रियते निष्पादिततदर्थानां इत्यर्थः ( ६ष्ठी-विण ) एवं पुत्रोदयात् प्राक् मरणस्पृहा न प्रशस्ता इति गम्यते, स्त्रीणां = पत्नीनां ( व्युष्टिः इत्यस्य कर्त्ता-६ष्ठी ) एषा = भर्त्तुः प्राक्-मरणरूपा ( १मा-विण ) परा = उत्कृष्टा सर्व्वप्रधाना इत्यर्थः (१मा-विण) व्युष्टिः = भाग्यं ( वस-धा+क्ति, प्रातिपदिकार्थे-१मा ) इति ( अव्य ) धर्म्मविदः = धर्म्मं विदन्ति ये ते ( धर्म्म-विद-धा+क्विप् ) पतिव्रताधर्म्मज्ञाः ( कर्त्ता ) विदुः = जानन्ति ( विद-धा+लट्, क्रिया ) पुत्रवत्यः स्त्रियः भर्त्तुः प्राक् लोकान्तरं गन्तुं वाञ्छन्ति तत् त्वं वेत्सि धर्म्मज्ञत्वात् इति फलितार्थः, नीलकण्ठस्तु "सपुत्राणां स्त्रीणां भर्त्तुः प्राक् परागति गन्तुं परगति गमनरूपा मृतुरीरति यावत् परा व्युष्टिः समृद्धिः महत् भाग्यं इति यावत् ( व्युष्टिः फले समृद्धौ च इति मेदिनी) इति व्याचष्टे । ३६ ॥

वाच्यान्तरं । धर्म्मविद्भिः विद्यते । ३६ ॥

हे ब्राह्मण धर्म्मज्ञ पण्डित ऐसा कहते हैं कि उन पुत्रवती स्त्रियों को बड़ी भाग्य है जो पति से पहिले परलोक को सिधारती है। २६ ॥

( 36. ) O best of Brahmins! Sages well-versed in the *Sastras* affirm that it is a great glory for women, who have got sons, to die while their husbands are alive.

**परित्यक्त इति।** अन्वयः। मया त्वदर्थे अयं सुतः परित्यक्तः, इयं दुहिता (परित्यक्ता) वान्धवाः च परित्यक्ताः मे जीवितं च (परित्यक्तं) २७ ॥

व्याख्या। यया ( कर्त्ता-३या ) तदर्थे=तुभ्यं तव हिताय इत्यर्थः ( अर्थेन नित्यसमासः ) अयं=पुरोवर्त्ती ( कर्म्म विश ) सुतः=पुत्रः (कर्म्म-१मा ) परित्यक्तः=परित्यक्तं प्रक्रान्तः (परि-त्यज-धा+कर्म्मणि क्त, क्रिया) इयं दुहिता=कन्या (कर्म्म-१मा ) परित्यक्ता इति शेषः, वान्धवाः=स्वजनाः ( कर्म्म-१मा ) परित्यक्ताः ( क्रिया ) मे=मम ( सम्ब ) जीवितं=प्राणाः च ( जीव-धा=भावे-क्त, कर्म्म-१मा ) परित्यक्तं इति शेषः। २७ ॥

वाच्यान्तरं। अहं सुतं, दुहितरं, वान्धवान्, जीवितं परित्यक्तवती। २७ ॥

मैं आप के लिये पुत्र, कन्या, वान्धव और अपने प्राण को त्याग करती हूं। २७ ॥

( 37. ) it is for that very reason that I wish to leave my son, daughter and kinsmen and to give up my own life.

**यज्ञैः इति।** अन्वयः। स्त्रियाः भर्त्तुः प्रियहिते नित्यं स्थितिः विविधैः यज्ञैः तपोभिः, नियमैः तथा दानैः च विशिष्यते। ३८ ॥

व्याख्या। स्त्रियाः=नार्य्याः (स्थितिः इत्यस्य कर्त्ता-६ष्ठी) भर्त्तुः=पत्युः (सम्ब) प्रियहिते=प्रियं च हितं च (समाहारद्वन्द्वः तेन नपुंसकं च) तस्मिन् प्रियकार्य्ये हितकार्य्ये च ( अधि ) नित्यं=नियतं ( क्रिया-विश ) स्थितिः=अवस्थानं तदनुष्ठानं इत्यर्थः ( कर्म्म-१मा ) विविधैः ( ३या-विश ) यज्ञैः=यागैः, तपोभिः=उत्कटतपश्चरणैः नियमैः=उपवासादिभिः,

यथा दानैः च वितरणैः च यज्ञतपश्चरणोपवासदानेभ्यः इत्यर्थः ( अत्र यज्ञादीनां तृतीयान्तं आर्षं ) विशिष्यते=विशिष्टतया गम्यते ( वि-शिष-धा+कर्म्मणि लट, क्रिया ) लोकैः इति शेषः । अतः मद्गमनमेव युक्तं इति भावः । ३८ ॥

वाच्यान्तरं । लोकाः स्थितिं विशिंषन्ति । ३८ ॥

स्त्री का सदा स्वामी का प्रिय और हित करना यज्ञ, तप, नियम और नाना भांत के दान से बड़ा है । ३८ ॥

( 38. ) Always to do good deeds that are calculated to please as well as to benefit one's husband is more commendable in a woman than the performance of sacrifices, devotion, penace, and alms-giving.

तदिति । अन्वयः । यत् चिकीर्षामि तत् इदं परमसम्मतं धर्म्मं तव च एव कुलस्य च इष्टं च एव हितं च एव । ३९ ॥

व्याख्या । यत्=स्वदेहार्पणरूपं कर्म्म ( कर्म्म-२या ) चिकीर्षामि=कर्त्तुं इच्छामि अहं इति शेषः ( कृ-धा+सन्=चिकीर्ष-धा+लट, क्रिया ) तत् इदं=आत्मसमर्पणरूपं ( कर्त्ता-विण ) परमसम्मतं=परमं यथा तथा सम्मतं ( सुप्सुपेति समासः ) सर्व्वदा सद्भिः इष्टं इत्यर्थः ( कर्त्ता-विण ) धर्म्मं=सुकृतं आत्मजीवनत्यागेन भर्त्तुः प्रियहितसाधनरूपं पुण्यं इत्यर्थः ( कर्त्ता, स्यात् धर्म्ममस्त्रियां पुण्यं श्रेयसी सुकृतं वृष इत्यमरः ) तव च एव भर्त्तुः ब्राह्मणस्य ( सम्ब ) कुलस्य च=तव वंशस्य च ( सम्ब ) इष्टं च एव=प्रियं एव ( कर्त्ता-विधेय-विण ) हितं च एव=मङ्गलजनकं एव ( कर्त्ता विधेय-विण ) भवतीति शेषः तव परित्राणात् पुत्रयोः रक्षा, तत् तव प्रियं हितं च, पुत्ररक्षणात् कुलस्य प्रियं हितञ्च इति विग्रहार्थः । ३९

वाच्यान्तरं । यत् चिकीर्ष्यते, तेन अनेन परमसम्मतेन धर्म्मेण इष्टेन हितेन च भूयते । ३९ ॥

इस लिये मैं येह धर्म्म करना चाहती हूं, जिस में सब की सम्मति है और जो आप और के कुलका इष्ट और हितकारी है । ३९ ॥

(39.) Therefore what I desire to do is an act of merit approved by good men. It will prove beneficial to you as well as to your race.

**इष्टानि इति ।** अन्वय । इष्टानि अपत्यानि अपि, द्रव्याणि, प्रियाः सुहृदः, भार्य्या च अपि आपद्धर्म्मप्रमोचाय (इति) सतां मतं । ४०

व्याख्या । इष्टानि=प्रियाणि अत्यागार्हाणि इति भावः (१मा-विण) अथवा इष्टानि=यज्ञाः (प्रातिपदिकार्थे १मा) अपत्यानि अपि=कन्या-पुत्राः=अपि (प्रातिपदिकार्थे-१मा) द्रव्याणि=स्थावरास्थावरात्मक-वित्तानि (पूर्व्ववत्-१मा) प्रियाः=इष्टाः (१मा-विण) सुहृदः=आत्मीयाः बान्धवाः (पूर्व्ववत्-१मा) भार्य्या च अपि=प्रिया पत्नी अपि (पूर्व्ववत-१मा) एतानि आपद्धर्म्मप्रमोचाय=आपतन्ति अतर्कितं आगच्छन्ति या (आ-पद-धा+क्विप्) ता विपत्तयः तासां (६तत्) धर्म्माः स्वभावाः आपन्निवन्धनाः उपद्रवाः इति यावत् तेभ्यः (५तत्) प्रमोचः मोचनं तेषां निवारणं इत्यर्थः तस्मै विपन्निवारणार्थानि इत्यर्थः (तादर्थे-४र्थी) इति सतां=साधूनां (मतं इत्यस्य कर्त्तरि ६ष्ठी) मतं=सम्मतं आदृतं इत्यर्थः (मन-धा+वर्त्तमाने भावे-क्त, क्रिया) पुत्रादित्यागेन चेत् विपन्निवारणं भवेत् तत् लोकैः कर्त्तव्यं इति विदुषां परामर्शः इति सरलार्थः । ४० ॥

वाच्यान्तरं । साधवः मन्यन्ते । ४० ॥

साधुओं मत यह है कि, प्रिय कन्या पुत्र, द्रव्य प्यारे मित्र और भार्य्या आपद निवारण के लिए हैं । ४० ॥

(40.) It is said by the wise, that beloved children, things of value, dear friends and wife are for deliveriing one from danger.

आपदर्थे इति । अन्वय: । आपदर्थे धनं रक्षेत्, धनै: अपि दारान् रक्षेत्, दारै: अपि धनै: अपि आत्मानं सततं रक्षेत् । ४१ ॥

व्याख्या । आपदर्थे=आपद्यन्ते आपतन्ति ( आ-पद-धा+क्विप् ) इति आपद: विपत्तय: तासां ( ६तत् ) अर्थ: निवृत्ति: तस्मिन् आपन्निवारणार्थे ( अधि, अर्थोऽभिधेय वै वस्तु प्रयोजन निवृत्तिषु इत्यमर: ) धनं ( कर्म्म ) रक्षेत्=आगमिष्यन्त्या: आपद: निवारणाय अर्थं संगृह्णीयात् इत्यर्थ: (क्रिया) धनै: ( करण ) दारान् पत्नीं ( कर्म्म ) रक्षेत् क्रिया ) धनव्ययेन पत्न्या: आपन्निवारणं कुर्य्यात् इत्यर्थ: । दारै: अपि ( करण ) धनै: अपि (करण) आत्मानं=स्वं ( कर्म्म ) सततं=निरन्तरं ( अत्यन्तसंयोगे-२या ) रक्षेत् ( क्रिया, आत्मरक्षार्थं दारान् धनानि च परित्यजेत् इत्यर्थ:, सर्व्वत्र जन: इति शेष: । ४१ ॥

वाच्यान्तरं । धनं रक्षेत, दारा: रक्षेरन्, आत्मा रक्षेत । ४१ ॥

आप के लिए धन की, और धन देके स्त्रीकी रक्षा करनी चाहिए और अपनी रक्षा धन और पत्नी दोनो ही से करनी चाहिए । ४१ ॥

( 41. ) Wealth should be protected to provide against the hour of danger, one's wife should be proteeted by means of wealth and ono's own-self should be always protected by means of one's wife and wealth,

दृष्टा इति । अन्वय: । भार्य्या पुत्र:- धनं, गृहं एतत् सर्व्वं दृष्टादृष्टफलार्थं विधातव्यं, एष:, बुधानां निश्चय: । ४२ ॥

व्याख्या । भार्य्या=पत्नी ( कर्म्म-विश-१मा ) पुत्र:=तनय: ( कर्म्म-विश-१मा ) धनं=वित्तं ( कर्म्म-विश-१मा ) इदं ( कर्म्म-विश-१मा ) एतत् सर्व्वं = पत्न्यादिकं (कर्म्म-१मा) दृष्टादृष्टफलार्थं = दृष्टफलं ऐहिक-सुखं स्रक्चन्दनाद्युपभोग:, अदृष्टफलं परत्र स्वर्गलोके सुखादिभोग: दृष्टं च फलं ( कर्म्मधा ) तस्मै इदं (अर्थेन नित्यसमास: ) विधातव्यं=प्रयोक्तव्यं

पत्न्यादिकं सर्व्वं ऐहिकपारलौकिकसुखार्थं इत्यर्थः ( वि-धा+तव्य, क्रिया ) एषः ( १मा-विण ) बुधानां=पण्डितानां ( निश्चयः इत्यस्य कर्त्ता-६ष्ठी ) निश्चयः=सिद्धान्तः (निर चि-धा+अल, प्रातिपदिकार्थे १मा) ।४२॥

वाच्यान्तरं । भार्य्यां पुत्रं, धनं, गृहं एतत् सर्व्वं विदध्यात् । ४२ ॥

पण्डितों का सिद्धान्त यह है कि, भार्य्या, पुत्र, धन और घर सब इस लोक और परलोक के फल के लिए करना चाहिए । ४२ ॥

( 42. ) Wise men are of opinion that wife, son, wealth and house are necessary for good in this world as well as in the next.

**सः इति ।** अन्वयः । सः (त्वं) मया कार्य्यं कुरुष्व आत्मना आत्मानं तारय, आर्य्य मां अनुजानीहि, मे सुतौ परिपालय । ४३ ॥

व्याख्या । सः=दारवान् ( कर्त्ता-विण ) त्वं इति शेषः, ( कर्त्ता ) मया=पत्न्या ( करण ) कार्य्य=आत्मोद्धाररूपं कर्म्म ( कर्म्म ) कुरुष्व= विधेहि ( कृ-धा+लोट, क्रिया ), आत्मना=स्वप्रयत्नेन ( करण, आत्मा पुंसि स्वभावे च प्रयत्नमनसोऽपिच । धृतावपि मनीषायां शरीरब्रह्मणोरपि इति मेदिनी ) आत्मानं=स्वस्वरूपं ( कर्म्म ) तारय=रक्ष ( तृ-धा+णिच्-क्रिया ) आर्य्य=हे मान्य ( सम्बो ) मां ( कर्म्म ) अनुजानीहि=बकसमीपं गन्तुं अनुमन्यस्व ( अनु-ज्ञा-धा+लोट, क्रिया ) मे=मम ( सम्ब ) सुतौ= सुता च सुतः च ( एकद्वन्द्व ) कन्यां पुत्रं च ( कर्म्म-२या ) परिपालय= रक्ष ( परि-पा-धा+णिच्=पालि धा+लोट, क्रिया ) । ४३ ॥

वाच्यान्तरं । त्वया कार्य्यं क्रियतां, आत्मा तार्य्यतां, अहं अनुज्ञाये, सुतौ परिपाल्येतां । ४३ ॥

आप मुझ से काम लीजिए, आप अपने तईं रक्षा कीजिए, हे आर्य्य ! मेरी कन्या और पुत्र की रक्षा कीजिऐ । ४३ ॥

( 43. ) Therefore, have this done by me and (thus) deliver

yourself from danger by good sense. O respected husband! Give me permission. Take care of these two children yourself.

**एतत् इति ।** अन्वयः । त्वं एतत् सर्व्वं आत्मत्यागं गर्हितं च समीक्ष्य अद्य आत्मानं कुलं च इमौ दारकौ च आशु तारय । ४४ ॥

व्याख्या । त्वं ( कर्त्ता ) एतत् सर्व्वं=पूर्व्वोक्तं मत्कथनं ( कर्म्म ) समीक्ष्य=सम्यक् दृष्ट्वा विविच्य इत्यर्थः ( सम्-ईक्ष-धा+ल्यप् ) आत्मत्यागं आत्मनः ( इतत् ) त्यागः स्वप्राणविसर्ज्जनं तं च ( कर्म्म ) गर्हितं=निन्दितं ( कर्म्म-विश ) समीक्ष्य=विविच्य ( पूर्व्ववत् ल्यप् ) अद्य=अस्मिन् अहनि सम्प्रति इत्यर्थः ( अधि-अव्य ) आत्मानं=स्वं ( कर्म्म ) कुलं=निजवंशं ( कर्म्म ) इमौ ( सर्व्व विश ) दारकौ च= दारिका च दारकश्च ( एक-शेषद्वन्द्व ) कन्यापुत्रौ च ( कर्म्म-२या-२व ) आशु=शीघ्रं ( क्रिया-विश ) तारय=रक्ष ( तृ-धा+णिच्=तारि-धा=लोट्, क्रिया ) । ४४ ॥

वाख्यान्तरं । त्वया आत्मा, कुलं, दारकौ च तार्य्यन्तां । ४४ ॥

यह सब और अपने त्याग को बुरा विचार करके अपने तईं, कुल और इन लड़कों की रक्षा को । ४४ ॥

( 44. ) Considering all this and knowing it to be sinful to put an end to one"s own life, you should not delay to save yourself, your race and these two thildren.

**एवं इति ।** अन्वयः । ( हे ) भारत भर्त्ता तया एवं उक्तः ( सन् ) तां समालिङ्ग्य सभार्य्यः भृशदुःखितः ( सन् ) शनकैः वाष्पं मुमोच । ४५ ॥

व्याख्या । हे भारत=भरतवंशोद्भव जनमेजय ( सम्बो ) भर्त्ता= स्वामी सः गृहस्थः ब्राह्मणः इत्यर्थः ( कर्त्ता ) तया=पत्न्या (उक्तः इत्यस्य-कर्त्ता-३या ) एवं=इत्थं ( अधि ) उक्तः=कथितः सन् तस्यां इत्थं कथि-तायां इत्यर्थः ( वच-धा+कर्म्मणि-क्त ) तां=पत्नीं ( कर्म्म ) समालिङ्ग्य=

परिष्वज्य ( षस्ज्-आ-लिङ्गि-धा+ल्यप ) सभार्य्यः – भार्य्यया सह वर्त्तमानः ( बहुव्री ) पत्न्या सहितः इत्यर्थः ( कर्त्ता-विश ) भृशदुःखितः — अतीव दुःखप्राप्तः सन् ( दुःख-अ+इतच्, कर्त्ता-विश ) शनकैः=अल्पं अल्पं ( क्रिया विश-अव्य ) वाष्पं=नयनजलं ( कर्म्म ) मुमोच — तत्याज उभौ रुरुदतुः इत्यर्थः ( मुच-धा+लिट क्रिया ) । ४५ ॥

वाच्यान्तरं । उक्तेन भर्त्रा सभार्य्येण भृशदुःखितेन वाष्पं मुमुचे ।४५॥

हे जनमेजय ! पति उसकी यह बात सुन उस को आलिङ्गन कर बहुत दुखी हो भार्य्या के साथ हौले हौले आंसू टपकाने लगा । ४५ ॥

( 45. ) O Bharat ! Being thus spoken to by her and being very sorry the husband embraced the wife and shed silent tears with her.

**तयोः इति ।** अन्वयः । ततः कन्या अतिमात्रं दुःखितयोः तयोः वाक्यं निशम्य तु दुःखपरिताङ्गी सती तौ तावत् अभ्यभाषत । ४६ ॥

व्याख्या । ततः=मातृवाक्यानन्तरं ( ५मी+तस्, अव्य ) कन्या= तयोः पुत्री ( कर्त्ता-१मा ) अतिमात्रं=अत्यन्तं ( विशेषणस्य-विश ) दुःखितयोः=शोकाभिभूतयोः ( ६ष्ठी-विश ) तयोः=मातापित्रोः ( वाक्यं इत्यस्य कर्त्ता-६ष्ठी ) वाक्यं=विलापवचनं ( कर्म्म ) निशम्य तु=श्रुत्वा तु ( नि-शम-धा+ल्यप ) दुःखपरीताङ्गी=दुःखेन ( ३तत् ) परीतानि ( परि-इ-धा+क्त ) अङ्गानि यस्याः ( बहुव्री, स्वाङ्गात् ईप ) सा दुःखसन्तप्तहृदया सती इत्यर्थः ( कर्त्ता-विश ) तौ = सा च सः च ( एकशेषद्वन्द्व ) पितरौ च ( कर्म्म-२या ) तावत्=तदा ( अव्य ) अभ्यभाषत=उक्तवती ( अभि-भाष-धा+लङ्, क्रिया ) । ४६ ॥

वाच्यान्तरं । कन्यया दुःखपरीताङ्ग्या तौ अभ्यभाष्यतां । ४६ ॥

कन्या उन दुःखित पिता माता की बात सुन दुखसे व्यथित हृदय हो, उन से बोली । ४६ ॥

(46.) Then the daughter (of the Brahmin) very much pained to hear the conversation of her father and mother said with a sorrowful heart.

**किमेवं इति।** अन्वयः। भृशदुःखार्त्तौ (भवन्तौ) किं एवं अनाथवत् रोरुयताम्, मम अपि वाक्यं श्रूयतां श्रुत्वा च क्षमं क्रियतां। ४७॥

व्याख्या। भृशःदुखार्त्तौ=भृशं (सुप्सुपेति समासः) दुःखेन (३तत्) आर्त्तौ पीड़ितौ अतिदुःखितचित्तौ (कर्त्ता-विश) भवन्तौ इति शेषः (कर्त्ता) किं=किमर्थं (अव्य) एवं=इत्थं (अव्य) अनाथवत्=अनाथौ इव अशरणवत् (तुल्यार्थे-वति) रोरुयेतां=पुनः पुनः अतिशयेन वा रोदनं कुर्य्यातां (रु-धा+यङ्-रोरुय-धा+प्रश्ने-लोट्, क्रिया) मम अपि (वाक्यं इत्यस्य-कर्त्ता-६ष्ठी) वाक्यं=वचनं (कर्म्म-१मा) श्रूयतां= आकर्ण्यतां=(श्रु-धा+कर्म्मणि-लोट्, क्रिया) श्रुत्वा च=आकर्ण्य च (असमा) क्षमं=यत् अनुरूपं योग्यं (कर्म्म-१मा) तत् क्रियतां=अनुष्ठीयतां (कर्म्मणि-लोट, क्रिया) भवद्भ्यां इति कर्तृपदं ऊह्यं। ४७॥

वाच्यान्तरं। भृशदुःखार्त्ताभ्यां रोरुय्यतां, वाक्यं शृणुतां, क्षमं कुरुतां। ४७॥

क्यों अनाथ की तरह बहुत दुखी हो रोते हो, मेरी भी बात सुनलो ठीक होतो करो। ४७॥

(47.) Why do both of you weep with your hearts subdued with grief like persons who have none to help them? Hear what I say and then do what you may deem proper.

**त्यक्तव्यां इति।** अन्वयः। अहं धर्म्मतः युवयोः परित्याज्या, अत्र संशयः न, त्यक्तव्यां मां परित्यज्य एकया मया सर्व्वं त्राहि। ४८॥

व्याख्या। अहं=तव कुमारी कन्या (कर्म्म-१मा) धर्म्मतः=धर्म्म-शास्त्रानुसारेण (प्रकृत्यादिभ्यः इति ३या) युवयोः=युवाभ्यां माता-

पितृभ्यां (कर्त्तरि-६ष्ठी) परित्याज्या=अपरस्मै कस्मैचित् सम्प्रदेया (परि-त्यज-धा+कर्म्मणि-ण्यत्, क्रिया), अत्र=अस्मिन् विषये मत्सम्प्रदान-विषये इत्यर्थः (इदम्-श+७मी+त्रल, अधि अव्य) संशयः=सन्देहः (कर्त्ता) न=नास्ति, त्यक्तव्यां=अवश्यत्यजनीयां अपरस्मै देयां इत्यर्थः (त्यज-धा+कर्म्मणि-तव्य, कर्म्म-विण) मां (कर्म्म) परित्यज्य=वकराक्षसाय दत्त्वा (असमा) एकया=केवलया (करण-विण) मया (करण) सर्व्वं=समस्तं आत्मानं भार्य्यां पुत्रं च इत्यर्थः (कर्म्म) त्राहि=त्रायस्व रक्ष, त्वं इति शेषः (त्रै वा त्रा-धा+लट्, क्रिया परस्मैपदं आर्षं) त्राहि इति एकवचनेन पितरं प्रति उक्तिः एषा। ४८॥

वाच्यान्तरं। युवां मां त्यक्त्वा, सर्व्वं त्रायतां। ४८॥

धर्म्मानुसार किसी को मुझे देना है, इस में सन्देह नहीं, मुझ को दे मेरे इकले से सभों की रक्षा करो। ४८॥

(48.) It is certain that according to the Dharmasastras you shall have to part with me sometime or other, Therefore sacrificing me alone who am sure to be given away, do you save all.

**इत्यर्थं इति।** अन्वयः। अपत्यं मां तारयिष्यति इति इत्यर्थं इष्यते, तस्मिन् काले उपस्थिते (सति) मया प्लववत् तरध्वं। ४९॥

व्याख्या। अपत्यं=सन्ततिः (कर्त्ता) मां (कर्म्म) तारयिष्यति=उद्धरिष्यति (तृ-धा+णिच्+लृट्, क्रिया) इति=अस्मात् हेतोः (अव्य) इत्यर्थं=एतत्प्रयोजनार्थं (क्रिया-विण) इष्यते=काम्यते (क्रिया) पुरुषेण स्त्रिया च इति कर्त्तृपदं ऊह्यं। अस्मिन् काले=विपद्काले (अधि) उपस्थिते=आगते सति अधि-विण) मया=कन्यारूपोपायेन (करण) प्लववत्=प्लवेन उडुपेन इव (तुल्यार्थे-वति) तरध्वं=तरत (तॄ धा+लोट्, क्रिया आत्मनेपदमार्षं) युवां इति शेषः, मद्रूपया नौकया दुःखनदीपारं गच्छत इत्यर्थः। ४९॥

वाच्यान्तरं । अपत्येन मां तारयिष्यै, इत्यर्थं इच्छति तद्यतां ४९॥

लोग "मुझे त्राण करेगा यह चाहके पुत्रकी कामना करते हैं, वह समय आ पंहुचा है, मुझे भेला बना के पार उतर जाओ । ४९ ॥

( 49, ) People wish to have children in order that they may be protected by them. Therefore do you get across this (sea of) danger by making me ( as it were ) your raft.

इह इति । अन्वयः । ( हे ) भारत, पुत्रः इह वा उत वा प्रेत्य दुर्गात् तारयेत्, सर्व्वथा तारयेत् इति बुधैः पुत्रः उच्यते ५० ॥

व्याख्या । हे भारत=जनमेजय ( सम्बो, वैशम्पायनः जनमेजयं सम्बोधयति ) पुत्रः=तनयः (कर्त्ता) इह वा=अस्मिन् लोके ( अधि अव्य ) उतवा=अथवा ( अव्य ) प्रेत्य=परस्मिन् लोके ( अधि अव्य ) दुर्गात्= सङ्कटात् इह विपत्तेः परत्र नरकादेः इत्यर्थः ( अपा-५मी ) तारयेत्= पितरं उद्धरेत् ( क्रिया ) सर्व्वथा=सर्व्वप्रकारेण ( अव्य ) तारयेत्=रक्षेत् ( क्रिया ) इति=हेतोः ( अव्य ) बुधैः=पण्डितैः ( कर्त्ता-३या ) पुत्रः= पुन्नाम्न. नरकात् त्रायते यः सः ( पुत्-त्रै-धा+ड, कर्म्म १मा ) उच्यते= कथ्यते ( ब्रु-धा+कर्म्मणि लट्, क्रिया ) । ५० ॥

वाच्यान्तरं । पुत्रेण तार्य्येत, बुधाः पुत्रं ब्रुवन्ति । ५० ॥

इस लोक में विपद से और परलोक में नरक से रक्षा करेगा, इस लिए पुत्र को पण्डित "पुत्र" त्राण करने वाला कहते हैं । ५० ॥

( 50. ) The son delivers (the father ) from danger in this world and from hell in the next. Hence he is called *putra* or (deliverer) by the sages.

आकाङ्क्षन्ते इति । अन्वयः । पितामहाः मयि दौहित्रान् नित्यं आकाङ्क्षन्ते, ( अहं ) पितुः जीवितं रक्षन्ती ( सती ) तान् वै स्वयं परित्रास्ये । ५१ ॥

व्याख्या। पितामहाः=पितुः पितरः ( पितृ-श+डामहच् ) पितामहादयः पूर्व्वपुरुषाः इत्यर्थः ( कर्त्ता ) मयि ( अधि ) दौहित्रान्=दुहितुः अपत्यानि पुमांसः ( दुहितृ-श+अण) दुहितृतनयान् तन्नामलोकान् वा ( कर्म्म ) नित्यं=सर्व्वदा ( अत्यन्तसंयोगे-२या ) आकाङ्क्षन्ते=आकाङ्क्षन्ति वाञ्छन्ति ( क्रिया, आत्मनेपदं आर्षं ), दौहित्रदत्तपिण्डप्राप्तये च इत्यभिप्रायः। अहं ( कर्त्ता ) पितुः=जनकस्य तेषां पुत्रस्य तव इत्यर्थः ( सम्ब ) जीवनं ( कर्म्म ) रक्षन्ती=त्रायमाणा सती ( रक्ष-धा+शतृ, स्त्रियां ईप् ) तान्=पितामहादीन् पूर्व्वपुरुषान् ( कर्म्म ) वै ( पादपूरणेऽव्य ) स्वयं=आत्मना ( अव्य ) परित्रास्ये=उद्धरिष्यामि ( क्रिया ), स्वयं उपकारकरणक्षमे किं अन्यसुखापेक्षया इति भावः। ५१ ॥

वाच्यान्तरं। पितामहैः दौहित्राः आकाङ्क्षन्ते, जीवितं रक्षन्त्या मया ते परित्रास्यन्ते। ५१ ॥

पितामह मुझ में नित दौहित्रों की कामना करते है, मैं आप पिता की रक्षा करके उनकी रक्षा करूंगी। ५१ ॥

(51.) My ancestors hope to have grandchildren born of me, but by saving my father I shall prevent the discontinuance of *pinda* offering being presented to them.

**भ्राता इति।** अन्वयः। त्वयि अमुं लोकं गते मम अयं बालः भ्राता च अचिरेण एव कालेन विनश्येत् संशयः न हि। ५२ ॥

व्याख्या। त्वयि ( भावाधि ) अमुं लोकं=परलोकं ( कर्म्म ) गते=प्राप्ते सति मृते सति इत्यर्थः ( अधि-विण ) मम (सम्ब) अयं=पुरतः विचरन् ( सर्व्व-कर्त्ता-विण ), बालः=शिशुः अप्राप्तवयस्कः इत्यर्थः (कर्त्ता-विण ) भ्राता=सहोदरः ( कर्त्ता ) अचिरेण=अविलम्बेन ( ३या-विण, अव्य ) कालेन=समयेन अतिशीघ्रं इत्यर्थः ( अपवर्गे ३या ) विन-

श्येत् मृतः भवेत् ( वि-नश-धा+कर्त्तरि-विधि, लिङ् क्रिया, आत्मनेपदं आर्षं ) ततः पिण्डलोपः भवेत् इति भावः । ५२ ॥

व्याख्यान्तरं । अनेन बालेन भ्राता विनश्येत । ५२ ॥

मेरा भाइ बालक है, तुमारे परलोक को जाने पर थोड़े दिनों में वह नाश को प्राप्त होगा इस में शक नहीं । ५२ ॥

( 52. ) If you go to the next world this infant brother of mine shall surely perish in a few days.

**ताते इति ।** अन्वयः । ताते अपि स्वर्गं गते ( सती ) मम अनुजे विनष्टे च ( सति ) पितॄणां पिण्डः व्युच्छिद्येत्, तत् तेषां विप्रियं भवेत् । ५३ ॥

व्याख्या । ताते अपि=पितरि च ( भावाधि-७मी ) स्वर्गं ( गते इत्यस्य कर्म्म ) गते=मृते सति इत्यर्थः (गम-धा+कर्त्तरि-क्त ) मम ( सम्ब ) अनुजे=अनुजायते यः सः ( अनु-जन-धा+ड ) तस्मिन् कनिष्ठसहोदरे ( भावाधि-७मी ) नष्टे च=मृते च सति ( नश-धा+कर्त्तरि-क्त ) पितॄणां= तव पितॄणां मम पितामहादिपूर्व्वपुरुषाणां ( सम्ब ) पिण्डः ( कर्त्ता ) व्युच्छिद्येत्=विलुप्तः भवेत् ( वि-उत्-छिद-धा+विधि, क्रिया छिद्-धातुः रुधादित्वात् आदेशे गणकार्य्यस्य अनित्यत्वात् श्यन्, व्युच्छिद्येत् इति आर्ष. प्रयोगः व्युच्छिद्येत इति कर्म्मकर्त्तरि प्रयोगः व्याकरणसम्मतः ) तत्=तथा सति ( भावाधि-अव्य ) तेषां=पितॄणां ( सम्ब ) अप्रियं=अहितं ( कर्त्ता ) भवेत् (क्रिया) पिण्डलोपात् महत् अनिष्टं संघटेत इत्यर्थः । ५३ ॥

व्याख्यान्तरं । पिण्डेन व्युच्छिद्येत, महता अनिष्टेन भूयते । ५३ ॥

पिताके स्वर्गको जाने और भ्राता के विनाश प्राप्त होने पर पितृ-पुरुषों का पिण्ड विच्छेद होगा, वह उनके लिए प्यारा नहीं है । ५३ ॥

( 53. ) If my father go to heaven and my younger brother perish, there will be an end to all sacred offerings to my ancestors. This will do them harm.

**पिता इति।** अन्वय:। पित्रा तथा मात्रा भ्रात्रा च त्यक्ता अतथोचिता अहं दुःखात् दुःखतरं प्राप्य असंशयं म्रियेयम्। ५४॥

व्याख्या। पित्रा=जनकेन रक्षकेण इति भाव:। (त्यक्ता इत्यस्य-(कर्त्तो-३या) तथा मात्रा=जनन्या च हमय्या इति भाव: (पूर्व्ववत्-३या) भ्राता च=सहोदरेण सहायकेन इति भाव: (पूर्व्ववत् ३या) त्यक्ता= विहीना (त्यज-धा+कर्म्मणि-क्त, विण) अतथोचिता=तथा तादृशस्य मरणस्य उचिता तथोचिता सा न भवति इति, यदा तथा तस्यां माता-पितृभ्रातृरहितदशायां इत्यर्थ: उचिता अभ्यस्ता तथोचिता सा न भवति इति, (कर्त्तो-विण) अहं (कर्त्ता) दुःखात् (अपा-५मी) दुःखतरं= अतीव कष्टकरं (प्राप्य इत्यस्य कर्म्म) प्राप्य=लब्ध्वा युष्मद्विहीना प्रतिक्षणं नवं नवं दुःखाभिभवं अनुभूय इत्यर्थ: (प्र-आप-धा+ल्यप्, अव्य) असंशयं= नास्ति संशय: (सम्-शी-धा=अल) यस्मिन् (बहुव्री) तत् यथा तथा नि:सन्देहं (क्रिया-विण) म्रियेयं=म्रियेय मृत्युं प्राप्नुयाम् (मृ-धा+ विधि, ३पु-१व, क्रिया परस्मैपदं आर्षं)। ५४॥

वाच्यान्तरं। त्यक्तया अतथोचितया मया म्रियेत। ५४॥

पिता, माता और भ्राता के मुझको छोड़ देने पर मैं इसमें सन्देह नहीं कि, भारी दुःख पाके मर जाऊंगी, और मैं एसी मौत के योग्य नहीं हूं।। ५४॥

(54.) If my father, mother and brother leave me I shall be plunged into a succession of misfortunes to which I am yet a stranger and shall perish at last.

**आत्मा इति।** अन्वय:। पुत्र: आत्मा, भार्य्या सखा, दुहिता तु कृच्छ्रं किल स (त्वं) आत्मानं कृच्छ्रात् मोचय मां च धर्म्मे नियोजय। ५५॥

व्याख्या। पुत्र:=तनय: (प्रातिपदिकार्थे-१मा) आत्मा (पुत्र:

इत्यस्य-विधेय-विण ) आत्मा वै पुत्रनामासि इति श्रुतिः ) भार्य्या=पत्नी ( पूर्ब्बवत्-१मा ) सखा समप्राणः बन्धुः ( भार्य्या इत्यस्य विधेय-विण, अत्यागसहनं मित्रं समप्राणः सखा मतः ) दुहिता=कन्या ( पूर्ब्बवत्-१मा ) तु=किन्तु ( अव्य ) कृच्छ्रं=कष्टं ( दुहिता इत्यस्य विधेय-विण ) किल—इति प्रसिद्धे, अव्य ) स=कन्यारूपकृच्छ्रग्रस्तः ( सर्ब्ब, कर्त्ता-विण ) त्वं इति शेषः ( कर्त्ता ) आत्मानं ( कर्म्म ) कृच्छ्रात्=कन्यारूपात् कष्टात् अथवा उपस्थितात् वकराक्षसरूपकष्टात् ( अपा-५मी ) मोचय=मुक्तं कुरु ( मुच-धा+णिच्-मोचि धा+लोट, क्रिया ) कण्टकेन कण्टकोद्धरणवत् कृच्छ्ररूपया मया राक्षसहस्तात् आत्मानं रक्ष इत्यर्थः, मांच ( कर्म्म-२या ) धर्म्मे=युष्मज्जीवनरक्षणरूपपुण्यकर्म्मणि ( आंध ) नियोजय=नियुक्तां कुरु ( नि-युज-धा+णिच्=योजि-धा+लोट, क्रिया ) । ५५ ॥

वाच्यान्तरं । आत्मा मोच्यतां, अहं नियोज्ये । ५५ ॥

पुत्र आत्मा है, भार्य्या सखा है, और कन्या दुखदेनेवाली है, आप अपने तईं इस दुख से छुटाओ, और मुझे धर्म्मके काम में लगाओ ।५५॥

(55.) To a man his son is but his own self and his wife is his companion but his daughter is only a burden. Do you, therefore, save yourself by sacrificing a daughter who is only a source of trouble to you; and allow me to do a righteous act.

**अन्यथा इति ।** अन्वयः । ( हे ) तात अन्यथा वाला कृपणा ( अहं ) त्वया विहीना ( सती ) यत्र क्वचन गामिनी सदा कृपणा भविष्यामि । ५६ ॥

व्याख्या । तात=हे पितः ( सम्बो ) अन्यथा=यदि मां न प्रेरयसि ( अव्य ) वाला=वालिका ( कर्त्ता-विण ) अतएव कृपणा=स्वभावात् दीना ( कर्त्ता-विण ) अहं इति शेषः ( कर्त्ता ) त्वया=पित्रा ( विहीना इत्यस्य

कर्त्ता-३या ) विहीना=विरहिता सती ( वि-हा-धा+कर्म्मणि-क्त ) यत्र क्वचन=यस्मिन् कस्मिन् अपि स्थाने ( अधि-अव्य ) गामिनी=गमन्ती ( कर्त्ता-विण ) सदा कृपणा=शोचनीया ( कर्त्ता-विण ) भविष्यामि ॥५६॥

वाच्यान्तरं। बालया कृपणया ( मया ) विहीनया ( सत्या ) गामिन्या कृपणया भविष्यते। ५६ ॥

नहीं तो, हे पिता स्वभावतः दीन बालिका मैं आप से छुट जाने पर इधर उधर घुमती फिरूंगी, और सदा दुखी रहूंगी। ५६ ॥

( 56 ) O father! If you die I shall be a helpless and poor girl thrown adrift into the world and shall be an object of pity to others.

**अथवा इति।** अन्वयः। अथवा अहं अस्य कुलस्य विमोचनं करिष्यामि, सुदुष्करं कर्म्म कृत्वा फलसंस्था भविष्यामि। ५७ ॥

व्याख्या। अथवा=किम्वा ( अव्य ) अहं ( कर्त्ता ) अस्य=( सर्व्व-षष्ठी-विण ) कुलस्य=वंशस्य मम पितृवंशस्य इत्यर्थः ( विमोचनं इत्यस्य कर्म्म-६ष्ठी ) विमोचनं=राक्षसात् मुक्तिं ( कर्म्म ) करिष्यामि ( क्रिया ) सुदुष्करं=सुदुःखेन क्रियते यत् ( सुदुर-कृ-धा+कर्म्मणि-खल ), तत् दुःसाध्यं ( कर्म्म-विण) कर्म्म=कार्य्यं जीवनपरित्यागरूपं इत्यर्थः ( कर्म्म-२या ) कृत्वा ( असमा ) फलसंस्था=फला सफला संस्था मरणं यस्याः (बहुव्री) सा प्रशंसितमरणा इत्यर्थः अथवा फले सिद्धौ संस्था स्थितिः यस्याः ( बहुव्री ) सा कृतार्था इत्यर्थः भविष्यामि ( क्रिया )। ५७ ॥

वाच्यान्तरं। मया विमोचनं करिष्यते, फलसंस्थया भविष्यते।५७ ॥

अथवा मैं इस कुल को दुःख से छुटाऊंगी, और यह दुष्कर काम-कर अपनी मौत को सफल करूंगी। ५७ ॥

( 57. ) Or I shall save this family and shall do a difficult act by dying so that I shall not die in vain.

**तत् इति।** अन्वयः। ( हे ) सत्तम तत् अस्मदर्थं धर्म्मार्थं

प्रसवार्थं च आत्मानं परिरचस्व, त्यक्तव्यां मां सन्तज, अवश्यकरणीये च अयं कालः त्वां मा अत्यागात् । ५८ ॥

व्याख्या । सत्तम=अयं एषां अतिशयेन सन् ( सत्-शब्द+तमप् ) हे साधुश्रेष्ठ ( सम्बो ) तत्=तस्मात् तन्मरणे महानिष्टापातस्य अवश्यम्भावित्वात् ( अव्य ) अस्मदर्थं=अस्मभ्यं इदं अस्मत्कापर्ण्यादित्यागार्थं ( अर्थेन नित्यसमासः ) धर्म्मार्थं=धर्म्माय इदं त्वन्मरणे अस्माकं धर्म्मसंशः भवेत् तन्निवारणार्थं अथवा आत्मरचणधर्म्मार्थं ( शरीरमाद्यं खलु धर्म्मसाधनं इति भावः पूर्ववत् समासः ) प्रसवार्थं=प्रसूयते इति प्रसवः सन्तानः तस्मै इदं वंशरचार्थं इत्यर्थः ( पूर्ववत् समासः ) आत्मानं=स्वं ( कर्म्म-२या ) परिरचस्व=परिरच=( क्रिया, आत्मनेपदं आर्षं ) त्यक्तव्यां=अवश्यपरित्याज्यां ( कर्म्म-विश ) मां ( कर्म्म ) सन्त्यज=वकसमीपे प्रेषय ( सम्-त्यज-धा+लोट्, क्रिया ), अवश्यकरणीये=अवश्यंकरणीयं ( सुप्-सुपेति समासः ) लङ्घितुं अशक्ये वकसमीपे प्रेषणे ( अधि ) अयं=उपस्थितः ( सर्व्व-कर्त्ता-विश) कालः=समयः ( कर्त्ता ) त्वं =भवन्तं ( कर्म्म-२या ) मा अत्यागात्=न अतिगात् अतिक्रम्य गच्छतु ( अति-इ धा+लुङ्, क्रिया, अड़ागमः आर्षः मा योगे अड़ागमनिषेधात् । ५८ ॥

वाच्यान्तरं । आत्मा परिरच्यतां, त्यक्तव्या अहं सन्तज्यै, कालेन त्वं मा अत्यधिष्व। ५८ ॥

इस लिए हे साधुश्रेष्ठ मेरे, धर्म्म और कुल की रचा के वास्ते अपने आपे की रचा करो और त्याग के योग्य मुझे छोड़ो इस अवश्य कर्त्तव्य काम में आप का काल योंही न जाए । ५८ ॥

(58.) Therefore, O best of men, do you for my own good, for the sake of religion and for the benefit of your own race, save yourself and sacrifice me who must be given away (sometime or other). Delay not to do what ought to be done.

**किं इति।** अन्वयः। अतः परमं किंनु दुःखं, यत् त्वयि स्वर्गते ( सति ) वयं परात् अन्नं याचमानाः श्ववत् परिधावेमहि। ५६ ॥

व्याख्या। अतः=अस्मात् वक्ष्यमाणदुःखात् ( यस्मादधिकं इत्यादिना ५मी ) परमं=उत्कृष्टं अधिकं ( कर्त्ता-विण ) किंनु दुःखं, ( कर्त्ता ) अस्तीति शेषः, अस्मात् अधिकं कष्टकरं न किञ्चित् दुःखं विद्यते इत्यर्थः, यत् ( क्रिया-विण ) त्वयि=भवति पितरि ( भावाधि ७मी ) स्वर्गते=स्वः स्वर्गं ( २तत् ) गते मृते सति इत्यर्थः ( अधि-विण ) वयं ( कर्त्ता-१मा-३व ) परात्=परस्मात् जनात् ( अपा-५मी ) अन्नं=अद्यते यत् ( अद-धा+कर्मणि-क्त ) तत् उदरान्नं ( कर्म ) याचमानाः=भिक्षमाणा देहि देहि इति प्रार्थयमानाः सत्यः इत्यर्थः ( याच-धा+कर्त्तरि-शानच, कर्त्ता-विण ) श्ववत्=श्वान इव कुकुरा इव (श्वन्-श+वति अव्य) परिधावेमहि= द्वारि द्वारि भ्रमेम ( परि-धाव-धा+विधि-३पु-३व, क्रिया ) असति त्वयि उदरपूरणार्थं यत् वयं कुकुरवत् इतस्ततः पर्य्यटिष्यामः अस्मात् परं किंनु दुःखं स्यात् इति विशदार्थः। ५६ ॥

वाच्यान्तरं। परमेण दुःखेन भूयते अस्माभिः याचमानाभिः परिधाव्येत। ५६ ॥

इस से बढके दुख की बात क्या कि, आप के स्वर्गलोक को जाने पर हम कुत्ते की तरह घरों के द्वार पर अन्न मंगती फिरूंगी। ५६॥

(59.) What can be a greater misfortune to us than beg for bread like dogs, when you are gone to heaven,

**त्वयि इति।** अन्वयः। सबान्धवे त्वयि तु अस्मात् क्लेशात् अरोगे निर्मुक्ते ( सति ) ( अहं ) लोके अमृता इव सती सुखान्विता भविष्यामि। ६० ॥

व्याख्या। सबान्धवे=बान्धवैः स्वजनैः सह वर्त्तमानः (बहुव्री) तस्मिन् स्त्रीपुत्रादिभिः सह इत्यर्थः ( अधि-विण ) त्वयि तु=भवति ( भावाधि-

७मी ) अस्मात् क्लेशात्=उपस्थितायाः विपत्तेः ( अपा-५मी ) अरोगे= नास्ति रोगः यस्य ( बहुव्री ) तस्मिन् अक्षतशरीरे इत्यर्थः ( अधि-विश ) निर्मुक्ते=मुक्तिं प्राप्ते सति ( निर-मुच-धा+कर्त्तरि-क्त ) अहं इति शेषः ( कर्त्ता ) लोके=इहलोके ( अधि ) अमृता इव सती=देवता इव सती ( इवेन अलुकसमासः ) सुखान्विता=सुखेन ( इसत् ) अन्विता युक्ता ( अनु-इ-धा+क्त ) सुखिनी ( कर्त्ता-विश ) भविष्यामि (क्रिया), तादृश-सत्कर्म्मजनितपुण्योपपाद्यं सुखं अनुभवन्ती चिरं स्थास्यामि इत्यर्थः, अथवा इव ( वाक्यालङ्कारे-अव्य ) अमृता=स्वदेहार्पणेन सवान्धवस्य पितुः विपन्नाशनिवन्धनायाः कीर्त्तेः सत्वात् मृता अपि चिरं जीवन्ती सती सुखा-न्विता भविष्यामि । ६० ॥

वाच्यान्तरं । ( मया) अमृतया इव सुखान्वितया भविष्यते । ६० ॥

और आप अपने बान्धव के साथ इस दुख से बचे और निरोगे रहोगे तो, बिन मरे हुए की तरह लोक में सुखी होऊंगी । ६० ॥

( 60. ) But if you can, with your dear ones, get out unscathed from this difficulty, I shall be immortal on earth and happy in my next life.

**एवं इति ।** अन्वयः । तस्याः एवं बहुविधं परिदेवितं निशम्य पिता माता सा कन्या च एव त्रयः प्ररुरुदुः । ६१ ॥

व्याख्या । तस्याः=कन्यायाः ( परिदेवितं इत्यस्य-कर्त्ता-६ष्ठी) एवं= उक्तप्रकारं ( अव्य ) बहुविधं=नानाप्रकारं ( कर्म्म-विश ) परिदेवितं= विलापं ( परि-देव-धा+भावे-क्त, कर्म्म-२या ) निशम्य=श्रुत्वा ( नि-शम-धा+ल्यप् ) पिता, माता, सा कन्या च एव (कर्त्ता-परिचारकविश ) त्रयः ( कर्त्ता, त्रि-श+१मा-३व, पितृप्राधान्यात् पुंस्त्वं ) प्ररुरुदुः=उच्चैः चक्रन्दुः ( प्र-रुद धा+लिट्, क्रिया ) । ६१ ॥

वाच्यान्तरं। पित्रा मात्रा तया कन्यया च त्रिभिः प्ररुरुदे। ६१ ॥

इस ढब के उस के बहुत भांत के बिलाप को सुन पिता माता और वह कन्या तीनों रोने लगीं। ६१ ॥

( 61. ) At these various lamentations of their daughter the father and mother wept together ; their daughter too, wept with them.

ततः इति। अन्वयः। ततः सुतः सर्व्वान् प्ररुदितान् निशम्य तदा उत्फुल्लनयनः अथ कलं अव्यक्तं अब्रवीत्। प्रहसन् इव तान् सर्व्वान् एकैकं उपसर्पति। ६२ ॥

व्याख्या। ततः=तेषां रोदनानन्तरं ( ५मी+तस्, अव्य ) सुतः= शिशुपुत्रः ( कर्त्ता ) सर्व्वान्=पित्रादीन् ( कर्म्म ) प्ररुदितान्=उच्चैः क्रन्दनं कुर्व्वतः ( प्र-रुद-धा+क्त, २या-३व ) निशम्य=श्रुत्वा तेषां सर्व्वेषां रोदनं श्रुत्वा इत्यर्थः ( नि-शम-धा+ल्यप् ) तदा=तस्मिन् काले तेषां दुःखसमये ऽपि इत्यर्थः ( अधि-अव्य ) उत्फुल्ले विकसिते विस्फारिते इत्यर्थः ( उत् फुल्ल-धा+क्त ) नयने यस्य ( बहुव्री ) तादृशः सन् ( कर्त्तृ-विश ) कलं=मनोहरं ( क्रिया-विश ) अव्यक्तं=अस्फुटं ( क्रिया-विश ) अब्रवीत्=अकथयत् ( ब्रू-धा+लङ्, क्रिया ) अत्र "ध्वनौ तु मधुरास्फुटे कलं" इति अमरमते पुनरुक्तिदोषः सोढव्यः प्रहसन् ( प्र-हस-धा+शतृ ) इव ( वाक्यालङ्कारे अव्य ) तान् सर्व्वान्=पित्रादीन् ( कर्म्म ) एकैकं=प्रत्येकं ( वीप्सायां द्विर्वचनं, एकं बहुव्रीहिवत् इति समासवद्भावः ) उपसर्पति=उपसर्पन् तेषां समीपं गच्छति ( उप-सृप-धा+लट, क्रिया लट प्रयोगः आर्षः )। ६२ ॥

वाच्यान्तरं। सुतेन उत्फुल्लनयनेन औच्यत, प्रहसता ते सर्व्वे उपसृप्यन्त। ६२ ॥

उन सभों को रोते हुए देख वह बालक आंखों को फुला के अस्फुट बातें करने लगा और हंसता हुआ उनके हर एक के पास गया । ६२ ॥

( 62. ) Then the sprightly-eyed boy seeing all of them weep, lisped out these sweet words. With a smile he approached every one of them.

ततः सः इति । अन्वयः । ततः सः तृणं आदाय प्रहृष्टः पुनः अब्रवीत् अहं अनेन पुरुषादकं राक्षसं हनिष्यामि । ६३ ॥

व्याख्या । ततः=अनन्तरं ( ५मी+तस्, अव्य ) सः=बालकः ( कर्त्ता ) तृणं=एकं शुष्ककुशं ( कर्म्म ) आदाय=गृहीत्वा ( आ-दा-ल्यप् ) प्रहृष्टः=मुखमण्डले प्रहर्षचिह्नं प्रकाशयन् सन् ( प्र-हृष धा+क्त, कर्त्तृविश ) पुनः=पुनरपि ( अव्य ) अब्रवीत्=मधुरास्फुटं उवाच ( क्रिया ) किं उवाच इत्याह अहं इति । अहं ( कर्त्ता ) अनेन=करस्थेन तृणेन ( करण ) पुरुषादकं—अत्ति यः सः ( अद-धा+ण्वुल ) अदकः भक्षकः पुरुषस्य ( ६तत् ) अदकः पुरुषादकः अथवा अत्ति यः सः अदः भक्षकः ( अद-धा+अच् ) पुरुषस्य ( ६तत् ) अदः पुरुषादः कुत्सितः पुरुषादः पुरुषादकः ( कुत्सितायां क ) अथवा अद्यते यत् तत् अदं अन्नं ( अद-धा+कर्म्मणि-अण् ) पुरुषः अदं यस्य (बहुव्रीहौ कुत्सायां क) पुरुषादकः तं नरमांसभक्षकं ( कर्म्म-विश ) राक्षसं=बकराक्षसं ( कर्म्म ) हनिष्यामि=विनाशयिष्यामि ( हन्-धा+लृट, क्रिया ) । ६३ ॥

वाच्यान्तरं । तेन प्रहृष्टेन औच्यत, मया पुरुषादकः राक्षसः हनिष्यते । ६३ ॥

और एक तृणको ले के आनन्दित हो फिर बोला कि, मैं इस से उस पुरुषों के खानेवाले राक्षस को मारूंगा । ६३ ॥

( 63. ) Then he with a cheerful countenance took up a piece of straw and again said,—with this I shall kill that man-eating Rakshasa.

**तथा इति।** अन्वयः। तथा दुःखेन परीतानां अपि तेषां बालस्य तत् अव्यक्तं वाक्यं निशम्य महान् हर्षः समभवत्। ६४॥

व्याख्या। तथा=तादृशेन (अव्य) दुःखेन=विषादेन (परीतानां इत्यस्य कर्त्ता-३या) परीतानां अपि=व्याप्तानां अपि दुःखसन्तप्तहृदयानां अपि इत्यर्थः (परि-इ-धा+क्त), तेषां=पित्रादीनां (हर्षः इत्यस्य कर्त्ता-६ष्ठी) बालस्य=शिशोः (वाक्यं इत्यस्य कर्त्ता-६ष्ठी) तत्=पूर्व्वोक्तं (कर्म्म विण) अव्यक्तं=अस्फुटं (कर्म्म-विण) वाक्यं=वचनं (कर्म्म, वच धा=ण्यत्) निशम्य=श्रुत्वा स्थितानां इति शेषः, महान्=विपुलः (कर्त्ता-विण) हर्षः=आह्लादः (कर्त्ता) समभवत्=जातः (क्रिया)।६४॥

वह इस ढब से दुखी थे पर तबभी उस बालक की अस्फुट बातों को सुन के उन को बड़ा हर्ष हुआ। ६४॥

(64.) They had been overpowered with grief, but the lisping accents of the boy made them very glad.

**अयं इति।** अन्वयः। कुन्ती अयं कालः इति ज्ञात्वा समुपसृत्य गतासून् तान् अमृतेन जीवन्ती इव इदं अब्रवीत्। ६५॥

व्याख्या। कुन्ती=पृथा युधिष्ठिरमाता (कर्त्ता) अयं कालः अयं एव समयः निजाभिप्रायज्ञापनार्थं तेषां समीपे गमनस्य साधुतरः अवसरः इत्यर्थः (इति योगे १मा) इति (कर्म्म-अव्य) ज्ञात्वा=मत्वा अधुना एते प्रहृष्टाः अस्मिन् एव अवसरे अहं उपसर्पामि इति सम्प्रधार्य्य इत्यर्थः (ज्ञा-धा+क्त्वा) समुपसृत्य=समीपं गत्वा (सम्-उप-सृ-धा+ल्यप्) गतासून्=गताः गतप्रायाः असवः प्राणाः येषां (बहुव्री) तान्=ब्राह्मणादीन् (सर्व्व-कर्म्म) अमृतेन वक्ष्यमाणवाक्यामृतेन इत्यर्थः (करण) जीवयन्ती इव=पुनः उज्जीवितान् कुर्व्वती इव (जीव-धा+णिच्+शतृ, स्त्रियां ईप्, इव इति उत्प्रेक्षा, अव्य), इदं=वक्ष्यमाणं वचनं (कर्म्म) अब्रवीत् उक्तवती (क्रिया), मृतं वारयति इति अमृतं, कुन्तीवचनं अपि

आश्वत्थादीनां मृतं ( मृत्यु ) वारयामास अतः तदवधि अमृतत्वारोपः ।६५॥

वाच्यान्तरं । कुन्त्या जीवयन्त्या इदं उच्यते । ६५ ॥

कुन्ती यही ठीक समय है, जान उन के पास जा मरे हुओं को अमृत से जिलाती हुई सी यह बोल उठी । ६५ ॥

कुन्ती ( कर्त्ता ) उवाच ( वच-धा+लिट्, क्रिया ) [ वाच्यान्तरं कुन्त्या ऊचे ] ।

( 65, ) Kunti thinking it a fit time ( for addressing them ) came up and, as if bringing the dead to life with nectar, said.

कुतो मूलं इति । अन्वयः । इदं दुःखं कुतोमूलं तत्त्वतः ज्ञातुं इच्छामि, विदित्वा अपकर्षितुं चेत् शक्यं अपकर्षेयं अपि । ६६ ॥

व्याख्या । इदं दुःखं=युष्माकं क्लेशः ( कर्त्ता ) कुतोमूलं= कस्मात् उत्थितं मूलं यस्य ( मयूरव्यंसकादित्वात् समासः ) किंनिबन्धनं इति यावत् ( कर्त्ता-विध ) भवतीति शेषः । अथवा कुतः मूलति उत्पद्यते इति कुतोमूलं, ( मूल-धा+पचादित्वात्-अच्, तत्पुरुषे कृति बहुलं इति अलुक ) तत्त्वतः=तत्त्वेन स्वरूपतः ( तया+तस्, अव्य) ज्ञातुं= वेदितुं ( असमा ) इच्छामि=अभिलषामि ( इष-धा+लट्, क्रिया ) विदित्वा=ज्ञात्वा तत् दुःखनिदानमिति शेषः, अपकर्षितुं=अपनेतुं ( अप-कृष-धा+तुमुन् आर्षप्रयोगः, अपक्रष्टुं अपकर्ष्टुं वा साधु ) चेत्=यदि ( अव्य) शक्यं=साध्यं यदि तत् दुःखं निवारयितुं शक्नोमि इत्यर्थः ( शक-धा+कर्म्मणि-यत्, क्रिया ) तर्हि अपकर्षेयं अपि=निवारयेयं च, अहं इति तत् इति ऊह्यं ( अप-कृ-धा+विधि-१पु-१व, क्रिया ), न केवलं श्रोतुं इच्छामि, ननु एतत् शक्यनिवारणं चेत् तर्हि श्रुत्वा तत् निवारयितुं अपि यतिष्ये इति अपेः अर्थः । ६६ ॥

वाच्यान्तरं । अनेन कुतोमूलेन भूयते, मया इष्यते, चेत् शक्यामि । अपकृष्येयम् । ६६ ॥

कुन्ती ने कहा कि—इस दु:ख की जड़ क्या है यथार्थ जानना चाहती हूं, जानके जो दूर किए जाने योग्य हो तो दूर करूंगी। ६६॥

ब्राह्मण: (कर्ता) उवाच (क्रिया)। [वाच्यान्तरं ब्राह्मणेन ऊचे।

(66.) What is the cause of this sorrow? I wish to know what has happened. I shall then do what is needful to remedy it, if that is remediable.

उपपन्नं इति। अन्वय:। (हे) तपोधने यत् ब्रवीषि, एतत सतां उपपन्नं, इदं दु:खं तु मानुषेण व्यपोहितुं न शक्यं। ६७॥

व्याख्या। तपोधने=तप: एव धनं यस्या: (बहुव्री) तत्सम्बोधने हे तापसि (सम्बो, ब्राह्मणेन तथा विदितत्वात् कुन्त्या: ईदृशसम्बोधनं) त्वं इति शेष: (कर्त्ता) यत्=वाक्यं (कर्म्म-२या) ब्रवीषि=कथयसि (ब्रू-धा+लट्-मपु-१व, क्रिया) एतत् (कर्म्म-१मा) सतां=साधूनां (उपपन्नं इत्यस्य कर्त्ता-६ष्ठी) उपपन्नं=न्याय्यं (उप-पद्-धा+वर्त्तमाने-क्त) पर-दु:खपीड़ितानां भवादृशां सतां यत् वक्तुं उचितं तत् त्वया उक्तं इत्यर्थ:, इदं=अस्मदीयं दु:खं (कर्म्म-१मा) तु (अव्य) मानुषेण=नरेण (कर्त्ता-३या) व्यपोहितुं=नाशयितुं निरसितुं इति यावत् (वि-अप-ऊह+तुमुन्) न शक्यं=न साध्यं, यन्मूलं अस्मदीयं दु:खं स: हि राक्षस:, तन्निधनं नहि मर्त्येन मानुषेण साध्यं इति भाव:। ६७॥

वाच्यान्तरं। (त्वया) यत् उच्यते, सन्त: एतत् उपपन्नवन्त:, मानुष: न शक्ष्यति। ६७॥

ब्राह्मण ने कहा—हे तपोधने जो कहती हो वह साधुओं के लिए ठीक है, पर यह दु:ख मनुष्य के दूर करने योग्य नहीं हैं। ६७॥

(67,) The Brahman said; O anchoritess! Your words are worthy of a good soul, but it is beyond man's power to remove the cause of our grief.

समीपे इति। अन्वयः। अस्य जनपदस्य पुरस्य च ईशः महाबलः बकः राक्षसः अस्य नगरस्य समीपे वसति। ६८॥

व्याख्या। अस्य (सर्व्व-सम्ब-विश) जनपदस्य=देशस्य (सम्ब) पुरस्य च=नगरस्य एकचक्रायाः च (सम्ब) ईशः=ईष्टे शास्ति यः (ईश-धा+अच्) सः प्रभुः (कर्त्ता-विश) महाबलः=महत् बलं यस्य (बहुव्री) सः अतिबलवान् (कर्त्ता-विश) बकः=बकनामा (कर्त्ता-विश) राक्षसः=निशाचरः (कर्त्ता) अस्य नगरस्य=एकचक्रायाः (सम्ब) समीपे=उपकण्ठे इत्यर्थः अधि) वसति (क्रिया)। ६८॥

वाच्यान्तरं। ईशेन महाबलेन बकेन राक्षसेन उष्यते। ६८॥

इस नगर के पास बक नाम राक्षस रहता है। वह महाबल इस देश और नगर का मालिक है। ६८॥

(68.) There dwells a very powerful *Rakshasa* named Baka near this city. He is the lord of this city and province.

पुष्ट इति। अन्वयः। मानुषमांसेन पुष्टः, दुर्बुद्धिः, पुरुषादकः बली असुरराट् इमं जनपदं नगरं च एव रक्षोबलसमन्वितं देशं च नित्यं रक्षति, तत्कृते परचक्रात् च भूतेभ्यः च नः भयं न। ६९७०॥

व्याख्या। मानुषमांसेन=मानुषाणां (६तत्) मांसं तेन नरमांसेन (पुष्टः इत्यस्य कर्त्ता) पुष्टः=पुष्टिं गतः स्थूलः इत्यर्थः (पुष-धा+कर्म्मणि-क्त, विश) दुर्बुद्धि=दुः दुष्टा बुद्धिः यस्य (बहुव्री) सः दुर्म्मतिः (कर्त्ता-विश) बलवान् (कर्त्ताविश) असुरराट्=राजते शोभते यः (राज-धा+क्किप्) सः राट् असुराणां (६तत्) राट् राजा बकराक्षसः (कर्त्ता) इमं जनपदं (कर्म्म) नगरं च (कर्म्म) रक्षोबलसमन्वितं=रक्षसां राक्षसानां (६तत्) बलं सैन्यं तेन (३तत्) समन्वितं व्याप्तं (सम अनु इ धा+क्त, कर्म्म-विश) देशं (कर्म्म) नित्यं=सर्व्वदा (अत्यन्त-संयोगे-२या) रक्षति=त्रायते (क्रिया। तत्कृते=तस्य कृते तेन निमित्त-

रूपेण इत्यर्थः (अव्य) परचक्रात् च=परेषां शत्रूणां (६तत्) चक्रं राज्यं तस्मात् (अपा·५मी) भूतेभ्यः च=अन्येभ्यः देवयोनिभ्यः च (अपा·५मी) नः=अस्माकं (भयं इत्यस्य कर्त्ता-षष्ठी) भयं न=त्रासः न अस्ति इति शेषः। ६९। ७०॥

व्याख्यान्तरं। पुष्टेन दुर्बुद्धिना पुरुषादकेन वलिना असुरराज्ञा अयं जनपदः, नगरं, रक्षोवलसमन्वितः देशः च रक्ष्यते, भयेन न भूयते।६९।७०

वह वली नरभक्षक दुष्टवुद्धि राक्षसराज मनुष्य के मांस से पुष्ट होके इस नगर और देश की रक्षा राक्षस की सेना से करता है, इस लिए हम को और राज्य के लोग और भूतयोनि से डर नहीं है। ६९। ७०॥

(69-70.) That lord of the Asuras, who is a man-eater, who is become plump by feeding on human flesh and who is strong and wicked, protects this city, this province and this country by means of his army consisting of Rakshasas, so that we have no fear of the people of any other country or of the evil spirits.

**वेतनं इति।** अन्वयः। शालिवाहस्य भोजनं, महिषौ, एकः (सः) पुरुषः च तस्य वेतनं विहितं, यः तत् आदाय गच्छति। ७१॥

व्याख्या। शालिवाहस्य=शालिः तण्डुलविशेषः वाहः विंशति-खारिकः (अस्त्रियां आढ़कद्रोणौ खारी वाहो निकुञ्चकः। कुड़वः प्रस्थः इत्याद्याः परिमाणार्थकाः पृथक् इत्यमरः। वाहो विंशतिखारीकः इति नीलकण्ठः) शालीनां (६तत्) वाहः विंशतिखारीपरिमितशालितण्डु-लौदनः इत्यर्थः (भोजनं इत्यस्य कर्म्म-६ष्ठी) भोजनं=भक्षणं (कर्म्म-विधेय-विण) महिषौ=द्वौ महिषौ (पूर्ववत्-विण) एकः सः पुरुषः=वक्ष्य-माणः एतैः सहितः नरः (पूर्ववत् विण) तस्य=वकस्य (सम्व) वेतनं= वर्त्तनं जीविका इति यावत् (कर्म्म-१मा) विहितं=निर्द्धारितं (वि·धा+ कर्म्मणि·क्त, क्रिया) तेन वकेन इति शेषः। कः असौ पुरुषः इत्याह

यः इति। यः=पुरुषः ( कर्त्ता ) तत्=वेतनं ( कर्म्म ) आदाय=गृहीत्वा ( आ-दा-धा+ल्यप् ) गच्छति वकसमीपं गच्छति ( क्रिया )। शालि-तण्डुलपूर्णः शकटः इति नीलकण्ठः। ७१ ॥

वाच्यान्तरं। भोजनं, महिषौ, एकं पुरुषं वेतनं विहितवान्, येन गम्यते। ७१ ॥

एक वाह परिमाण शालि, दो भैंस, और वह आदमी जो इन द्रव्यों को ले जाता हैं, उस का वेतन ठहरया गया है। ७१ ॥

( 71. ) One *baha* of *sa'i* rice boiled, two buffaloes, and the man who carries this food, have been assigned to him as his rent.

**एकैकः इति।** अन्वयः। एकैकः पुरुषः च अपि तत् भोजनं प्रयच्छति, नरैः असुतरः सः वारः वहुभिः वर्षैः भवति। ७२ ॥

व्याख्या। एकैकः ( सर्व्व कर्त्ता-विण, वीप्सायां द्विर्वचनं, एकं बहुव्रीहिवत् इति समासवद्भावः ) पुरुषः च अपि=एकचक्रावासी गृहस्थः च अपि न केवलं कश्चित् निर्द्दिष्टः अपितु सर्व्वः एव नगरवासी इत्यर्थः ( कर्त्ता ) तत् ( सर्व्व कर्म्म-विण-२या ) भोजनं=पूर्व्वोक्तं वेतनं ( कर्म्म ) प्रयच्छति=ददाति ( प्र-दा-धा+लट्, क्रिया ), नरैः=मनुष्यैः ( असुतरः इत्यस्य कर्त्ता-३या ) असुतरः=सुखेन तरितुं अशक्यः ( न-सु-तृ-धा+खल् कर्त्ता-विण ) सः वारः=पर्य्यायदिवसः ( कर्त्ता ) वहुभिः=वहुसंख्यकैः ( ३या-विण ) वर्षैः=वत्सरैः ( अपवर्गे-३या ) भवति ( क्रिया ) प्रजा-संख्यावाहुल्यात् अत्र वारः प्रति गृहस्थं वह्नोः कालात् परं आयाति, पुरुषदानात् अतिकष्टप्रदः इति भावः। ७२ ॥

वाच्यान्तरं। एकैकेन पुरुषेन तत् भोजनं प्रदीयते, असुकरेण तेन वारेण भूयते। ७२ ॥

हर एक आदमी यह भोजन देता है यह दुख से काटने योग्य दिन बहुत वर्षों में आता है। ७२ ॥

(72.) Each inhabitant of this place is required to supply him this food. This painful turn comes to the same individual at intervals of many years.

**तदिति।** अन्वयः। उत ये केचित् पुरुषाः क्वचित् विमोचाय यतन्ति, तत् रक्षः सपुत्रदारान् तान् हत्वा भक्षयति। ७३॥

व्याख्या। उत=भो तपोधने (अव्य) ये केचित् (सर्व्व-कर्त्तृ-विश) पुरुषाः=गृहस्थाः नराः क्वचित्=कदाचित् (अव्य) मोक्षाय=तस्मात् वारात् परित्राणाय (तादर्थ्ये ४र्थी) यतन्ति=यतन्ते व्यवस्यन्ति (यत-धा=लट्, क्रिया, परस्मैपदं आर्षं) तत् (सर्व्व-कर्त्तृ-विश) रक्षः=रक्षति हविः अस्मात् (रक्ष-धा+अपा-अस्) सः राक्षसः (कर्त्ता) सपुत्रदारान्=पुत्राः च दाराः च (द्वन्द्व) तैः सह वर्त्तमानान् स्त्रीपुत्रैः सह इत्यर्थः (कर्म्म-विश) तान्=यतमानपुरुषान् (सर्व्व-कर्म्म) हत्वा=निपात्य (हन-धा+क्त्वा) भक्षयति=अत्ति (क्रिया) इत्थं वहनर्थतया निवारणव्यवसायः न क्रियते। ७३॥

वाच्यान्तरं। यैः कैश्चित् पुरुषैः यत्यते, तेन रक्षसा सपुत्रदाराः ते भक्ष्यन्ते। ७३॥

उस से बचने के लिए जो कोई पुरुष कहीं यत्न करते हैं, उन को स्त्रीपुत्र के साथ वह राक्षस मार के खा जाता है। ७३॥

(73.) If any one fails to do the needful when his turn comes, he, together with his wife and children, is killed and devoured by the Rakshasa.

**सः इति।** अन्वयः। कुलविनाशनः सः अयं वारः अस्मान् अनुप्राप्तः। मया भोजनं एकः पुरुषः च वेतनं प्रदेयम्। ७४॥

व्याख्या। कुलविनाशनः=विनाशयति यः सः विनाशनः (वि-नश-धा+णिच+कर्त्तरि-ल्यु) कुलस्य वंशस्य (६तत्) विनाशनः वंशक्षय-

कारः ( कर्त्ता-विश ) सः भयं = प्रतिग्टहस्थं प्रति आपतन् ( सर्व्व-कर्त्ता-विश ) वारः=अवसरः पर्य्यायेण आगतः वकाय वेतनदानदिवसः (कर्त्ता निवहावसरौ वारः इत्यमरः ) अस्मान् ( कर्म्म-२या-३व ) अनुप्रामः= आगतः अस्माकं वारः समायातः इत्यर्थः ( अनु-प्र-आप धा+कर्त्तरि-क्त, क्रिया ), मया ( कर्त्ता ३या ) भोजनं = वाहपरिमितशालितण्डुलौदनः ( कर्म्म-विश ) एकः पुरुषः च=एकः नरः ( कर्म्म-विश ) वेतनं=वर्त्तनं ( कर्म्म-१मा ) प्रदेयं=प्रदातव्यं ( दा-धा+कर्म्मणि-यत् क्रिया) । ७४ ॥

वाच्यान्तरं । कुलविनाशनेन तेन अनेन वारेण वयं अनुप्राप्ताः, अहं भोजनं एकं पुरुषं च वेतनं दद्याम् । ७४ ॥

वही यह कुल का नाश करनेवाली बारी हमारे लिए आई है। मुझे एक पुरुष और भोजन द्रव्य देना है। ७४ ॥

74. That turn, ruinous to my family has overtaken us. I shall have to offer one man and food as my rent to the Rakshasa.

**न च इति ।** अन्वयः । क्वचित् पुरुषं संक्रेतुं मे वित्तं न च विद्यते, सुहृज्जनं प्रदातुं च कदाचन न शक्ष्यामि । ७५ ॥

व्याख्या । क्वचित्=कुत्रचित् देशे ( अधि-अव्य ) पुरुषं = नरं ( कर्म्म ) संक्रेतुं = धनेन संग्रहीतुं ( सम्-क्री-धा+तुमुन्) मे=मम=(सम्ब) वित्तं=धनं ( कर्त्ता-१मा ) न विद्यते=न अस्ति ( विद-धा+कर्त्तरि-लट, क्रिया) इह धनवान् लोकः धनेन अन्यं पुरुषं क्रीत्वा वकाय दत्त्वा स्वजन-परित्राणं करोति, निर्द्धनत्वात् मम सोऽपि पन्था नास्ति, तर्हि कश्चित् स्वजनः प्रदीयतं इति आह सुहृज्जनं इति, सुहृज्जनं=बन्धुजनं पुत्रादिकं ( कर्म्म ) प्रदातुं=वकाय उपहारीकर्त्तुं ( असमा ) कदाचन=कदापि ( अव्य ) न शक्ष्यामि=न शक्तः भविष्यामि ( शक्-धा+लट्-उपु-१व, क्रिया ) । ७५ ॥

वाच्यान्तरं। वित्तेन न विद्यते, न शक्यते। ७५॥

मेरे धन नहीं है, कि मैं कहीं से एक पुरुष मोल ले लूं; और अपने लोगों को दे नहीं सकूंगा। ७५॥

(75.) I have not got wealth enough to buy a man from some place nor shall I be able to sacrifice any of my kinsmen.

**गतिं इति।** अन्वयः। तस्मात् रक्षसः मोक्षाय गतिं च एव न पश्यामि, सः अहं महति असुतरे दुःखार्णवे भृशं मग्नः। ७६॥

व्याख्या। तस्मात् (सर्व्व-अपा-विण) रक्षसः=वकराक्षसात् (रक्षस् श+अपा-५मी) मोक्षाय=मुक्तये परित्राणाय इति यावत् (तादर्थे-४र्थी) गतिं=उपायं (कर्म्म) च एव (अव्य) न पश्यामि=निपुणं विचिन्तन् अपि न अवलोकयामि (दृश-धा+लट-उपु-१व, क्रिया) सः=निरुपायः (सर्व्व-कर्त्ता-विण) अहं (कर्त्ता) महति=अतिविस्तीर्णे (अधि विण) असुतरे=सुखेन तरितुं अशक्ये दुस्तरे इत्यर्थः (अधि-विण) दुःखार्णवे=अर्णः जलं विद्यते अस्मिन् (अर्णस्-श+व) अर्णवः समुद्रः, दुःखमेव (रूपकसमास) अर्णवः तस्मिन् (अधि-७मी) भृशं=अत्यर्थं (क्रिया-विण) मग्नः=निमग्नः (मस्ज्-धा+कर्त्तरि-क्त) अस्मि इति शेषः। ७६॥

वाच्यान्तरं। गतिः न दृश्यते, तेन मया मग्नेन भूयते। ७६॥

उस राक्षस से बचने के लिए कोई उपाय नहीं देखता हूं, मैं इस दुस्तर बड़े दुख के सागर में पड़ा हूं। ७६॥

(76) I see no means by which I may deliver myself from the hands of this Rakshasa. I am therefore thrown in to an unterminable sea of grief.

**सह इति।** अन्वयः। अद्य एतैः बान्धवैः सह एव राक्षसं गमिष्यामि, ततः क्षुद्रः (सः) सहितान् सर्व्वान् नः एव उपयोक्ष्यति। ७७॥

व्याख्या । अद्य = अस्मिन् अहनि ( अधि-अव्य ) एतैः ( सर्व्व-३या-विण ) बान्धवैः = पुत्रादिस्वजनैः ( सहयोगे-३या ) सह एव = सहितः एव ( अव्य ) राक्षसं वकराक्षसं ( कर्म्म ) गमिष्यामि (क्रिया ), क्षुद्रः = निकृष्टः ( कर्त्ता-विण ) सः वकराक्षसः ( कर्त्ता ) सहितान् = मिलितान् बान्धवयुक्तान् इत्यर्थः ( सम धा+धा+क्त, पक्षे संहितान् ) सर्व्वान् = सकलान् ( सर्व्व-कर्म्म विण ) नः = अस्मान् ( कर्म्म-२या-३व ) एव (अव्य) उपयोक्ष्यति उपयोक्ष्यते भक्षयिष्यति ( उप-युज धा+लृट, परस्मैपदं आर्षं क्रिया ), एककवले भक्षिताः परस्परविरहवेदनामननुभवन्तः वयं सुखेन मरिष्यामः इत्यर्थः । ७७ ॥

वाच्यान्तरं । मया राक्षसः गमिष्यते, क्षुद्रेण सहिताः सर्व्वे वयं उपयोक्ष्यामहे । ७७ ॥

आज मैं सब बान्धवों के साथ उस राक्षस के पास आऊंगा, तब वह क्षुद्र हम सभों को एक साथ खा जाएगा । ७७ ॥

कुन्ती ( कर्त्ता ) उवाच ( क्रिया ), [ वाच्यान्तरं, कुन्त्या ऊचे ] ।

( 77. ) To-day I shall go to that Rakshasa with my family. That vile-hearted wretch will devour us all together.

**न विषादः इति ।** अन्वयः । त्वया अस्मात् भयात् विषादः कथञ्चन न कार्य्यः, अत्र तस्मात् रक्षसः मोक्षाय उपायः दृष्टः । ७८ ॥

व्याख्या । त्वया ( कर्त्ता-३या ) अस्मात् (सर्व्व-५मी-विण) भयात्= राक्षसत्रासात् ( हेतौ-५मी ) विषादः=दुःखं ( कर्म्म-१मा ) कथञ्चन= कदापि ( अव्य) न कार्य्यः=कर्त्तव्यः ( कृ-धा+कर्म्मणि-ण्यत्, क्रिया ) अत्र = अस्मिन् विषये ( अधि अव्य ) रक्षसः = राक्षसात् (अपा) मोक्षाय= मुक्तये ( तादर्थ्ये-४र्थी ) उपायः=पन्थाः ( कर्म्म ) परिदृष्टः = अवलोकितः उद्भावितः इत्यर्थः (परि-दृश-धा+कर्म्मणि-क्त, क्रिया) मया इति शेषः ।७८॥

वाच्यान्तरं । त्वं विषादं न कुर्य्याः उपायं दृष्टवती । ७८ ॥

कुन्ती ने कहा—आप इस डर से खेद न करो, उस राक्षस से बचने के लिए मैं ने उपाय सोचा है । ७८ ॥

(78.) You shall not lament for fear of this Rakshasa; means has been deviced for deliverance from that Rakshasa.

**एकः इति ।** अन्वयः । तव एकः बालः सुतः, एका तपस्विनी कन्या, एतयोः तथा पत्न्याः तव च गमनं न रोचये । ७९ ॥

व्याख्या । तव (सम्ब) एकः—द्वितीयशून्यः तस्मिन् मृते वंशलोपः पिण्डलोपः च स्यात् इति भावः (१मा-विण) बालः=शिशुः अप्राप्तसंसारसुखः अनधिगतधर्म्मश्च इति भावः (१मा-विण) सुतः=पुत्रः नरकत्राणोपायः इति भावः (प्रातिपदिकार्थे-१मा) एका (१मा-विण) तपस्विनी=अनुकम्प्या दयार्हा इत्यर्थः (१मा-विण, तपस्वी तापसे चानुकम्प्ये इति मेदिनी) कन्या च=तनया च (प्रातिपदिकार्थे-१मा) एतयोः=तव कन्यापुत्रयोः (गमनं इत्यस्य-कर्त्ता-६ष्ठी) तथा (अत्र) पत्न्याः=तव भार्य्यायाः (पूर्व्ववत्-६ष्ठी) गमनं=बकराक्षससमीपे उपस्थितिं (गम-धा+भावे-ल्युट्, कर्म्म-२या) न रोचये=न अभिलषामि (रुच-धा+णिच्-लट्, क्रिया) अहं इति शेषः । ७९ ॥

वाच्यान्तरं । गमनं रोच्यते मया । ७९ ॥

आपके एक बालक पुत्र और एक कृपा करने योग्य कन्या है, इन दोनों और आपकी पत्नी का और आप का जाना मैं नहीं चाहती हूं । ७९ ॥

(79.) You have an only son of tender age and a girl that deserves pity—it is not desirable that either of these or your wife or you should go to the Rakshasa.

**मम इति ।** अन्वयः । ब्रह्मन् मम पञ्च सुताः (सन्ति) तेषां एकतमः त्वदर्थं तस्य पापस्य रक्षसः बलिं आदाय गमिष्यति । ८० ॥

व्याख्या। ब्रह्मन्=हे ब्राह्मण ( सम्बो ) मम ( सम्ब ) पञ्च ( कर्त्तृ-विश-१मा ३व ) सुताः=पुत्राः ( कर्त्ता ) सन्ति इति शेषः। तेषां ( निर्द्धारे ६ष्ठी ) एकः=अन्यतमः ( कर्त्ता ) त्वदर्थं—तुभ्यं इदं तव हिताय इत्यर्थः ( अर्थेन नित्यसमासः ) तस्य ( सर्व्वसम्ब-विश ) पापस्य=पापात्मनः ( सम्ब-विश ) रक्षसः=बकराक्षसस्य ( सम्ब ६ष्ठी बलिं=उपहारं खाद्यं इत्यर्थः ( कर्म्म, बलिर्दैत्यप्रभेदे च करचामरदण्डयोः। उपहारे पुमान् इति मेदिनी ) आदाय=गृहीत्वा ( आ-दा-धा+ल्यप् ) गमिष्यति ( क्रिया )। ८०॥

वाच्यान्तरं। पञ्चभिः सुतैः भूयते, एकेन गमिष्यते। ८०॥

हे ब्राह्मण मेरे पांच पुत्र हैं, उनमें से एक आपके लिए बलि लेके उस पापिष्ठ राक्षस के पास जाएगा। ८०॥

(80.) Oh Brahman ! I have five sons, one of whom would, for you, go to the wicked Rakshasa with offerings of food,

ब्राह्मणः ( कर्त्ता ) उवाच ( क्रिया ), [ वाच्यान्तरं, ब्राह्मणेन ऊचे ]।

**न इति।** अन्वयः। अहं जीवितार्थी ( सन् ) अतिथेः ब्राह्मणस्य च प्राणान् स्वार्थे वियोजयन् एतत् कथञ्चन न करिष्यामि, एतत् अकुर्व्वतः ... न विद्यते, अधर्म्मिष्ठासु न विद्यते। ८१॥

व्याख्या। ब्राह्मणस्य अतिथेः च प्राणरक्षां प्रतिजानीते। अहं ( कर्त्ता ) जीवितार्थी=जीवितं प्राणान् अर्थयते यः ( अर्थि-धा+णिन् ) सः सन् निजप्राणरक्षार्थं इत्यर्थः ( कर्त्ता-विश ) अतिथेः=नास्ति तिथिः यस्य ( बहुव्री ) यः परदिने न तिष्ठति इत्यर्थः स अतिथिः तस्य अभ्यागतस्य सर्व्वत्राभ्यागतो गुरुः इत्युक्तेः गुरुवत् पूज्यस्य इत्यर्थः(सर्व्व-विश) ब्राह्मणस्य=ब्रह्म वेदं वेत्ति अधीते वा (ब्रह्मन्-अ+अण्) ब्राह्मण भूदेवः वर्णानां ब्राह्मणो गुरुः इत्युक्तेः सोऽपि गुरुवत् पूज्यः इत्यर्थः, अनयोः एकतरः पूज्यः अत्र तु द्वौ अपि मम भाग्यवशात् मिलितौ इत्यभिप्रायः तस्य ( सम्ब ) प्राणान्

( कर्म्म ) स्वार्थे=स्वस्य अर्थे प्रयोजनं तस्मिन् निजकार्य्यार्थे इत्यर्थः (अधि) वियोजयन्=वियुक्तान् कुर्व्वन् संहारयन् इत्यर्थः ( वि-युज-धा+णिच्+शट ) एतत्=त्वदुक्तं तव पुत्रस्य प्राणविनिमयेन निजप्राणरक्षणं ( कर्म्म ) कथञ्चन=कदाचिदपि ( अव्य ) न करिष्यामि ( क्रिया ), एतत्=तव कथनानुरूपं आचरणं ( कर्त्ता ) अकुलीनासु=कुले सद्वंशे जायन्ते याः ( कुल अ+ख वा ईन् ) तासु नीचवंशोद्भवासु प्रजासु ( अधि ) नतु=नापि ( अव्य ) विद्यते=अस्ति ( क्रिया ) न=नापि ( अव्य ) अधर्म्मिष्ठासु= इमे एषां अतिशयेन धर्म्मवन्तः ( धर्म्मवत्-अ+इष्ठ मतुपः लोपः ) धर्म्मिष्ठाः न धर्म्मिष्ठाः ( नञ् तत् ) अधर्म्मिष्ठाः तेषु पापात्मसु प्रजासु ( अधि ) विद्यते ( क्रिया ) कथं पुनः कुलीनेषु धर्म्मज्ञेषु मादृशेषु सम्भवेत् इति भावः । ८१ ॥

वाच्यान्तरं । जीवितार्थिना प्राणान् वियोजयता मया एतत् न करिष्यते, एतेन न विद्यते । ८१ ॥

ब्राह्मण ने कहा—मैं प्राण के लिए ब्राह्मण अतिथि का प्राण मार के ऐसा करना नहीं चाहता हूं, ऐसा अकुलीन अधार्म्मिक प्रजा में भी नहीं होता । ८१ ॥

( 81. ) The Brahmin said—Being fond of life I will not allow the life of a Brahman or a guest to be sacrificed for my sake ; even the meanest and most irreligious of the pupil would not do this.

**यत् इति ।** अन्वयः । यत् ( धर्म्मज्ञः यः कश्चित् ) ब्राह्मणार्थे आत्मानं आत्मजं च अपि विसृजेत्, ( अतः ) मया आत्मनः तत् ( विसर्ज्जनं ) श्रेयः वोढव्यं इति रोचये । ८२ ॥

व्याख्या । यत्=यस्मात् ( अव्य ) धर्म्मज्ञः यः कश्चित् इति शेषः ( कर्त्ता ) ब्राह्मणार्थः=ब्राह्मणस्य हिताय इत्यर्थः ( अर्थेन नित्यसमासः )

आत्मानं=आत्मप्राणान् ( कर्म्म ) आत्मजं=आत्मनः जायते यः ( जन-धा+ ण ) तं पुत्रं ( कर्म्म ) विसृजेत्=परित्यजेत् तयोः त्यागे कुण्ठितः न भवेत् इत्यर्थः ( वि-सृज-धा+विधि, क्रिया ) अतः हेतोः (अव्य ) मया (कर्त्री-३या ) आत्मनः अर्थे आत्मनः विसर्ज्जनं ( कर्म्म-१मा ) श्रेयः=इदं अनयोः आत्मनः प्रशस्यतरं ( प्रशस्य श्र+ईयसुन् ) मङ्गलजनकं ( कर्म्म-विण ) बोद्धव्यं=ज्ञातव्यं ( बुध-धा+कर्म्मणि तव्य ) इति ( कर्म्म ) रोचये= अभिलषामि ( क्रिया ) । ८२ ॥

वाच्यान्तरं । आत्मा आत्मजः विसृज्येत, मया रोच्यते । ८२ ॥

क्यों कि ब्राह्मण के लिए अपने आपे और अपने पुत्रको त्याग करना चाहिए, मैं अपने लिए अपने तईं त्याग करना भला समझता हूं । ८२ ॥

( 82. ) For a Bramhin's sake one ought to sacrifice one's own and his son's self ; therefore for my own sake I well understand that it is better to sacrifice my own-self.

**ब्रह्मवध्या इति ।** अन्वयः। ब्रह्मवध्या वा आत्मवध्या ( इति संशये ) आत्मवधः मम श्रेयान् । ८३ ॥

व्याख्या । ब्रह्मवध्या=ब्रह्मणः ( ६तत् ) वध्या हत्या ( प्रातिपदिकार्थे-१मा हन्तेर्वधः हिंसायां इति हलन्तात् वा स्त्रीयां भावे-क्यप्प्रत्ययः आर्षः ) श्रेयसी, इति शेषः, वा—अथवा ( अव्य ) आत्मवध्या ( पूर्व्ववत् ) श्रेयसी इति संशये उपस्थिते सति इति शेषः आत्मवधः=आत्मप्राणत्यागः ( पूर्व्ववत्-१मा ) मम ( सम्ब ) श्रेयान्=प्रशस्यतरः ( १मा-विण )। ज्ञानकृतब्रह्महत्यां अपेक्ष्य आत्महत्यायां अल्पदोषः इति भावः, अपराद्धं परित्यक्तं । ८३ ॥

ब्रह्महत्या वा आत्महत्या इन दोनों में आत्मवध ही भला है । ८३ ॥

(83.) Of the two sins killing a Brahmin and committing suicide the latter is preferrable.

**ननु इति।** अन्वयः। (हे) शुभे, अहं स्वयं एव आत्मनः वधं न च आकाङ्क्षे, परैः वधे कृते (सति) मयि किञ्चित् पापं न विद्यते। ८४॥

व्याख्या। आत्मवधेऽपि दोषः अस्ति तत् कथं आकाङ्क्षसि इत्याह, ननु इति। शुभे = हे कल्याणि कुन्ति (सम्बो) अहं (कर्त्ता) स्वयं एव = आत्मना एव (प्रकृत्यादिभ्यः इति ३या, अव्य) आत्मनः वधं (कर्म्म) न आकाङ्क्षे = न आकाङ्क्षामि न अभिलष्यामि (आ-काङ्क्ष-धा+लट-३पु-१व, क्रिया आत्मनेपदमार्षं) परैः = अन्यैः (कृते इत्यस्य कर्त्ता ३या) वधे = मम हनने (भावाधि-७मी) कृते = विहिते सति (कर्म्मणि-क्त) मयि = (अधि) किञ्चित् = किमपि (कर्त्ता-विण, अव्य) पापं = आत्महत्यापापं (कर्त्ता) न विद्यते = नास्ति (विद-धा+कर्त्तरि-लट, क्रिया), बुद्धिपूर्व्वक-ब्रह्मवधात् बुद्धिपूर्व्वकृते आत्मवधे स्वल्पं पापं अस्ति, मम तु अपरेण बक-राक्षसेन वधे कृते तदपि नास्ति इति फलितार्थः। ८४॥

वाच्यान्तरं। मया वधः न आकाङ्क्ष्यते, केनचित् पापेन न विद्यते ८४

हे कल्याणि! मैं अपना वध आप नहीं चाहता हूं, और कोई वध करेगा तो मुझे कुछ भी पाप न होगा। ८४॥

(84.) O good woman! I do not wish for my own death--There is no sin if I am killed by another.

**आगतस्य इति।** अन्वयः। गृहं आगतस्य तथा एव शरणार्थिनः त्यागः याचमानस्य च वधः नृशंसः बुधैः गर्हितः। ८४॥

व्याख्या। ब्रह्मवधदोषं उक्त्वा अभ्यागतवधं दूषयति आगतस्य इति। गृहं (आगतस्य इत्यस्य कर्म्म) आगतस्य = प्राप्तस्य गृहे उपस्थितस्य अतिथेः इत्यर्थः (त्यागः इत्यस्य कर्म्म-६ष्ठी) तथा तव (अव्य) शरणार्थिनः = शरणं आश्रयं अर्थयते याचते यः (शरण-अर्थि-धा+णिन्) तस्य शरणागतस्य (पूर्व्ववत्-६ष्ठी) त्यागः = विसर्ज्जनं (त्यज-धा = घञ, कर्म्म-१मा) याच-

मानस्य = प्रार्थयमानस्य शत्रोः अपि इति भावः ( वधः इत्यस्य-कर्म्म-६ष्ठी ) वधः हत्या ( हन-धा+ अल, कर्म्म-१मा ) नृशंसः=निष्ठुरः ( कर्म्म-विण ) बुधैः=पण्डितैः सद्भिः इत्यर्थः ( बुध-धा+क्त ), गर्हितः इत्यस्य कर्त्ता-३या ) गर्हितः=निन्दितः ( गर्ह धा+कर्म्मणि क्त, क्रिया ) । ८५ ॥

वाच्यान्तरं । त्यागं वधं नृशंसं बुधाः वर्हितवन्तः ८५ ॥

पण्डितों ने घर आए हुये के और शरण लिये हुये के त्याग को और प्राण को भिक्षा चाहनेवाले के वध को निष्ठुर कहा है । ८५ ॥

(85.) It is a great cruelty and an act condemned by all wise men to give up a person who has come to another's house who seeks protection, or one who prays for his life.

**कुर्य्यात् इति ।** अन्वयः। निन्दितं कर्म्म कथञ्चन न कुर्य्यात्, नृशंसं च न ( कुर्य्यात् ) इति आपद्धर्म्मविदः पूर्व्वे महात्मनः विदुः । ८६ ॥

व्याख्या। ननु आपद्ग्रस्तोऽपि आपदि कुतः धर्म्माधर्म्मविचारः इत्याह कुर्य्यात् इति। निन्दितं=साधुविगर्हितं ( निन्द-धा+क्त कर्म्म-विण ) कर्म्म+ब्रह्महत्यादिकार्य्यं ( कर्म्म-२या ) कथञ्चन=कदाचिदपि आपदि अनापदि वा इत्यर्थः ( अव्य) न कुर्य्यात्=न अनुतिष्ठेत् (क्रिया) जनः इति शेषः। तथा ( अव्य ) नृशंसं=निष्ठुरं कर्म्म च ( कर्म्म ) न कुर्य्यात् इति शेषः, इति=एतत् ( कर्म्म-अव्य ) आपद्धर्म्मविदः=आपदि ( ७मत् ) यः धर्म्मः आपत्काले अनुष्ठेयं यत् आचरणं, तत् ( उपपद-समासः ) विदन्ति जानन्ति ये ( आपद्धर्म्म-विद-धा+क्किप् ) ते आपद्धर्म्मज्ञाः ( कर्त्ता-विण ) पूर्व्वे=प्राचीनाः ( सर्व्व-कर्त्ता-विण-१मा ) विदुः=विदन्ति उपदिशन्ति इत्यर्थः ( विद-धा+लट्-प्रपु-३व, क्रिया, ननु लिट्, तत्र विविदुः इति पदं भवति ) ८६ ॥

वाच्यान्तरं । निन्दितं कर्म्म न क्रियेत, न नृशंसं इति आपद्धर्म्म-विद्भिः सर्व्वः महात्मभिः विद्यते । ८६ ॥

निन्दित और निष्ठुर कर्म्म करना नहीं चाहिये, पहिले के आपद्धर्म्मके जाननेवाले महात्माओं ने ऐसा कहा है । ८६ ॥

(86.) The old sages who were acquainted with the practices allowable in times of danger have said that no one should commit an act of cruelty or an act condemned by others.

**श्रेयान् इति ।** अन्वयः । अद्य सहदारस्य मम स्वयं विनाशः तु श्रेयान्, अहं ब्राह्मणस्य वधं कदाचन न अनुमंस्ये । ८७ ॥

व्याख्या । कर्त्तव्यं अवधारयति श्रेयान् इति अद्य=अस्मिन् अहनि ( अधि अव्य ) सहदारस्य=दारैः सह वर्त्तमानस्य ( वहुव्री, विकल्पे सह इत्यस्य सादेशः, पक्षे सदारः ) सस्त्रीकस्य ( ६ष्ठी-विण ) मम ( विनाशः इत्यस्य कर्त्ता-६ष्ठी ) स्वयं=आत्मना ( प्रकृत्यादिभ्यः-३या ) विनाशः= मरणं ( वि-नश-धा+घञ, कर्त्ता-१मा ) श्रेयान्=श्रेयस्करः ( कर्त्ता-विण ) भवतीति शेषः। अहं ( कर्त्ता ) ब्राह्मणस्य विप्रस्य ( कर्म्म-६ष्ठी ) वधं=हननं ( कर्म्म ) कदाचन=कदापि ( अव्य ) न अनुमंस्ये=न अनुज्ञास्यामि ( अनु मन्-धा+लृट्-उपु-१व, क्रिया ) ८७ ॥

वाच्यान्तरं । विनाशेन श्रेयसा भूयते, मया अनुमंस्यते । ८७ ॥

आज मेरा स्त्रीके साथ आप मरना भला है, मैं ब्राह्मण के वध की अनुमोदन नहीं करूंगा । ८७ ॥

(87.) It is better that I shall die to-day with my wife rather than that I shall consent to the death of a Brahman.

कुन्ती ( कर्त्ता ) उवाच ( क्रिया ) [ कुन्त्या उच्यते ] ।

**मम इति ।** अन्वयः । ( हे ) ब्रह्मन्, विप्राः रक्ष्याः इति मम स्थिरा मतिः । यदि पुत्रशतं भवेत् ( तथापि ) पुत्रः मे न अपि अनिष्टः । ८८ ॥

व्याख्या। ब्रह्मन्=हे ब्राह्मण ( सम्बो ) विप्राः=ब्राह्मणाः ( कर्म्म-१मा ) रक्ष्याः=रक्षणीयाः ( रक्ष-धा+कर्म्मणि-यत् ) इति=एषा (अव्य) मम ( मतिः इत्यस्य कर्त्ता ६ष्ठी ) स्थिरा=निश्चला ( कर्त्ता-विण ) मतिः=बुद्धिः ( मन-धा+भावे क्ति, कर्त्ता ) भवतीति शेषः ब्राह्मणरक्षाविषये तव मम च ऐकमत्यं अतः त्वमपि ब्राह्मणः मम रक्षणीयः इति भावः। यदि ( अव्य ) पुत्रशतं पुत्राणां ( ६तत् ) शतं शतसंख्यकाः पुत्राः इत्यर्थः ( कर्त्ता ) भवेत् ( क्रिया ) तथापि ( अव्य ) पुत्रः=तनयः ( अनिष्टः इत्यस्य कर्म्म-१मा ) मे=मम ( कर्त्ता-६ष्ठी ) न अनिष्टः=अनभिलषितः न अप्रियः इत्यर्थः ( न-इष-धा+कर्म्मणि-वर्त्तमाने-क्त, क्रिया )। यदहं बकराक्षससमीपे पुत्रं प्रेषयामि तत्र मम पुत्रवात्सल्याभावो न हेतुः किन्तु विप्ररक्षणस्य सर्व्वथा करणीयत्वादेवं इति भावः। ८८॥

वाच्यान्तरं। मत्या भूयते, पुत्रशतेन भूयते, अहं न पुत्रं अनिष्टवती। ८८॥

कुन्ती ने कहा—हे ब्रह्मन् मेरी भी यही स्थिर राय है कि ब्राह्मण की रक्षा की जानी चाहिये जो मेरे सौपुत्र हैं पर तब भी पुत्र मेरा अप्रिय नहीं है। ८८॥

(88.) Kunti replied,—O Brahman ! It is my fixed opinion that Brahmans must be saved. I would love my sons even if I had a hundred.

**न च इति।** अन्वयः। असौ राक्षसः मम पुत्रविनाशेन न शक्तः मम सुतः तेजस्वी, वीर्य्यवान् मन्त्रसिद्धः च। ८९॥

व्याख्या। न चायं राक्षसो मम पुत्राय प्रभवति इत्याह न चेति। असौ ( अदस् श-१मा-१व, कर्त्ता-विण) राक्षसः=निशाचरः बकः (कर्त्ता) मम ( सम्ब ) पुत्रविनाशने निपातने ( अधि ) न शक्तः=न समर्थः (शक-धा+कर्त्तरि-क्त), अयं बकः मम पुत्रस्य न प्रभवति इत्यर्थः, मम ( सम्ब ) सुतः=पुत्रः ( प्रातिपदिकार्थे-१मा ) वीर्य्यवान्=वीरस्य भावः वीर्य्यं (वीर-

अ+ष्णव्) वीर्य्यं विद्यते अस्य (वीर्य्य-अ+वतुप्) सः समधिकशौर्य्यशाली (१मा-विण) तेजस्वी = तेजः विद्यते अस्य (तेजस्-अ+विण) सः पर-कृतं अधिक्षेपं असहमानः इत्यर्थः (१मा-विण) मन्त्रसिद्धः च = मन्त्रैः (३तत्) सिद्धः अथर्व्ववेदज्ञः अतः दूरादेव राक्षसादिकं पराभवितुं समर्थः इत्यर्थः (१मा-विण)। ८९॥

वाच्यान्तरं। अनेन राक्षसेन न शक्तः। ८९॥

मेरा पुत्र वीर्य्यवान् और तेजस्वी है, उसको मन्त्रकी सिद्धि है, वह राक्षस मेरे पुत्रको मार नहीं सकेगा। ८९॥

(89.) My son is powerful, spirited and versed in incantations, so that the Rakshasa will not be able te kill him.

**राक्षसाय इति।** अन्वयः। (सः मम सुतः) राक्षसाय तत् सर्व्वं भोजनं प्रापयिष्यति आत्मानं मोक्षयिष्यति च इति मे निश्चिता मतिः। ९०॥

व्याख्या। सः मम सुतः इति शेषः (कर्त्ता) राक्षसाय=वकाय राक्षसं इत्यर्थः (विवक्षायां-४र्थी णिजन्तस्य प्रापयतेः द्विकर्म्मकत्वात् कर्म्म) तत् सर्व्वं (सर्व्व-कर्म्म-विण) भोजनं भक्ष्यद्रव्यं खारीपरिमितशाल्यन्नं द्वौ महिषौ च इत्यर्थः (कर्म्म) प्रापयिष्यति च नेष्यति च (प्र-आप-धा+णिच्+लृट्, क्रिया) आत्मानं=स्वजीवनं (कर्म्म) मोक्षयिष्यति तदभि-योगात् रक्षयिष्यति च इत्यर्थः (मोक्ष-धा+णिच्+लृट्, क्रिया) इति= एषा (१मा विण, अव्य) मे=मम (मतिः इत्यस्य कर्त्ता-६ष्ठी) निश्चिता= ध्रुवा (१मा-विण) मतिः=ज्ञानं स्थिरः विश्वासः इति यावत् (मन्-धा+क्ति, प्रातिपदिकार्थे-१मा)। ९०॥

वाच्यान्तरं। मनु सर्व्वं प्रापयिष्यते, आत्मा मोक्षयिष्यते। ९०॥

मेरी यह बात निश्चित है कि, वह राक्षस के पास भोजन पहुंचा देगा और अपने आपको बचाएगा। ९०॥

(90.) It is my firm conviction that he will give all that food to the Rakshasa and then return safe.

**एवं इति ।** अन्वयः । पृथया एवं उक्तः तु सः विप्रः भार्य्यया सह हृष्टः ( सन् ) अमृतोपमं तत् वाक्यं संपूजयामास ।

व्याख्या । पृथया=कुन्त्या ( उक्तः इत्यस्य कर्त्ता-३या ) एवं=इत्थं ( अव्य ) उक्तः=कथितः तु ( वच-धा+कर्म्मणि-क्त ) सः ( सर्व्व-विण ) विप्रः=ब्राह्मणः (कर्त्ता ) भार्य्यया=स्त्रिया सहयोगे-३या ) सह=सहितः ( अव्य ) हृष्टः=सन्तुष्टः सन् ( हृष धा+क्त, कर्त्ता-विण ) अमृतेन सुधया उपमा सादृश्यं यस्य ( बहुव्री ) तत् अमृततुल्यं (कर्म्म-विण ) तत् ( सर्व्व-कर्म्म-विण, २या-१व ), वाक्यं=वचनं ( कर्म्म- वच धा+ण्यत, अशब्दसंज्ञायां तु वाक्यं ) संपूजयामास=दैववाणीवत् श्रद्धधानः समादृतवान्, ( सम् पूजि धा+लिट्, क्रिया ) । ६१ ॥

वाच्यान्तरं । उक्तेन तेन विप्रेण वाक्यं संपूजयामासे । ६१ ॥

उस ब्राह्मण ने पृथा को यह बात सुन भार्य्या के साथ उस अमृत को बराबर बात को माना । ६१ ॥

(91.) Kunti having said this, the Brahman and his wife gladly consented to the proposal which to them was like nectar.

**ततः इति ।** अन्वयः । ततः कुन्ती च विप्रः च ( तौ ) सहितौ तं अनिलात्मजं "कुरुष्व" इति अब्रूतां, स तथा इति तौ अब्रवीत् च । ६२ ॥

व्याख्या । ततः=अनन्तरं ( तद्-श+५मी+तस्, अव्य ) कुन्ती च ( कर्त्री ) विप्रः च (कर्त्ता) तौ एतौ इति शेषः, सहितौ=मिलितौ सन्तौ ( कर्त्ता-विण ) तं=गृहोपविष्टं ( सर्व्व कर्म्म-विण ) अनिलात्मजं=अनिलस्य वायोः ( ६तत् ) आत्मजं पुत्रं भीमं ( कर्म्म ) कुरुष्व"=वक्ष-

निधनेन देशं निरुपद्रवं कुरु (कृ-धा+लोट्, क्रिया त्वं इति कर्त्तृपदमुह्यं) इति=एतत् (कर्म्म अव्य) अब्रूतां=उक्तवन्तौ (ब्रू धा+लङ्-१पु-२व, परस्मैपद), सः=भीमः (कर्त्ता) तथास्तु बकं हनिष्यामि (अव्य) इति=एतत् (कर्म्म अव्य) अब्रवीत् च=उवाच च (ब्रू धा+लङ्-प्रपु-१व, क्रिया)। ९२॥

वाच्यान्तरं। कुन्त्या च विप्रेण च ताभ्यां सः अनिलात्मजः औच्यत, तेन तौ औच्यातां। ९२॥

पीछे कुन्ती और ब्राह्मण ने मिलके वायुपुत्र भीम से "ऐसा करो" कहा और भीम ने उनसे कहा कि अच्छा। ९२॥

(92.) Then Kunti and the Brahman said to Bhimsena, the son of Pavana, "Do this" and Bhimsena replied "It shall be done."

वैशम्पायनः=वेदव्यासशिष्यः महाभारतवक्ता (कर्त्ता) उवाच (क्रिया), [वैशम्पायनेन ऊचे]। अर्ज्जुनस्य पौत्रः परिक्षितः जनमेजयः अश्वमेध-क्रतुं आजह्रे, तत्र ब्रह्महत्यापापेन सः आक्रान्तः तस्मात् मुक्तये व्यासस्य उपदेशेन महाभारतं श्रोतुं ऐच्छत्, व्यासस्तु तत्कथनाय स्वशिष्यं वैशम्पायनं नियोजयामास इति महाभारतीया कथा।

**करिष्ये इति।** अन्वयः। अथ (हे) भारत करिष्ये इति भीमेन प्रतिज्ञाते (सति) ततः ते सर्व्वे पाण्डवाः भैक्ष्यं आदाय आजग्मुः। ९३॥

व्याख्या। अथ=अनन्तरं (अव्य) भारत=हे जनमेजय (सम्बो) करिष्ये=बकनिधनं साधयिष्यामि (क्रिया, अहं इति कर्त्तृपदमुह्यं) इति=एतस्मिन् (भावाधि-अव्य) भीमेन=वृकोदरेण (प्रतिज्ञाते इत्यस्य कर्त्ता-३या) प्रतिज्ञाते=प्रतिश्रुते सति (प्रति-ज्ञा-धा+कर्म्मणि-क्त) ततः=प्रतिज्ञासमनन्तरं एव (५मी+तस्, अव्य) ते (सर्व्व-कर्त्ता-विश)

सर्व्वे=चत्वारः (सर्व्व-कर्त्ता-विण) पाण्डवाः=युधिष्ठिरादयः (कर्त्ता) भैक्ष्यं=भिक्षालब्धं वस्तुजातं (कर्म्म) आदाय=गृहीत्वा (असमा) आजग्मुः=प्रत्यागताः (आ-गम-धा+लिट्-प्रपु-इव)। ९३॥

वाच्यान्तरं। मया करिष्यते, तैः सर्व्वैः पाण्डवैः आजग्मे। ९३॥

वैशम्पायन ने कहा कि—हे भारत! भीमके "ऐसा करूंगा" यह प्रतिज्ञा करनेपर सब पाण्डव भिक्षा लेके आपहुंचे। ९३॥

(93.) O Bharat, when Bhim had made the promise by saying, "I will do it" all the Pandavas arrived with what they had obtained by begging.

**आकारेण इति।** अन्वयः। पाण्डुतनयः युधिष्ठिरः आकारेण एव तं ज्ञात्वा ततः एकः रहः समुपविश्य मातरं पप्रच्छ। ९४॥

व्याख्या। पाण्डुपुत्रः=पाण्डोः पुत्रः (कर्त्ता-विण) युधिष्ठिरः युधि युद्धे (७तत्, अलुक) स्थिरः तन्नामकः जेष्ठः कुन्तीपुत्रः (कर्त्ता) आकारेण एव=मुखादिविकारेण एव (करण) तं=प्रतिज्ञातं अर्थं (कर्म्म) ज्ञात्वा=बुद्ध्वा (असमा) ततः=तीधानन्तरं (अव्य) एकः=एकाकी (कर्त्ता-विण) रहः=रहसि निर्जने ((अधि-अव्य) समुपविश्य=उपवेशनं कृत्वा (असमा) मातरं=जननीं कुन्तीं (कर्म्म) पप्रच्छ=जिज्ञासितवान् (प्रच्छ-धा+लिट्, क्रिया)। ९४॥

वाच्यान्तरं। पाण्डुपुत्रेण युधिष्ठिरेण एकेन माता पप्रच्छे। ९४॥

पाण्डुपुत्र युधिष्ठिर ने मुखादिके विकार से वह बात समझके एकान्त में बैठके माता से पूछा। ९४॥

(94.) Yudishthira, son of Pandu, understanding his meaning from his gestures, being seated at a retired place questioned his mother.

युधिष्ठिरः उवाच=कथितवान्।

**किं इति।** अन्वयः। भीमपराक्रमः अयं भीमः किं कर्म्म चिकीर्षति, भवत्यनुमते स्वयं वा कर्तुं इच्छति कच्चित्। ९५॥

व्याख्या। भीमपराक्रमः=भीमः भीषणः पराक्रमः यस्य (बहुव्री) सः (कर्त्ता-विश) अयं (सर्व्व-विश) भीमः वृकोदरः (कर्त्ता) किं=कर्म्म=वकवधरूपं कार्य्यं (कर्म्म- २या) चिकिर्षति=कर्त्तुं इच्छति (कृ-धा+सन्=चिकीर्ष-धा+लट्,क्रिया), भवत्यनुमते=भवत्याः तव (६तत्) अनुमतं तस्मिन् भवत्या आदिष्टः सन् इत्यर्थः (अधि) वा=अथवा स्वयं=आत्मना स्वेच्छया इति यावत् (अव्य) कर्त्तुं=तत् कर्म्म साधयितुं (तुमुन्, अव्य) कच्चित्=किम्=(अव्य, कच्चित् कामप्रवेदने इत्यमरः) इच्छति=वाञ्छति (इष-धा+लट्, क्रिया)। ९५॥

वाच्यान्तरं। भीमपराक्रमेण अनेन भीमेन कर्म्म चिकिर्ष्यते, इष्यते। ९५॥

युधिष्ठिर ने कहा कि,—भीमपराक्रम भीम यह काम आप करना चाहता है या आप की आज्ञा से ऐसा करना चाहता है। ९५॥

(95.) What does the powerful Bhim wish to do? Have you given him permission or is he going to do so of his own will?

कुन्ती (कर्त्ता) उवाच (क्रिया)।

**मम इति।** अन्वयः। एषः परन्तपः ममएव वचनात् ब्राह्मणार्थे नगरस्य मोक्षाय च महत् कृत्यं करिष्यति। ९६॥

व्याख्या। एषः (सर्व्व-कर्त्ता-विश) परन्तपः=परान् शत्रून् तापयति इति (पर-तापि+ख, कर्म्मवः च) शत्रुनिसूदनः (कर्त्ता-विश) भीमः इति शेषः (कर्त्ता) मम एव वचनात्=(ल्यप्लोपे-५मी) मम वाक्यात् मम आज्ञां प्राप्य इत्यर्थः न तु स्वेच्छया इति भावः ब्राह्मणार्थे=ब्राह्मणस्य रक्षणस्य उपकाराय (अधि) नगरस्य=एकचक्रायाः (मोक्षाय इत्यस्य कर्म्म-६ष्ठी) मोक्षाय=वकराक्षसोपद्रवात् विमोचनाय (तादर्थ्ये ४र्थी)

महत्=अतिगुरु ( कर्म्म-विण ) कृत्यं—वकवधरूपं कार्य्यं (कृ-धा+क्यप्, कर्म्म-२या ) करिष्यति=साधयिष्यति ( क्रिया )। ९६॥

वाच्यान्तरं। अनेन परन्तपेन कृत्यं करिष्यते। ९६॥

कुन्ती बोली कि—परन्तप भीम मेरी बात पर यह बड़ा काम ब्राह्मण को और इस नगर की मुक्तिके लिए करेगा। ९६॥

(96.) Kunti said:—"It is, at my request, that the foe-chastising Bhim is going to do this great deed for the good of the Brahman and the deliverance of this city."

युधिष्ठिरः ( कर्त्ता ) उवाच ( क्रिया )।

**किमिदं इति।** अन्वयः। भवत्या तीक्ष्णं दुष्करं इदं साहसं किं कृतं। साधवः पुत्रस्य परित्यागं नहि प्रशंसन्ति। ९७॥

व्याख्या। भवत्या=त्वया ( कर्त्ता-३या ) तीक्ष्णं=तीव्रं (कर्म्म-विण) दुष्करं=अतिदुःसाध्यं ( कर्म्म विण ) इदं ( सर्व्व ) साहसं=सहसा क्रियते यत् ( सहसा-कृ+अण् ) अविमृश्यकारित्वं ( कर्म्म-१मा ) किं—किमर्थं ( क्रिया-विण ) कृतं=अनुष्ठितं ( कर्म्मणि क्त, क्रिया ), साधवः=सज्जनाः ( कर्त्ता ) सुतस्य=स्वसुतस्य ( परित्यागं इत्यस्य-कर्म्म-६ष्ठी ) परित्यागं=विसर्ज्जनं (परि-त्यज-धा+घञ्, कर्म्म-२या ) न हि ( अव्य ) प्रशंसन्ति=अनुमोदन्ते ( प्र-शंस-धा+लट्, क्रिया )। ९७॥

वाच्यान्तरं। भवती साहसं कृतवती, साधुभिः परित्यागः न प्रशंस्यते। ९७॥

युधिष्ठिर ने कहा कि—यह क्या दुष्कर कठिन साहस का काम आपने किया; साधु पुत्रके त्याग को भला नहीं कहते। ९७॥

(97.) Yudhisthira said,—what uncommon and awful courage is this on your part! Good men do not approve of the giving up of a son,

**कथं इति ।** अन्वयः । परसुतस्य अर्थे स्वसुतं कथं त्यक्तुं इच्छसि । त्वया पुत्रत्यागात् लोकवेदविरुद्धं हि कृतं । ९८ ॥

व्याख्या । परसुतस्य=परस्य (६तत्) सुतः तस्य अपरजनपुत्रस्य (सम्बो) अर्थे=निमित्ते (अधि) स्वसुतं=स्वस्याः (६तत् पुंवद्भावः) सुतं निजतनयं (कर्म्म) कथं=केन हेतुना (अव्य) त्यक्तुं=वकमुखे अर्पयितुं (त्यज-धा+तुमुन्) इच्छसि=अभिलषसि (क्रिया) त्वं इति शेषः । त्वया (कर्त्ता-३या) पुत्रत्यागात्=पुत्रस्य (६तत्) त्यागः तस्मात् (हेत्वर्थे-५मी) लोकवेदविरुद्धं=लोकः च वेदाश्च (द्वन्द्व) तेषु विरुद्धं (७तत्) लोकाचारविरुद्धं वेदनिषिद्धं च इत्यर्थः (कर्म्म-विश) कर्म्म इति शेषः (कर्म्म) हि (निश्चये-अव्य) कृतं=विहितं (कर्म्मणि-क्त, क्रिया) मया कदापि न लोके दृष्टं नापि वेदे श्रुतं, यत् माता परपुत्रार्थं स्वपुत्रं मृत्युमुखे अर्पयति इति सरलार्थः । ९८ ॥

वाच्यान्तरं । त्वया इष्यते, त्वं लोकवेदविरुद्धं कृतवती । ९८ ॥

आप दूसरे के बेटे के लिए क्यों अपने बेटेको त्याग करना चाहती हैं, पुत्र को त्याग करके आप ने लोक और वेद के विरुद्ध काम किया । ९८ ॥

(98.) How can you wish to give up your own son for that of another By giving up your son you have acted against custom and the Vedas.

**यस्य इति ।** अन्वयः । यस्य बाहू समाश्रित्य सर्व्वे (वयं) सुखं शयामहे, क्षुद्रैः अपहृतं राज्यं पुनः हि आजिहीर्षामहे । ९९ ॥

व्याख्या । यस्य (सम्ब) बाहू=भुजौ (कर्म्म-२या-२व) समाश्रित्य=अवलम्ब्य यस्य भुजवीर्य्यरक्षिताः इत्यर्थः (सम्-आ-श्रि-धा+ल्यप्) सर्व्वे वयं (कर्त्ता) सुखं—निरुद्वेगं यथा तथा (क्रिया-विश) शयामहे=निरुपद्रवं कालं अतिवाहयामः (शी धा+लट्, क्रिया) क्षुद्रैः=नीचाशयैः दुर्य्योधनादिभिः (अपहृतं इत्यस्य कर्त्ता-३या) अपहृतं=दग्धु-

कामेन दुर्य्योधनेन अस्मान् छलेन वारणावतं संप्रेष्य आत्मसात् कृतं ( अप-हृ-धा+कर्म्मणि-क्त, कर्म्म-विण ), राज्यं ( कर्म्म ) पुनः हि भूयः ( अव्य ) आजिहीर्षामहे=प्रत्याहर्तुं इच्छामः ( आ-हृ-धा+सन्=आजिहीर्ष-धा+लट्, क्रिया ) वयं इति शेष. । ९९ ॥

वाच्यान्तरं । सर्व्वैः शय्यते ; आजिहीर्ष्यते । ९९ ॥

जिस के भुजा के वल को आश्रय करके हम आनन्द से सोते हैं, और क्षुद्र शत्रुओं से लिए हुए राज्य को फिर उद्धार करना चाहते हैं । ९९ ॥

(99.) Him, by the help of whose arms we sleep in peace and hope to recover the kingdom of which we have been robbed by low-minded fellows.

**यस्य इति ।** अन्वयः । दुर्य्योधनः अमितौजसः यस्य वीर्य्यं चिन्तयन् दुःखात् शकुनिना सह सर्व्वाः रजनीः न शेते । १०० ॥

व्याख्या । दुर्य्योधनः=दुःखेन युध्यते असौ ( दुर-युध-धा+कर्म्मणि-भाषायां युच् ) धृतराष्ट्रस्य ज्येष्ठपुत्रः (कर्त्ता) अमितौजसः=अमितं अपरिमितं ओजः वलं यस्य तस्य ( वहुव्री, सम्ब-विण ) यस्य-भीमस्य ( सम्ब ) वीर्य्यं=वीरस्य भावः ( वीर-ञ+ष्यण ) वलं (कर्म्म) चिन्तयन्= अनुक्षणं ध्यायन् ( चिन्ति-धा+शतृ ) दुःखात्=ईर्षाजनितसन्तापात् ( हेत्वर्थे-५मी) शकुनिना=तन्नामकस्वीयमातुलेन ( सहयोगे-३या ) सह=सार्द्धं ( अव्य ) सर्व्वाः=समस्ताः ( कर्म्म-विण, २या-३व ) रजनीः=रात्रीः व्याप्य ( अत्यन्त-संयोगे-२या-३व ) न शेते=न निद्राति ( शी-धा+लट्, क्रिया ), चिन्तया जातसंज्वरः जागरदेव निशाः यापयति इत्यर्थः । १०० ॥

वाच्यान्तरं । दुर्य्योधनेन चिन्तयता न शय्यते । १०० ॥

जिस महावल के वल को सोचता हुआ दुर्य्योधन दुःख से शकुनि के साथ सारी रात नहीं सोता है । १०० ॥

(100.) The recollection of whose boundless valour pains Duryodhan and Sakuni so much that they pass sleepless nights.

**यस्येति।** अन्वयः। वयं यस्य वीरस्य वीर्य्येण जतुगृहात् अन्येभ्यः पापेभ्यः च एव मुक्ताः, पुरोचनः निहतः च। १०१॥

व्याख्या। वयं ( कर्म्म-१मा ) यस्य ( सर्व्व-सम्ब विण ) वीरस्य शूरस्य ( सम्ब ) वीर्य्येण=शौर्य्येण पराक्रमेण इति यावत् ( कर्त्ता-३या ) जतुगृहात्=जतुभिः लाक्षाशणसर्ज्जरसादिभिः अग्न्युद्दीपकैः द्रव्यैः दुर्य्योधन-प्रेरितेन पुरोचनेन निर्म्मितं गृहं ( शाकपार्थिवादित्वात् मध्यपदलोपी कर्म्मधारयः ) तस्मात् ( अपा ) अन्येभ्यः=अन्यविधेभ्यः ( अपा-विण ) पापेभ्यः=शत्रुकृतनिकारेभ्य आपद्भ्यः इति वा ( अपा ) च एव ( अव्य ) मुक्ताः=मुक्तिं प्रापिताः ( मुच-धा+कर्म्मणि-क्त, क्रिया ) पुरोचनः= तन्नामकः दुर्य्योधननियोजितः जतुगृहनिर्म्माता (कर्म्म-१मा) निहतः=विनि-पातितः च ( नि-हन-धा+कर्म्मणि-क्त, क्रिया ) वीर्य्येण इति कर्त्तृ-पदम्। १०१॥

वाच्यान्तरं। यस्य वीर्य्यं अस्मान् मुक्तवत्, पुरोचनं निहतवत् च। १०१॥

जिस वीर के वीर्य्य से हम जतु गृह से और और आफत से बचे और जिसने पुरोचन को मारा। १०१॥

(101). By the prowess of which hero we have come out of the lac-house and other dangers and have killed Purachana;

**यस्य वीर्य्यं इति।** अन्वयः। ( वयं ) यस्य वीर्य्यं समाश्रित्य धृतराष्ट्रजान् निहत्य इमां वसुपूर्णां वसुन्धरां प्राप्तां मन्यामहे। १०२॥

व्याख्या। वयं इति कर्त्तृपदं ऊह्यं, यस्य=भीमस्य ( सम्ब ) वीर्य्यं= बलं ( कर्म्म ) समाश्रित्य=अवलम्ब्य यस्य पराक्रमेण इत्यर्थः ( सम्-आ-श्रि-

धा+ल्यप ) धृतराष्ट्रस्य अपत्यानि पुमांसः ( धृतराष्ट्र-जन धा+ड ) धृतराष्ट्रपुत्रान् दुर्य्योधनादीन् ( कर्म्म ) निहत्य=निपात्य ( नि-हन-धा+ल्यप ) इमां=परिदृश्यमानां ( सर्व्व कर्म्म-विण ) वसुपूर्णां=वसुभिः धनैः ( ३तत् ) पूर्णां ( कर्म्म-विण ) वसुन्धरां=वसूनि धरति या ( वसु-धृ-धा=खच्-वसु-स्त्रियां आप ) सा पृथिवी तां ( कर्म्म ) प्राप्तां=अधिगतां करतलगतां इत्यर्थः ( प्र-आप-धा+क्त, कर्म्म-विण ) मन्यामहे=अवगच्छामः ( मन-धा+लट आत्मने-उपु-३व, क्रिया ) । १०२ ॥

वाच्यान्तरं । अस्माभिः इयं वसुपूर्णा वसुन्धरा प्राप्ता मन्यते । १०२ ॥

जिस के वीर्य्य को आश्रय करके और धृतराष्ट्रों को मार के धन पूर्ण इस पृथिवी को अपने अधिकार में लाइ हुइ समझते हैं । १०२ ॥

(102.) With the help of whose powers we think as if we have occupied the earth which is full of treasures after having effected the destruction of the sons of Dhritarastra;

**तस्य इति ।** अन्वयः । त्वया कां बुद्धिं आस्थाय यस्य त्यागः व्यवसितः, दुःखैः गतचेतसः ते बुद्धिः विलुप्ता कच्चित् नु । १०३ ॥

व्याख्या । त्वया ( कर्त्ता-३या ) कां ( सर्व्व-कर्म्म-विण ) बुद्धिं= विवेचनां ( कर्म्म ) आस्थाय=आश्रित्य ( आ-स्था-धा+ल्यप, ) तस्य= भीमस्य ( त्यागः इत्यस्य कर्म्म-६ष्ठी ) त्यागः=राक्षससमीपे प्रेरणं ( त्यज-धा+घञ्, कर्म्म-१मा ) व्यवसितः=सङ्कल्पितः ( वि-अव-सो-धा+कर्म्मणि-क्त, क्रिया ) तादृशस्य त्यागव्यवसायः ते बुद्धिवैकल्यं व्यनक्ति इत्यर्थः, दुःखैः =क्लेशपरम्पराभिः ( कर्त्ता-३या ) विगतचेतसः=विगतं उपहतं चेतः यस्याः ( बहुव्री ) तस्याः विकृतचित्तायाः ( सम्ब विण ) बुद्धिः=विवेकः ( कर्म्म-१मा ) लुप्ता=लोपं प्रापिता: ( लुप-धा+कर्म्मणि-क्त, क्रिया ) कच्चित् नु=किंनु ( प्रश्ने अव्य ) । १०३ ॥

वाच्यान्तरं । त्वं त्यागं व्यवसितवती, दुःखं बुद्धिं लुप्तवत् । १०३ ॥

आपने क्या समझ के उस भीम को त्याग करना ठैराया है, क्या आप की वुद्धि दुःख से खो गई है, मन विकृत हो गया है। १०३ ॥

कुन्ती ( कर्त्ता ) उवाच ( क्रिया )। [ कुन्त्या ऊचे ]

(103.) From what consideration have you made up your mind to give him up. Have you lost your reason ? Has misfortune impaired your intellect ?

**युधिष्ठिरः इति ।** अन्वयः। ( हे ) युधिष्ठिरः त्वया वृकोदरे सन्तापः न कार्य्यः, मया च वुद्धिदौर्व्वल्यात् अयं व्यवसायः न कृतः। १०४ ॥

व्याख्या। हे युधिष्ठिर ( सम्बो ) त्वया ( कर्त्ता-३या ) वृकोदरे= वृकः वृकनामा अग्निः उदरे जठरे यस्य ( वहुव्री यस्य तीक्ष्णो वृकोनाम जठरो हव्यवाहनः इति प्रमाणं ) तस्मिन् भीमे ( अधि ) सन्तापः=दुःखं भीमार्थं उद्वेगः इत्यर्थः ( कर्म्म-१मा ) न कार्य्यः—न कर्त्तव्यः ( कर्म्मणि-ण्यत्, क्रिया), मया च ( कर्त्ता-३या) वुद्धिदौर्व्वल्यात्=दुर्व्वलस्य भावः दौर्व्वल्यं ( दुर्व्वल-अ+ष्यण् ) वुद्धेः ( ६तत् ) दौर्व्वल्यं तस्मात् वुद्धिवैकल्यात् ( हेतौ ५मी ) अयं ( सर्व्व-कर्म्म-विश ) व्यवसायः भीमत्यागरूपः कर्त्तव्यनिश्चयः ( वि-अव-सो धा+घञ्, कर्म्म-१मा ) न कृतः=न विहितः ( कर्म्मणि-क्त, क्रिया )। १०४ ॥

वाच्यान्तरं। त्वं सन्तापं न कुर्य्याः, मया व्यवसायं न कृतवती। १०४ ॥

कुन्ती ने कहा कि हे युधिष्ठिर वृकोदर के लिए सन्ताप न करो, मैं ने वुद्धि की दुर्व्वलता से यह निश्चय नहीं किया है। १०४ ॥

(104.) Kunti said,—Yudhisthira ! Be not uneasy on account of Bhim. It is not owing to an impaired intellect that I am led to this act.

**इह इति ।** अन्वयः। ( हे ) पुत्र, वयं धार्त्तराष्ट्राणां अज्ञाताः

सत्कृता: वीतमन्यव: ( सन्त: ) इह विप्रस्य भवने सुखोषिता:, हे पार्थ, मम तस्य इयं प्रतिक्रिया प्रसमीक्षिता: । १०५ ॥

व्याख्या । पुत्र=हे तनय: युधिष्ठिर ( सम्बो ) वयं ( कर्त्ता ) धार्त्त-राष्ट्राणां=धृतराष्ट्रपुत्राणां दुर्य्योधनादीनां ( अज्ञाता: इत्यस्य कर्त्ता-६ष्ठी ) अज्ञाता: = अविदिता: ( न-ज्ञा-कर्म्मणि-क्त ), सत्कृता:=विशेष समादृता: ( सत्-कृ-धा+कर्म्मणि-क्त ) वीतमन्यव:=वीत:=विगत: ( वि-इ-धा+क्त ) मन्यु: शोक: याषां ( बहुव्री ) तथोक्ता: सन्त: ( कर्त्ता-विण ) इह= एकचक्रायां ( अधि-अव्य ) विप्रस्य = अस्य ब्राह्मणस्य ( सम्ब ) भवने=गृहे ( अधि ) सुखोषिता:=सुखं यथातथा उषिता: कृतनिवासा: ( सुप्सुपेति समास: ) सुखेन अवस्थानं कुर्म्म: इत्यर्थ: ( वच-धा+कर्त्तरि-क्त, क्रिया ) । पार्थ=हे पृथातनय युधिष्ठिर (सम्बो, मम पुत्रत्वात् तव एवं वक्तु न उचितं इति पार्थसम्बोधनतात्पर्य्यं ) मम=मया ( कर्त्ता-६ष्ठी आर्ष: ) तस्य= पूर्व्वकथितस्य उपकारस्य सुखेन वासादे: इत्यर्थ: ( सम्ब ) इयं=भीमेन करिष्यमाणा ( सर्व्व-कर्म्म-विण ) प्रतिक्रिया=बकराक्षसात् परित्राणरूप: प्रत्युपकार: ( कर्म्म-१मा ) प्रसमीक्षिता=सम्यक् विविच्य स्थिरीकृता ( प्र-सम्-ईक्ष धा+कर्म्मणि-क्त, क्रिया ) । १०५ ॥

वाच्यान्तरं । अज्ञाताभि: वीतमन्युभि: अस्माभि: सुखोषिता अहं इमां प्रतिक्रियां प्रसमीक्षितवती । १०५ ॥

हे पुत्र ब्राह्मण के इस घर में धृतराष्ट्रों के अज्ञातानुसार आदर भाव और आनन्द से विना क्लेश के रहते हैं ; मैं ने उस ब्राह्मण को यह प्रति-क्रिया सोची है । १०५ ॥

(105.) O son ! I think it a requital of the kindness of this Brahman who has welcomed us and in whose house we have dwelt happily, remaining as we have done, undetected by the sons of Dhritarastra.

एतावान् इति । अन्वयः । यस्मिन् कृतं न नश्यति, एतावान् एव पुरुषः । अन्यः अस्य यावत् च कुर्य्यात्, ततः बहुगुणं कुर्य्यात् ।१०६॥

व्याख्या । यस्मिन् पुरुषे ( सर्व्व-आध ) कृतं=उपकृतं अन्यकृतः उपकारः इत्यर्थः ( कर्त्ता-१मा ) न नश्यति=न निष्फलं भवति तस्य उपकारः स्मर्य्यते इत्यर्थः ( नश-धा+कर्त्तरि-लट, क्रिया ) एतावान्=ईदृशः ईदृशगुणोपेतः पुरुषः ( १मा-विश ) पुरुषः=पुरुषशब्दवाच्यः ( प्रातिपदिकार्थे-१मा ) । अन्यः=( उपकर्त्ता ( कर्त्ता ) अस्य=अपकृतस्य ( सम्ब ) यावत्=यत्परिमाणं उपकृतं ( कर्म्म, वलन्त निपातः ) कुर्य्यात् =विदध्यात् ( क्रिया ) सः=उपकृतः ( सर्व्व-कर्त्ता ) ततः=तस्मात् अन्यकृतात् उपकारात् ( यस्मादधिकं इति ५मी ) बहुगुणं=समधिकं उपकारं ( कर्म्म ) कुर्य्यात् । यः उपकृतं स्मरति, स एव तावत् पुरुषशब्दवाच्यः उपकृतेन उपकर्त्तुः समधिकः उपकारः कर्त्तव्यः इति विशदार्थः । १०६ ॥

वाच्यान्तरं । कृतेन न नश्यते, अन्येन यावत् क्रियेत । १०६ ॥

वही पुरुष है जो और के किये हुये को नहीं भूलता, और उसने जितना उपकार किया हो उस से बहुत ज्यादे बढके करना चाहिये ।१०६

(106.) That person deserves the name of man in whom service done is not lost ; one should do much more in return for the services done to him by another.

दृष्टा इति । अन्वयः । येन गजप्रख्याः यूयं वारणावतात् निर्व्यूढाः, तदा जतुगृहे भीमस्य महत् विक्रान्तं दृष्टा भीमस्य तत् बलं प्रज्ञया ज्ञात्वा ( च ) ( हे ) पाण्डव ततः अहं विप्रस्य प्रतिकार्य्ये मतिं कृतवती । १०७ ॥

व्याख्या । येन=भीमेन ( सर्व्व कर्त्ता-३या ) गजप्रख्याः=गजेन प्रख्याः तुल्याः अतिदुर्व्वहाः इति भावः ( कर्म्म-विश ) यूयं=मया सह सं

भर्ज्जुनादयश्च ( कर्म्म-१मा ) वारणावतात्=वारणावतनगरस्थजतुग्टहात् (अपा) निर्य्यूढ़ाः=निष्क्रामिताः=युगपत् पृष्ठं भारोप्य सर्व्वं यूयं निज द्रवं प्रदेशं प्रापिताः इत्यर्थः ( निर-वि-रूह-धा+कर्म्मणि-क्त, क्रिया ) तदा=तदानीं जतुग्टहात् प्रस्थानकाले ( अधि-अव्य ) जतुग्टहे ( अधि ) भीमस्य ( सम्ब ) महत्=विपुलं ( कर्म्म विश ) विक्रान्तं=विक्रमं ( कर्म्म-वि-क्रम-धा+भावे-क्त ) दृष्ट्वा=विलोक्य ( असमा ) हे पाण्डव=पाण्डोरपत्यं पुमान् तत्सम्बोधने हे पाण्डुपुत्र युधिष्ठिर ( सम्बो ) प्रज्ञया=बुद्ध्या ( करण ) भीमस्य ( सम्ब ) तत्=पूर्व्वानुभूतं ( सर्व्व-कर्म्म-विश ) वलं=शक्तिं ( कर्म्म ) ज्ञात्वा=मत्वा इत्यर्थः ( ज्ञा-धा+क्त्वा ) ततः=भरणानन्तरं ( ५मी+तस, अव्य ) अहं=कुन्ती ( कर्त्री ) विप्रस्य=ब्राह्मणस्य ( सम्ब ) प्रतिकार्य्ये=प्रत्युपकारे ( अधि ) मतिं=प्रतिकर्त्तुं मानसं ( कर्म्म ) कृतवती =अकार्षम् ( कृ-धा+कर्त्तरि क्तवतु, क्रिया )। १०७-८॥

वाच्यान्तरं। यः गजप्रख्यान् युष्मान् निर्य्यूढवान्, मया मतिः कृता। १०७-८॥

जो भीम हाथी की बराबर तुम सब को वारणावत से निकाल लाया उस के उस बड़े विक्रम को जतुग्टह में देख के अपनी अकल से उस भीम का बल जाने के इस ब्राह्मण के शत्रु को मार के लिये निश्चय किया है। १०७-८॥

(107.8.) Oh Pandava! when I witnessed the courage displayed in the notorious wax-house by Bhim by whom yourselves being elephant-like, were borne away from Baranabat, being at the same time aware of his physical strength by my own experience, I made up my mind to avenge the wrongs done to the Bramhin.

नेदं इति। अन्वयः। मया इदं लोभात् न, अज्ञानात् न, मोहात् च न विनिश्चितं, बुद्धिपूर्व्वं तु धर्म्मस्य व्यवसायः कृतः। १०९॥

व्याख्या। मया ( कर्त्ता-३या ) इदं=विप्रस्य उपकाररूपं कार्य्यं ( सर्व्व-कर्म्म-१मा ) लोभात्=विप्रदेयप्रभूतधनलोभात्, वकवधेन एतद्राष्ट्राधिकारलाभेच्छया वा ( हेतौ-५मी ) न विनिश्चितं=न स्थिरीकृतं ( वि-निर्-चि-धा+कर्म्मणि-क्त, क्रिया ) अज्ञानात्=न ज्ञानं ( नञ-तत् ) तस्मात् सहसा अबुद्धा इत्यर्थो ( हेतौ-५मी ) न विनिश्चितं ( क्रिया ) मोहात्=वुद्धिभ्रंशात् च ( मुह-धा+अल, हेतौ-५मी ) न विनिश्चितं ( क्रिया ), तु=किन्तु ( अव्य ) वुद्धिपूर्व्वं=वुद्धिः पूर्व्वं यस्मिन् तत् यथा तथा लोभाद्यनुपहतचित्तया मया जानतः एव इत्यर्थः ( क्रिया-विश ) धर्म्मस्य=प्रत्युपकाररूपधर्म्मस्य (व्यवसायः इत्यस्य कर्म्म ६ष्ठी) व्यवसायः=अनुष्ठानोद्यमः ( कर्म्म १मा ) कृतः=विहितः (कर्म्मणि-क्त, क्रिया) ।१०९॥

वाच्यान्तरं । अहं व्यवसायं कृतवती । १०९ ॥

येह न लोभ न अज्ञान और न मोह से ठैराया गया है। येह प्रत्युपकाररूप धर्म्म का निश्चय मैंने अपनी समझ से किया है। १०९ ॥

(109.) It is not avarice, nor folly nor infatuation that has led me to this step. I am going to do this good act after due deliberation.

अर्थौ इति। अन्वयः। ( हे ) युधिष्ठिर द्वौ अपि अर्थौ निष्पन्नौ भविष्यतः, वासस्य प्रतीकारः च महान् धर्म्मः च चरितः। ११० ॥

व्याख्या। ( हे ) युधिष्ठिर द्वौ अपि ( संख्यावाचक-कर्म्म-विश ) अर्थौ=प्रयोजने ( कर्त्ता-१मा-२व ) निष्पन्नौ=सम्पादितौ ( निर्-पद-धा+क्त ) भविष्यतः ( क्रिया ), किं तद्द्वयं इत्यपेक्षायां आह वासस्य इति। वासस्य=अस्मिन् विप्रभवने सुखेन अस्माकं अवस्थितेः ( कर्म्म-६ष्ठी ) प्रतीकारः=प्रत्युपकारः ( प्रति-कृ-धा+घञ, उपसर्गस्य दीर्घः, कर्म्म-१मा) महान्=विपुलः ( कर्त्ता-विश ) धर्म्मः च=वकवधेन ब्राह्मणरक्षारूपः

धर्म्मः च (कर्त्ता) चरितः=कृतः (चर-धा+कर्म्मणि-क्त) भविष्यतीति शेषः। ११० ॥

वाच्यान्तरं। द्वाभ्यां अर्थाभ्यां निष्पन्नाभ्यां भविष्यते, प्रतीकारेण धर्म्मेण च चरितेन भविष्यते। ११० ॥

हे युधिष्ठिर इस से दो मतलब निकलेंगे एक ब्राह्मण के घर में रहते का प्रत्युपकार और दुसरे बड़ा धर्म्म। ११० ॥

(110.) O Yudhisthira! Two objects will be gained by this act, one of which is delivering this place where we reside of its pest, and the other the performance of a virtuous act.

युधिष्ठिरः (कर्त्ता) उवाच (क्रिया), [युधिष्ठिरेण ऊचे]।

**उपपन्नं इति।** अन्वयः। (हे) मातः त्वया बुद्धिपूर्व्वकं आर्त्तस्य ब्राह्मणस्य अनुक्रोशात् यत् इदं एतत् कृतं इदं उपपन्नं। १११ ॥

व्याख्या। मातः हे जननि (सम्बो) त्वया (कर्त्ता-३या) बुद्धिपूर्व्वकं=बुद्धिः पूर्व्वं यस्मिन् (बहुव्रीहौ कः) तत् यथा तथा सम्यक् विविच्य इत्यर्थः (क्रिया-विण) आर्त्तस्य=कातरस्य सम्बो-विण) ब्राह्मणस्य=द्विजस्य आर्त्ते ब्राह्मणे इत्यर्थः (सम्बन्धविवक्षया-६ष्ठी) अनुक्रोशात्—अनुकम्पया (हेतौ-५मी, कृपा दयानुकम्पा स्यात् अनुक्रोशः इत्यमरः) यत इदं एतत्=भीमप्रेषणरूपं कार्य्यं (कर्म्म-१मा) कृतं=अनुष्ठितं (कर्म्मणि-क्त, क्रिया) इदं=तव कार्य्यं (कर्त्ता-१मा) उपपन्नं=युक्तं (उप-पद-धा+कर्त्तरि-क्त, क्रिया)। १११ ॥

वाच्यान्तरं। त्वं यत् इदं एतत् कृतवती, अनेन उपपन्नं। १११ ॥

युधिष्ठिर ने कहा, माता आपने जो बुद्धि पूर्व्वक इस दुःखित ब्राह्मण पर दया करके जो कुछ किया है वह बहुत ठीक है। १११ ॥

(111.) Yudhisthira said.—mother! What you have done out of pity for a Brahman in distress and after much deliberation is indeed a good act.

ध्रुवं इति। अन्वयः। अयं भीमः पुरुषादकं निहत्य ध्रुवं एष्यति, यत् ब्राह्मणस्य अर्थे सर्व्वथा अनुक्रोशवती असि। ११२॥

व्याख्या। अयं (सर्व्व-कर्त्ता-विण) भीमः (कर्त्ता) पुरुषादकं=पुरुषं अत्ति यः (पुरुष-अद-धा+ण्वुल) तं नरमांसभक्षकं बकराक्षसं इत्यर्थः (कर्म्म) निहत्य=(नि-हन-धा+ल्यप्) ध्रुवं=असंशयं (क्रिया-विण) एष्यति=स्वयं अक्षतशरीरः प्रत्यागमिष्यति (आ-इ-धा+लृट्, क्रिया)। तत्र कारणमाह यदिति। यत्=यस्मात् (अव्य) ब्राह्मणस्य=विप्रस्य (सम्ब) अर्थे=निमित्ते (अधि) सर्व्वथा=सर्व्वप्रकारेण (अव्य) अनुक्रोशवती=दयावती (अनुक्रोश-श+वतुप्, स्त्रियां ईप, कर्त्ता-विण) असि=भवसि त्वं इति शेषः (अस्-धा+लट्-२पु-१व, क्रिया), ब्राह्मण-त्राणजनितेन पुण्येन भीमः ते कृतकार्य्यः प्रत्यागमिष्यति इत्यर्थः। ११२॥

वाच्यान्तरं। अनेन भीमेन एष्यते, अनुक्रोशवत्या भूयते। ११२॥

अब ब्राह्मणके ऊपर आपकी इतनी दया हुई तब निश्चय यह भीम उस नरभक्षक राक्षसको मारके लौट आएगा। ११२॥

(112.) When you have felt pity for the Brahman, it is certain that this Bhima will return safe after killing the man-eating Rakshasa.

तथा इति। अन्वयः। नगरवासिनः नराः तु यथा इदं न विन्देयुः, तथा अयं ब्राह्मणः वाच्यः यत्नतः परिग्राह्यः च। ११३॥

व्याख्या। नगरवासिनः=नगरे एकचक्रायां वसन्ति ये (नगर-वस्-धा+णिन्) ते (कर्त्ता-विण) नराः तु=मनुष्याः तु पौराः इत्यर्थः (कर्त्ता) यथा=येन प्रकारेण (अव्य) इदं=एतत् घटनं भीमकर्तृकराक्षसनिधनं इत्यर्थः (कर्म्म) न विन्देयुः=न जानीयुः (विद-धा+विधि-प्रपु-३व, क्रिया), तथा=तेन प्रकारेण (अव्य) अयं (सर्व्व-कर्म्म-विण) ब्राह्मणः=विप्रः (कर्म्म-१मा) वाच्यः=कथनीयः उपदेष्टव्यः इति यावत्

( वच-धा+कर्म्मणि-ण्यत्, क्रिया )। यव्रतः=यत्नेन (३या-तत्) परिग्राह्यः=एषः उपदेशः ग्राहणीयः, तथा करिष्यामि इति स्वीकारयितव्यः च इति यावत् ( परि-ग्रह-धा+णिच्+कर्म्मणि-ण्यत् ) त्वया इति शेषः । ११३ ॥

वाच्यान्तरं । नगरवासिभिः नरैः इदं न विन्द्येत, इमं ब्राह्मणं वक्ष्यसि, परिग्राहयिष्यसि । ११३ ॥

आप यत्नके साथ उस ब्राह्मण से कह के यह स्वीकार करा लीजिये कि, यह वृत्तान्त नगर के लोग न जानें । ११३ ॥

(113.) Take care to tell the Brahman not to divulge this to the citizens and obtain from him a promise to that effect.

**ततः इति ।** अन्वयः । ततः रात्र्यां व्यतीतायां पाण्डवः भीमसेनः अन्नं आदाय तत्र ययौ, यत्र असौ पुरुषादकः ( तिष्ठति स्म ) । ११४ ॥

व्याख्या । ततः=युधिष्ठिरोपदेशानन्तरं (५मी+तस्, अव्यं) रात्र्यां= निशायां ( भावाधि ) व्यतीतायां अतिक्रान्तायां सत्यां प्रभाते इत्यर्थः ( वि-अति-इ-धा+कर्त्तरि-क्त ) पाण्डवः=पाण्डुपुत्रः ( कर्त्ता-विण ) भीमसेनः ( कर्त्ता ) अन्नं=तत् पूर्व्वोक्तभक्ष्यं ( कर्म्म ) आदाय=गृहीत्वा (असमा) तत्र=तस्मिन् स्थाने ( अधि-अव्य ) ययौ=जगाम ( या धा+लिट-मपु १व, क्रिया ) यत्र=यस्मिन् स्थाने-( अधि-अव्य ) असौ ( सर्व्व-कर्त्ता-विण ) पुरुषादकः=राक्षसः वकः ( कर्त्ता ) तिष्ठति स्म इति शेषः । ११४ ॥

वाच्यान्तरं । पाण्डवेन भीमसेनेन ययै, अमुना पुरुषादकेन स्थीयते स्म । ११४ ॥

अनन्तर रात बीतने पर पाण्डुपुत्रभीमसेन खाने की चीजों को लेके वहां गया, जहां वह नरभक्षक राक्षस रहता था । ११४ ॥

(114.) Then at the dawn of day Bhimsena, the son of Pandu went to the residence of the man-eating Rakshasa with his food.

**आसाद्य इति ।** अन्वयः। ततः बली पाण्डवः तु तस्य रक्षसः वनं आसाद्य तत् अन्नं उपपादयन् (सन्) नाम्ना आजुहाव ।११५॥

व्याख्या। ततः—तदनन्तरं (अव्य) बली=बलवान् (कर्त्ता विश) पाण्डवः तु=पाण्डुपुत्रः भीमः च (कर्त्ता) तस्य (सर्व्व-सम्ब-विश) रक्षसः=राक्षसस्य वकस्य (सम्ब) वनं=आवासभूमिं (कर्म्म) आसाद्य=प्राप्य (आ-सद्-धा+णिच्+ल्यप) तत्=पूर्व्वोक्तं (सर्व्व कर्म्म-विश) अन्नं=भक्ष्यं (कर्म्म) उपपादयन्=भक्षयन् सन् (उप-पद-धा+णिच+शट) नाम्ना (प्रकृत्यादिभ्यः श्या) आजुहाव=क्वासि वक राक्षस एहि इति तं आहूतवान् (आ-ह्वे+लिट, क्रिया)। ११५॥

वाच्यान्तरं। बलिना पाण्डवेन आजुहुवे। ११५॥

पाण्डुतनय उस राक्षस के रहने के वन में जाके उन सब खाने की चीजों को खाने और उस का नाम लेके पुकारने लगा। ११५॥

(115.) The son of Pandu, having reached the forest where the Rakshasa resided, called him by his name, while he himself began to eat the food (he had brought.)

**ततः सः इति ।** अन्वयः। ततः क्रुद्धः महाकायः लोहिताक्षः करालः च लोहितश्मश्रुमूर्द्धजः आकर्णात् भिन्नवक्त्रः च शङ्कुकर्णः विभीषणः सः राक्षसः तदा भीमस्य वचनात् सुसंक्रुद्धः अतएव महावेगः मेदिनीं दारयन् इव भ्रुकुटीं त्रिशिखां कृत्वा दशनच्छदं संदश्य (तत्र) आजगाम, यत्र भीमः व्यवस्थितः। ११६-१७-१८॥

व्याख्या। ततः=आह्वानानन्तरं (अव्य) क्रुद्धः=कोपनस्वभावः (क्रुध-धा-+क्त, कर्त्ता-विश) महाकायः=महान् कायः यस्य (बहुव्री) सः प्रकाण्डशरीरः (कर्त्ता-विश) लोहिताक्षः=लोहिते क्षतः रक्तवर्णे

अक्षिणी चक्षुषी यस्य ( बहुव्री ) सः तथोक्तः ( कर्त्ता विण ) करालः॥ दन्तुरः विकटदशनः इत्यर्थः ( कर्त्ता-विण, करालो दन्तुरे तुङ्गे इत्यमरः ) लोहितश्मश्रुमूर्द्धजः=श्मश्रुणि दाढ़िकाः च मूर्द्धजाः केशाः च श्मश्रुमूर्द्धजं ( प्राण्यङ्गत्वात् समाहारद्वन्द्व ) लोहितं रक्तवर्णं श्मश्रुमूर्द्धजं यस्य ( बहुव्री ) सः ( कर्त्ता-विण ) आकर्णात्=कर्णपर्य्यन्तं ( आङ्योगे-५मी ) भिन्नवक्त्रः च=भिन्नं विदीर्णं विस्तृतिं आपद्यमानं इत्यर्थः वक्त्रं मुखविवरं यस्य ( बहुव्री ) सः ( कर्त्ता-विण ) शङ्कुकर्णः=शङ्कुवत् कर्णौ यस्य ( बहुव्री ) स तथोक्तः (कर्त्ता-विण ) विभीषणः=भयङ्करः (कर्त्ता-विण) सः राक्षसः= वकराक्षसः ( कर्त्ता ) तदा=तस्मिन् काले ( तद-श्र+७मी+दा, अधि-अव्य ) भीमस्य ( सम्ब ) वचनात्=वचनं आकर्ण्य ( ल्यप्लोपे-५मी ) सुसंक्रुद्धः—नितरां परिकुपितः ( कर्त्ता-विण ) अतएव महावेगः=महान् वेगः यस्य ( बहुव्री ) सः अतिवेगेन आगच्छन् इत्यर्थः (कर्त्ता-विण) अतएव मेदिनीं=पृथिवीं ( दारयन् इत्यस्य कर्म्म ) दारयन् इव=विदीर्णां कुर्व्वन् इव पादन्यासेन धरां नमयन् इव इति यावत् ( दृ-धा+णिच-शतृ ) भ्रुकुटीं भ्रुवः कुटी ( एतत् भ्रकुटी इति पदद्वयं ) भ्रूभङ्गं ( कृत्वा इत्यस्य कर्म्म) त्रिशिखां=तिस्रः शिखाः रेखाः यस्यां ( बहुव्री ) तां (कर्म्म-विण ) कृत्वा=विधाय ( असमा ) दशनच्छदं—दशनाः छाद्यन्ते अनेन ( छद-धा+णिच्+घञ ) तं ओष्ठं ( सन्दश्य इत्यस्य कर्म्म ) सन्दश्य= दन्तैः निपीड्य ( सम्-दन्-श्र-धा+ल्यप ) तत्र इति शेषः आजगाम= आययौ ( आ-गम+लिट, क्रिया ) यत्र=यस्मिन् स्थाने ( अधि-अव्य ) भीमः ( कर्त्ता ) व्यवस्थितः=अन्नादिकं भूमौ निधाय भक्षयन् स्थितः (वि-अव-स्था-धा+कर्त्तरि-क्त, क्रिया )। त्रिभिः विशेषकं। द्वाभ्यां युग्मं तथा प्रोक्तं त्रिभिः श्लोकैः विशेषकं। कलापकं चतुर्भिः स्यात् तदूर्द्ध्वं कुलकं स्मृतमिति विधानात्। ११६-१७-१८॥

व्याख्यान्तरं। क्रुद्धेन महाकायेन लोहिताक्षेण करालेन लोहितश्म-

शुशूर्षेणेव भिन्नवक्त्रेण शङ्कुकर्णेन तेन राक्षसेन तदा सुसंक्रुद्धेन महावेगेन दारयता इव भाजम्मे, यत्र भीमसेन अवस्थितं। ११६-१७-१८ ॥

अनन्तर कोपन स्वभाव, महाकाय, रक्तनेत्र, दीर्घदन्त, लोहितश्मश्रु, ताम्रकेश, आकर्णविस्तृतमुखविवर, कीलककर्ण, भयङ्करमूर्त्ति राक्षस भीम की बातसे और भी कुपित हो दांतों से अधर काटता हुआ, माथे पर भ्रुकुटी करके मानो भूमि को विदीर्ण करता हुआ, जहां भीम था, वहां आया। ११६-१७-१८।

(116-17-18.) Then the Rakshasa, wrathful, huge-bodied, bloody-eyed, large-toothed, red-bearded, copper-haired, wedge-eared, with his mouth extending to the ears, and terrible to look upon, became still more enraged at the words of Bhima and biting his lips with his teeth, with a frowning forehead ridged into triple furrow, rushed to the place where Bhima was, as if making the earth burst by his impetuousity.

**भुञ्जानं इति।** अन्वयः। सः राक्षसः तं भीमसेनं अन्नं भुञ्जानं दृष्ट्वा क्रुद्धः (सन्) नयने विवृत्य इदं वचनं अब्रवीत्। ११९ ॥

व्याख्या। सः राक्षसः (कर्त्ता) तं भीमसेनं दृष्ट्वा इत्यस्य कर्म्म) अन्नं=भक्ष्यं भुञ्जानं=भक्षयन्तं (भुज-धा+कर्त्तरि-शानच्, कर्म्म-विश) दृष्ट्वा (असमा) क्रुद्धः सन् (कर्त्ता विश) नयने=नेत्रे (विवृत्य इत्यस्य कर्म्म-२या-२व) विवृत्य=घूर्णयित्वा (वि-वृत-धा+ल्यप) इदं=वक्ष्यमाणं (सर्ब्ब-कर्म्म-विश) वचनं=वाक्यं (कर्म्म) अब्रवीत्=अकथयत् (ब्रू धा+लङ् क्रिया) ११९ ॥

वाच्यान्तरं। तेन राक्षसेन क्रुद्धेन वचनं औच्यत। ११९ ॥

वह राक्षस भीमसेन को अन्न भोजन करते देख क्रोध से आंखे घुमाता हुआ बोला। ११९ ॥

(119.) The Rakshasa seeing Bhim eat his food said with his eyes rolling with rage,

कोऽयं इति। अन्वयः। कः अयं दुर्बुद्धिः यमसादनं यियासुः (सन्) पश्यतः मम मदर्थं उपकल्पितं इदं अन्नं भुङ्क्ते। १२०॥

व्याख्या। कः अयं (सर्व्व-कर्त्ता-विण) दुर्बुद्धिः=दुः दुष्टा बुद्धिः यस्य (बहुव्री) सः दुर्मतिः जनः इति शेषः (कर्त्ता) यमसादनं= सदनमेव= सादनं यमस्य अन्तकस्य सादनं यमसादनं यमगृहं (कर्म्म) यियासुः=यातुं इच्छुः (या-धा+सन+उ) गन्तुं इच्छुः सन् (कर्त्ता-विण) पश्यतः=अवलोकयतः (दृश-धा+शतृ) पश्यन्तं इत्यर्थः (६ष्ठी विण) मम=मां अनादृत्य इत्यर्थः (अनादरे ६ष्ठी) मदर्थः=मह्यं इदं (अर्थेन नित्यसमासः) मन्निमित्तं इत्यर्थः (क्रिया-विण) उपकल्पितं =प्रस्तुतं (कर्म्म विण) इदं=अग्रतः स्थितं (सर्व्व-कर्म्म-विण) अन्नं (कर्म्म) भुङ्क्ते=भक्षयति (भुज-धा+लट्, क्रिया)। १२०॥

वाच्यान्तरं। केन अनेन दुर्बुद्धिना यियासुना अन्नं भुज्यते। १२०॥

कौन दुर्बुद्धि यमालय में जाने के लिए मेरे सामने मेरे लिए लाया हुआ अन्न खाता है। १२०॥

(120.) What silly wretch desirious of going to the abode of Yama is eating before my own eyes the food brought for me.

भीमसेनः इति। अन्वयः। (हे) भारत, ततः भीमसेनः श्रुत्वा प्रहसन् इव तं राक्षसं अनादृत्य पराङ्मुखः (सन्) भुङ्क्ते एव।१२१॥

व्याख्या। भारत=हे जनमेजय (सम्बो) ततः=राक्षसदर्शनानन्तरं (५मी+तस्, अव्य) भीमसेनः (कर्त्ता) श्रुत्वा=वकवाक्यं निशम्य (असमा) प्रहसन् इव=उपहसन् इव (प्र-हस-धा+शतृ, अत्र राक्षसं पश्यतः भीमस्य भयाभावः एव उपहासव्यञ्जकः) तं राक्षसं (कर्म्म) अनादृत्य=अवज्ञाय (नञ्-आ-दृ धा+ल्यप) पराङ्मुखः=पराक् परावृत्तं मुखं यस्य (बहुव्री) सः विमुखवदनः सन् (कर्त्ता-विण) भुङ्क्ते एव=

भक्षयति एव ( भुज-धा+लट, क्रिया) बकराक्षसदर्शनेन अपि असम्भ्रान्तः भोजनरतः आसीत् इत्यर्थः । १२१ ॥

वाच्यान्तरं । भीमसेनेन प्रहसता इव पराङ्मुखेण भुज्यते । १२१ ॥

हे भारत ! अनन्तर भीमसेन यह बात सुन के हंस के उसे अनादर कर मुंह फेर के खाने लगा । १२१ ॥

(121.) O descendant of Bharat ! Then Bhim Sen hearing these words continued eating and expressed his contempt for the Rakshasa by turning away his face from him with a smile.

**वरं इति ।** अन्वयः । सः पुरुषादकः भीमसेनं जिघांसुः (सन्) भैरवं रवं कृत्वा उभौ करौ समुद्यम्य अभ्यधावत् । १२२ ॥

व्याख्या । पुरुषादकः=राक्षसः (कर्त्ता) भीमसेनं (कर्म्म) जिघांसुः=हन्तुं इच्छुः सन् ( हन-धा+सन=जिघांस-धा+उ, ( कर्त्ता-विण ) भैरवं =विकटं ( कर्म्म-विण ) रवं=शब्दं ( कर्म्म ) कृत्वा ( असमा ) उभौ= द्वौ ( कर्म्म-विण ) करौ=हस्तौ ( कर्म्म ) समुद्यम्य=उत्थाप्य ( सम् उत्-यम-धा=ल्यप ) अभ्यधावत्=भीमाभिमुखं धावतिस्म ( अभि-धाव-धा+लङ, क्रिया )। १२२ ॥

वाच्यान्तरं । तेन पुरुषादकेन जिघांसुना अभ्यधाव्यत । १२२ ॥

वह नरभक्षकराक्षस भयानक शब्द करके भीम को मारने के लिए भुजा उठा के दौड़ा । १२२ ॥

(122.) The man-eater with terrible yells rushed on with uplifted arms to kill Bhim.

**तथापि इति ।** अन्वयः । तथापि परवीरहा पाण्डवः वृकोदरः एनं परिभूय प्रेक्षमाणः ( सन् ) राक्षसं अन्नं भुङ्क्ते एव । १२३ ॥

व्याख्या । तथापि=बकस्य धावने अपि ( अव्य ) परवीरहा=परान् उत्कृष्टान् वीरान् हन्ति यः ( परवीर हन-धा-क्विप ) सः अतिप्रबल-

अत्र वीरनिसूदनः इत्यर्थः ( कर्त्ता-वि ) पाण्डवः=पाण्डुपुत्रः ( कर्त्ता-विण) वृकोदरः=वृकस्य उदरं इव उदरं यस्य ( बहुव्री ) सः भीमः ( कर्त्ता ) एनं=बकं ( कर्म्म, पश्चादुक्ती इदमः एनादेशः ) परिभूय=अवज्ञाय (परि-भू-धा+ल्यप ) प्रेक्ष्यमाणः=सावज्ञं पश्यन् ( प्र-ईक्ष-धा+कर्त्तरि-शानच ) राक्षसं=रक्षसः इदं ( रक्षस-श + ष्ण ) बकराक्षसार्थं उपकल्पितं इत्यर्थः ( कर्म्म-विण ) अन्नं ( कर्म्म ) भुङ्क्ते एव=भक्षयति एव आरब्धं तदन्न-भक्षणं न तत्याज इत्यर्थः ( क्रिया ) । १२३ ॥

वाच्यान्तरं । परवीरघ्ना पाण्डवेन वृकोदरेण प्रेक्षमाणेन अन्नं भुज्यते । १२३ ॥

तथापि शत्रु वीरहन्ता पाण्डुपुत्र उस राक्षस को दिखाके अन्नभोजन करने लगा । १२३ ॥

(123.) Yet Bhim, the destroyer of powerful foes, went on eating and only looked scornfully at him for a moment.

**अमर्षेण इति** । अन्वयः । अमर्षेण संपूर्णः तु ( सः राक्षसः ) पृष्ठतः स्थितः ( सन् ) उभाभ्यां पाणिभ्यां कुन्तीपुत्रं वृकोदरं पृष्ठे जघान । १२४ ॥

व्याख्या । अमर्षेण=क्रोधेन ( सम्पूर्णः इत्यस्य कर्त्ता-३या ) संपूर्णः तु=आविष्टः तु ( कर्त्ता-विण, सम्-पूर-धा+क्त ) सः राक्षसः इति शेषः ( कर्त्ता ) पृष्ठतः=भीमस्य पृष्ठभागे ( अधि, ७मी+तस्, अव्य ) स्थितः सन् ( स्था-धा+कर्त्तरि-क्त, कर्त्ता-विण ) उभाभ्यां=द्वाभ्यां ( करण-विण ) वृकोदरं=भीमं ( कर्म्म ) पृष्ठे ( अवच्छेदे ७मी ) जघान=प्रहृतवान् ( हन धा+लिट, क्रिया ) । १२४ ॥

वाच्यान्तरं । संपूर्णेन स्थितेन कुन्तीपुत्रः वृकोदरः जघ्ने । १२४ ॥

राक्षसने तब बहुत क्रोध से भीम के पीछे से दोनों मुष्टि से उस के पृष्ठ में आघात किया । १२४ ॥

(124) Then the Rakshasa full of rage standing behind Bhim struck him with both his fists on the back.

**तथा इति ।** अन्वयः । बलवता ( रक्षसा ) पाणिभ्यां तथा भृशं आहतः सः भीमः राक्षसं नैव अवलोकयामास, भुङ्क्ते एव । १२५ ॥

व्याख्या । बलवता=अतिप्रबलेन ( कर्त्तृ-विण ) रक्षसा इति शेषः ( आहतः इत्यस्य कर्त्ता-३या ) पाणिभ्यां=हस्ताभ्यां ( करण ) तथा =तेन प्रकारेण ( अव्य ) भृशं=अत्यन्तं ( क्रिया-विण ) आहतः= प्रहृतः ( कर्त्ता-विण, आ-हन-धा+कर्म्मणि-क्त ) सः भीमः ( कर्त्ता ) राक्षसं=रक्षः एव (रक्षस् अ+स्वार्थे अण ) वकं ( कर्म्म ) न एव ( अव्य ) अवलोकयामास=ददर्श ( अव-लुक-धा+णिच्+लिट, क्रिया ) भुङ्क्ते एव ( क्रिया ) राक्षसस्य उपद्रवत्वात् तत् अर्थेऽपि दोषाभावात् भोजन-तत्परः एव स्थितः । १२५ ॥

वाच्यान्तरं । आहतेन तेन भीमेन राक्षसः नैव अवलोकयामासे, भुज्यते । १२५ ॥

भीमने उस बलवान् राक्षस के दोनों भुजा से चोट पाके उस की तरफ नहीं देखा और खाने लगा । ५२५ ॥

(125.) Though Bhim was struck with great force by both the hands of the Rakshasa, yet he continued eating without minding him.

**ततः सः इति ।** अन्वयः । ततः वली सः राक्षसः भूयः संक्रुद्धः वृक्षं आदाय तदा भीमं ताड़यिष्यन् ( सन् ) पुनः अभ्यद्र-वत् । १२६ ॥

व्याख्या । ततः=अनन्तरं ( अव्य ) वली=वलवान् ( कर्त्ता-विण ) सः राक्षसः ( कर्त्ता ) भूयः=पुनः अपि (अव्य) संक्रुद्धः=तथा ताड़नेऽपि भीमस्य अनाकुलितचित्तत्वदर्शनेन नितरां कुपितः सन् ( कर्त्ता-विण, सम्-

क्रुध-धा+क्त ) वृक्षं ( कर्म्म ) आदाय=गृहीत्वा (असमा) तदा-तस्मिन् समये ( अधि अव्य ) भीमं ( कर्म्म ) ताड़यिष्यन्=प्रहरिष्यन् सन् ताड़यितुं इत्यर्थः (ताड़ि-धा+तुमुनर्थे-स्यद) पुनः=भूयः ( अव्य ) अभ्यद्रवत्=अभिमुखं धावति स्म ( अभि-द्रु-धा+लङ, क्रिया ) । १२६ ॥

वाच्यान्तरं । बलिना राक्षसेन संक्रुद्धेन ताड़यिष्यतः अभ्यद्रुयत ।१२६॥

यब वह बलवान् राक्षस और भी क्रुद्ध हो भीम को मारने के लिए पेड़ उखाड़ के उस की तरफ दौड़ा। १२६ ॥

(126.) Then the Rakshasa rendered still more furious plucked up a tree and ran towards Bhim with the intention of striking him.

**ततः भीम इति।** अन्वयः। ततः पुरुषर्षभः महाबलः भीमः तत् अन्नं शनैः भुक्त्वा वारि उपस्पृश्य संहृष्टः सन् युधि तस्थौ। १२७ ॥

व्याख्या। ततः ( अव्य ) पुरुषर्षभः=पुरुषेषु ऋषभः ( ७तत् कर्त्ता-विश ) महाबलः=महत् बलं यस्य ( बहुव्री ) सः अमितविक्रमः (कर्त्ता-विश) भीमः ( कर्त्ता ) तत् ( कर्म्म-विश ) अन्नं=भक्ष्यं (कर्म्म ) शनैः=अव्याकुलितचित्तं यथा तथा ( क्रिया-वि, अव्य ) भुक्त्वा=भक्षयित्वा ( भुज-धा=क्त्वा ) वारि=जलं ( कर्म्म ) उपस्पृश्य=भोजनान्ते आचम्य ( उप-स्पृश-धा+ल्यप ) संहृष्टः=पर्य्याप्तभोजनात् प्रतिद्वन्द्विलाभात् वा आनन्दितः सन् ( कर्त्ता-विश, प्र-हृ धा+कर्त्तरि-क्त) युधि=युद्धे ( अधि-७मी ) तस्थौ युद्धार्थं बद्धपरिकरः अभूत् ( स्था-धा+लिट, क्रिया ) ।१२७॥

वाच्यान्तरं। पुरुषर्षभेण महाबलेन भीमेन संहृष्टेन तस्थे। १२७ ॥

इस के पीछे पुरुषश्रेष्ठ महाबली भीम उस अन्न को धीले धीले खाके आचमन करके आनन्दसे लड़ने के लिए खड़ा हुआ। १२७ ॥

(127.) Then the powerful Bhim, the greatest of men, having slowly finished eating and washed his hands cheerfully prepared himself for fight.

क्षिप्तं इति। अन्वयः। (हे) भारत वीर्य्यवान् भीमः प्रहसन् इव क्रुद्धेन (राक्षसेन) क्षिप्तं तं वृक्षं सव्येन पाणिना प्रतिजग्राह। १२८॥

व्याख्या। भारत हे जनमेजय (सम्बो) वीर्य्यवान्=बलवान् (कर्त्ता-विण) भीमः (कर्त्ता) प्रहसन् इव=उपहसन् इव अवलीलया इत्यर्थः (कर्त्ता-विण) क्रुद्धेन=कुपितेन (३या विण, क्रुध-धा+क्त) राक्षसेन इति शेषः (क्षिप्तं इत्यस्य कर्त्ता-३या) क्षिप्तं=निक्षिप्तं (कर्म्म-विण-क्षिप-धा+क्त) तं वृक्षं (कर्म्म) सव्येन=वामेन (करण-विण) पाणिना=करेण (करण) प्रतिजग्राह=शून्ये एव गृहीतवान् (प्रति-ग्रह-धा+लिट्, क्रिया)। १२८॥

वाच्यान्तरं। वीर्य्यवता भीमेन प्रहसता इव क्षिप्तः सः वृक्षः जगृहे। १२८॥

हे भारत! बली भीमसेन ने उस क्रुद्ध राक्षस के फेंके हुए वृक्षको हंसते हंसते बांए हाथसे पकड़ लिया। १२८॥

(128.) O son of Bharat! The powerful Bhim with a smile caught by his left hand the tree hurled at him by the infuriated Rakshasa.

ततः सः इति। अन्वयः। ततः बली सः (राक्षसः) बहुविधान् वृक्षान् पुनः उद्यम्य भीमसेनाय प्राहिणोत् पाण्डवः भीमः च तस्मै (प्राहिणोत्)। १२९॥

व्याख्या। ततः=वृक्षधारणानन्तरं (५मी+तस्, अव्य) बली=बलवान् (कर्त्ता-विण) सः=राक्षसः (सर्व्व-कर्त्ता) बहुविधान्=बहवः विधाः येषां ते (बहुव्री) तान् नाना प्रकारान् (कर्म्म-विण) वृक्षान् (कर्म्म) पुनः=भूयः (अव्य) उद्यम्य=उत्तोल्य उत्पाद्य गृहीत्वा इत्यर्थः (उत्-यम-धा+ल्यप्,) भीमसेनाय (क्रियायोगे-४र्थी) प्राहिणोत्=

प्रक्षिप्तवान् भीमं उद्दिश्य निक्षिप्तवान् इत्यर्थः ( प्र-क्षि·धा+लङ्, क्रिया) पाण्डवः=पाण्डुपुत्रः ( कर्त्ता-विण ) भीमः च ( कर्त्ता ) तस्मै=राक्षसाय ( पूर्व्ववत्-४र्थी ) वृक्षान् प्राक्षिपोत् इति शेषः । १२९ ॥

वाच्यान्तरं । बलिना तेन प्राक्षियत, पाण्डवेन भीमेन प्राक्षियत ।१२९॥

तब उस राक्षस ने नाना प्रकारके पेड़ोंको उखाड़के भीमसेन को तरफ फेंका और भीमने भी उसको तरफ फेंका । १२९ ॥

(129.) After this the Rakshasa uprooted many a tree and flung it at Bhimsen, who on his own part hurled trees at the Rakshasa.

तद्वृक्षयुद्धं इति । अन्वयः । ( हे ) महाराज, नरराक्षसराजयोः महीरुहविनाशनं घोररूपं तत् वृक्षयुद्धं अभवत् । १३० ॥

व्याख्या । महाराज=महान् राजा तत् सम्बोधने हे महाराज जनमेजय ( सम्बो राजाहः सखिभ्यष्टच् इति टच् ) नरराक्षसराजयोः=नरश्च राक्षसः च ( द्वन्द्व ) तयोः ( ७तत् ) राजानौ श्रेष्ठौ तयोः ( सम्ब ) महीरुहविनाशनं=मह्यां रोहन्ति ये ते ( मही-रुह धा+क्त) महीरुहाः वृक्षाः, विनाशयति यत् तत् ( वि·नाशि धा+कर्त्तरि·ल्यु ) विनाशनं नाशकं, महीरुहाणां ( ६तत् ) विनाशनं तत्र युद्धे परस्परप्रक्षिप्तान् वृक्षान् परस्परौ बभञ्जतुः इति भावः ( कर्त्ता-विण) घोररूपं=अतिशयेन घोरं ( घोर-अ+अतिशयार्थे रूपकप्रत्ययः ) अतिभीषणं ( कर्त्ता-विण) तत्= पूर्व्वोक्तं ( सर्व्व-कर्त्ता-विण) वृक्षयुद्धं=वृक्षैः ( ३तत् ) युद्धं ( कर्त्ता ) अभवत्=बभूव ( भू धा+लङ्, क्रिया । १३० ॥

वाच्यान्तरं । महीरुहविनाशनेन घोररूपेण तेन वृक्षयुद्धेन अभवत । १३० ॥

हे महाराज ! तब नरराज और राक्षसराजकी वृक्षोंसे ऐसी भयानक लड़ाई हुईकि सब पेड़ों का नाश हुआ । १३० ॥

(130.) O Maharaja! There occurred such a terrible combat between the two greatest of warriors of men and Rakshasa with trees, that the trees (of the place) were all destroyed.

**नाम इति।** अन्वयः। वकः तु नाम विश्राव्य समभिद्रुत्य महाबलं पाण्डवं भीमसेनं भुजाभ्यां प्रतिजग्राह। १३१॥

व्याख्या। वकः तु (कर्त्ता) नाम स्वां वक इति आख्यां (कर्म्म-२या) विश्राव्य=भीमं श्रावयित्वा मां न जानासि अहं सः प्रसिद्धः अमित-पराक्रमः वकनामा राक्षसः इति वदन् इत्यर्थः (वि-श्रु-धा+णिच्=श्रावि-धा+ल्यप्) समभिद्रुत्य=द्रुतं भीमसमीपं गत्वा (सम-अभि-द्रु-धा+ल्यप्) महाबलं=विपुलविक्रमं (कर्म्म-विण) पाण्डवं=पाण्डुपुत्रं (कर्म्म-विण) भीमसेनं (कर्म्म) भुजाभ्यां=बाहुभ्यां (करण) प्रतिजग्राह=आददे हस्ताभ्यां वेष्टयित्वा धृतवान् इत्यर्थः (प्रति-ग्रह-धा+लिट्, क्रिया)।१३१॥

वाच्यान्तरं। वकेन महाबलः पाण्डवः भीमसेनः प्रतिजगृहे। १३१॥

वकने अपना नाम सुनाके महाबल भीमको दौड़के हाथों से पकड़ लिया। १३१॥

(131.) The Rakshasa Baka, proclaiming his own name, ran towards the powerful Bhima, the son of Pandu, and clasped him between his arms.

**भीमसेनः इति।** अन्वयः। महाभुजः बली भीमसेनः अपि तत् रक्षः परिरभ्य विस्फुरन्तं महाबाहुं (वकराक्षसं) बलात् विचकर्ष।१३२॥

व्याख्या। महाभुजः=महान्तौ भुजौ यस्य (बहुव्री) सः दीर्घबाहुः (कर्त्ता-विण) बली=बलं विद्यते अस्य (बल-अ+इन्) सः वीर्य्यवान् (कर्त्ता-विण) भीमसेनः अपि=भीमा भयानका सेना यस्य (बहुव्री) सः तन्नामकः मध्यमपाण्डवः च (कर्त्ता) तत्=पूर्व्वोक्तं वकनाम (सर्व्व-कर्म्म-विण) रक्षः=राक्षसं (कर्म्म, रक्षस्-अ+२या) परिरभ्य=आलिङ्ग्य कराभ्यां

वेष्टयित्वा विधृत्य इत्यर्थः ( परि-रभ-धा+ल्यप्, अव्य ) विस्फुरन्तं=भुजबन्धनात् निष्क्रमितुं विचेष्टमानं ( वि-स्फुर-धा+शतृ, कर्म्म-विण पुंस्त्वं बकनामलिंगापेक्षयेति नीलकण्ठः, आर्षोवायं प्रयोगः रक्षःशब्दस्य नपुंसकत्वात् ) महाबाहुं महान्तौ बाहू यस्य ( बहुव्री ) तं महाभुजं ( कर्म्म विण ) राक्षसमिति शेषः ( कर्म्म ) बलात्=बलं आश्रित्य बलपूर्व्वकं इति यावत् ( ल्यप्लोपे-५मी ) विचकर्ष=आक्रष्टवान् ( वि-कृष-धा+लिट्, क्रिया )। १३२ ॥

वाच्यान्तरं। महाभुजेन बलिना भीमसेनेन अपि विस्फुरन् महाबाहुः बकराक्षसः विचकृषे। १३२ ॥

महाबाहु बली भीमसेन ने भी दीर्घबाहु फुर्त्ति रखनेवाले राक्षस को हाथों से पकड़ के जोर से खेंचा। १३२ ॥

(132.) The strong-armed and powerful Bhimsen, too, holding the long-armed and excited Rakshasa began to pull him by force.

**सः इति।** अन्वयः। भीमेन कृष्यमाणः सः पुरुषादकः पाण्डवं कर्षमाणः च ( सन् ) तीव्रेण क्लमेन समयुज्यत। ॥१३३ ॥

व्याख्या। भीमेन (कृष्यमाणः इत्यस्य कर्त्ता-३या ) कृष्यमाणः (कृष-धा+कर्म्मणि-शानच्, कर्त्ता-विण ) सः ( सर्व्व-कर्त्ता-विण ) पुरुषादकः=पुरुषं अत्ति यः ( पुरुष-अद-धा+ण्वुल ) सः नरभक्षकः राक्षसः बकः ( कर्त्ता ) पाण्डवं=पाण्डुपुत्रं भीमं ( कर्म्म ) कर्षमाणः च=कर्षन् च सन् ( कृष-धा+शानच, आत्मनेपदमार्षं ) तीव्रेण=अतिमहता ( ३या-विण ) क्लमेन=परिश्रमेण (सहार्थे-३या) समयुज्यत=सङ्गतः परस्पराकर्षणेन हीयमानबलतया क्रमशः अवसादं प्राप इत्यर्थः ( सम्-युज+कर्त्तरि-लङ्, दिवादित्वात् यक, क्रिया )। १३३ ॥

वाच्यान्तरं। कृष्यमाणेन तेन पुरुषादकेन कर्षमाणेन समयुज्यत ।१३३॥

वह नरभक्षक राक्षस भीमको तरफ से खेंचा जाके और भीमको खेंचके क्लान्त हो पड़ा। १३३ ॥

(133.) The Rakshasa, while being pulled by Bhim, pulled his adversary. Thus the man-eater became very much exhausted.

**हीयमानं इति।** अन्वयः। वृकोदरः पुरुषादकं तत् रक्षः हीयमानं तु समीक्ष्य भूमौ जानुभ्यां निष्पिष्य समाजघ्ने। १३४ ॥

व्याख्या। वृकोदरः=वृकस्य उदरं इव उदरं यस्य (बहुव्री) स भीम (कर्त्ता-१मा) पुरुषादकं=नरमांसभक्षकं=(कर्म्म विण) तत्=वक-नामकं (सर्व्व-कर्म्म विण) रक्षः=राक्षसं (कर्म्म-२या) हीयमानं तु=बलेन हीयमानं क्रमशः अवसादं आपद्यमानं इत्यर्थः (हा-धा+कर्म्मणि-शानच्, कर्म्म-विण) समीक्ष्य=दृष्ट्वा (सम्-ईक्ष धा+ल्यप्, अव्य) भूमौ=पृथिव्यां (अधि-७मी) जानुभ्यां=पादाभ्यां भूपतितस्य तस्य वक्षसि जानुनी सबलं प्रयुज्य इत्यर्थः (करण) निष्पिष्य=निष्पिष्टं कृत्वा (निर-पिष-धा+ल्यप्) समाजघ्ने=आहतवान् (सम् आ-हन धा+लिट्, क्रिया) केवलं आङ्पूर्व्वकात् एव साङ्गकर्म्मकात् वा हन्तेः आत्मनेपदनियमात् अत्र संपूर्व्वकत्वात् आत्मनेपदमार्षं अथवा रक्षः इति निःष्पिष्य इत्यस्य कर्म्म, तथा सति आङो्यमहन इत्यादिना अकर्म्मकत्वात् आत्मनेपदं।१३४ ॥

वाच्यान्तरं। वृकोदरेण समाजघ्ने। १३४ ॥

वृकोदर उस नरभक्षक राक्षस का बल घटता हुआ देख उसे जमीन पर पटक जानु से मारने लगा। १३४ ॥

(134.) Bhim finding the Rakshasa gradually weakened threw him on the ground and pressing his knees against his body began to strike him.

**ततः इति।** अन्वयः। ततः पाण्डवः बलात् जानुना अस्य पृष्ठं अवपीड्य इव सव्येन (बाहुना) कटीदेशे वाससि गृह्य च दक्षिणेन

बाहुना शिरोधरां परिजग्राह, भैरवं रवं रवन्त तत् रक्षः द्विगुणं चक्रे । १३५ ३६ ॥

व्याख्या । ततः = आहननात् परं ( ५मी+तस्, अव्य ) पाण्डवः = पाण्डुपुत्रः भीमः ( कर्त्ता ) बलात् = बलं प्रयुज्य बलपूर्व्वकं इत्यर्थः ( ल्यप्-लोपे-५मी ) अस्य = राक्षसस्य ( सम्ब ) पृष्ठं = पृष्ठभागं ( कर्म्म ) जानुना ( करण ) अवपीड्य इव = पीड़यित्वा अवभज्य इत्यर्थः ( अव-पीड़-धा+ल्यप्, इव-शब्दो वाक्यालङ्कारे ) सव्येन = वामेन ( करण-विण ) बाहुना इति शेषः ( करण ) कटीदेशे ( अधि ) वाससि = वस्त्रे ( अवच्छेदे-७मी ) गृह्य=गृहीत्वा ( ग्रह-धा+ल्यप, गृह्य इति आर्षप्रयोगः ) दक्षिणेन ( करण-विण ) बाहुना=हस्तेन ( करण ) शिरोधरां=कन्धरां ( कर्म्म ) परिजग्राह = गृहीतवान् कटिकन्धरयोः योजनेन पृष्ठवंशं बभञ्ज इत्यर्थः ( परि-ग्रह-धा+लिट, क्रिया ) । भैरवं=भीषणं ( कर्म्म-विण ) रवं= चीत्कारं (रवन्त इत्यस्य कर्म्म) रवन्तं=रवं कुर्व्वन्तं (रव-धा+शत, आर्ष-प्रयोगः ) तत् रक्षः = बकराक्षसं ( कर्म्म ) द्विगुणं=द्विरावृत्तं कटिकन्धरयोः योजनेन द्विधा परिवृत्तं इत्यर्थः ( कर्म्म-विण ) चक्रे=कृतवान ( कृ-धा+लिट, क्रिया ) । १३५-३६ ।

वाच्यान्तरं । पाण्डवेन शिरोधरा जगृहे, तेन रक्षसा द्विगुणेन महान भैरवः रवः चक्रे । १३५ ३६ ॥

तब उस की पीठ पर जानु जोर से गड़ा के दाहिने हाथ से उसकी गर्दन पकड़ ली, और बांए हाथ से कमर का कपड़ा पकड़के पाण्डव ने भयानक चिल्लाते हुए उस राक्षसकी दोहरा कर डाला । १३५-३६ ॥

(135-36.) Then Bhimsen pressing him down with great force by his knees held his neck by his right hand and the cloth of his waist by his left. The Rakshasa uttered a doubly terrible yell.

**ततोऽस्य इति ।** अन्वयः । ( हे ) विशांपते ततः भीमेन भज्यमानस्य तस्य अस्य घोरस्य रक्षसः वक्त्रात् रुधिरं प्रादुरासीत् । १३७ ॥

व्याख्या । विशाम्पते=विशां मनुजानां ( ६तत् अलुक ) पतिः तत् सम्बोधने हे राजन् जनमेजय ( सम्बो ) ततः=तदनन्तरं ( ५मी+तस, अव्य ) भीमेन ( भज्यमानस्य-कर्त्ता-३या ) भज्यमानस्य द्विधा क्रियमाणस्य ( भञ्ज-धा+कर्म्मणि शानच, कर्म्म-विण ) तस्य अस्य ( सर्व्व-विण ) घोरस्य=भीषणस्य ( सम्ब-विण ) रक्षसः=राक्षसस्य ( सम्ब ) वक्त्रात्= मुखात् ( अपा ) रुधिरं=रक्तं ( कर्त्ता ) प्रादुरासीत्=निर्जगाम ( प्रादुः-अस-धा+लङ, क्रिया ), भीमताड़ितः सः वकः रुधिरं वेमे इत्यर्थः ।१३७॥

वाच्यान्तरं । रुधिरेण प्रादुरभूयत । १३७ ॥

हे राजन् तब भीमने उस राक्षस की रीढ़ तोड़ दी और उसके मुंहसे लहू निकलने लगा। १३७ ॥

(137.) O king! When that terrible Rakshasa was shamed by Bhim, blood oozed out from his mouth.

**ततः स इति ।** अन्वयः । ततः शैलराजप्रतीकाशः सः वकः भग्नपार्श्वाङ्गः ( सन् ) भैरवं रवं नदित्वा गतासुः अभवत् । १३८ ॥

व्याख्या । ततः=रक्तवमनात् परं ( अनन्तरार्थे-५मी+तस, अव्य ) शैलराजप्रतीकाशः=शिलायां भवाः ( शिला-श+षण ) शैलाः पर्व्वताः तेषां ( ६तत् ) राजा हिमालयः सः इव प्रतिकाशते राजते यः ( प्रति-काश-धा+कर्त्तरि-अच, इकः दीर्घः ) हिमालयवत् प्रकाण्डदेहः इत्यर्थः ( कर्त्ता-विण ) सः ( सर्व्व कर्त्ता-विण ) वकः—तन्नामकः राक्षसः (कर्त्ता-१मा ) भग्नपार्श्वाङ्गः=भग्नानि भीमेन विश्लिष्टसन्धीकृतानि (भञ्ज-धा+क्त) पार्श्वानि एव अङ्गानि यस्य ( वहुव्री ) सः तथोक्तः सन् ( कर्त्ता-विण ) भैरवं=भीरोः अयं ( भीरु-श ष्णन् ) भीषणं ( कर्म्म-विण ) रवं=शब्दं ( कर्म्म ) नदित्वा=कृत्वा ( नद-धा+क्त्वा ) गतासुः=गताः वहिर्गताः

( गम-धा+क्त ) असवः प्राणाः यस्य ( बहुव्री ) स तथोक्तः मृतः इत्यर्थः अभवत् = बभूव ( भू-धा+लङ १पु-१व, क्रिया )। १३८ ॥

वाच्यान्तरं। शैलराजप्रतीकाशेन तेन बकेन भग्नपार्श्वाङ्गेन सता गतासुना अभूयत। १३८ ॥

तब हिमालय समान वह बक पंजरे की हड्डियों के टुट जानेसे भयानक शब्द करके मर गया। १३८ ॥

(138.) When Baka, who was like the Himalaya had his ribs broken, died uttering a terrible cry.

---

# वाल्मीकीयरामायणम्।

## अयोध्या-वर्णनं।

वाल्मीकीयरामायणम्—अय्यते ज्ञायतेऽनेनेति अयनं चरितं रामस्य अयनं रामायणम्, यद्वा राममधिकृत्य कृतमिति, रामायणं, अथवा राम एव अयनं वर्णनीयतया आश्रयो यस्य तत् रामायणम्, 'प्राप्तराज्यस्य वाल्मीकिर्भगवानृषिः। चकार चरितं कृत्स्नं विचित्रपदमर्थवदिति' रामायणोक्तेः, वाल्मीकिः आदिकविः, "वल्मीकस्यापत्यं पुमान् वाल्मीकिरित्यसौ" इति ब्रह्मवैवर्त्तपुराणोक्तेः। यद्वा वल्मीक इति ख्यातो ऋषिविशेषः तस्यापत्यं पुमानिति वाल्मीकिः तेन कृतं यद्वा तस्येदम् वाल्मीकीयम् तच्च तत् रामायणञ्चेति वाल्मीकीयरामायणम् ( कर्म्मधा, प्रातिपदिकार्थे ७मी।

अयोध्यावर्णनम्—न योध्या ( युध धा+यत् ) शत्रवः यस्याः सा यद्वा सह योद्धुं आगताः शत्रवो दूरादेव पलायन्ते इत्यर्थः सा अयोध्या तन्नामिका सूर्य्यवंश्यानां राजधानी। सा च अयोध्या मधुरामाया इत्यादिषु मोक्षदा-

ग्रिकासु सप्तसु पुरीषु अन्तर्गता, तदुक्तं, अयोध्या मथुरा माया काशी काञ्ची अवन्तिका, पुरी द्वारावती चैव सप्तैता: मोक्षदायिका:" इति। तस्या: (६तत्) वर्णनं सविशेषपरिचयकथनं (प्रातिपदिकार्थे-१मा)।

अस्ति कोशलो नाम जनपद:, स: च उत्तरकोशल: दक्षिणकोशलश्चेति द्विविध:। दक्षिणकोशलो हि सरय्वा: दक्षिणभागे अवस्थित:। तत्र राममातु: कौशल्याया: पितृराजधानी आसीत्। तस्मिन् स्वर्गते दक्षिणकोशलोऽपि उत्तरकोशलेषु अन्तर्गत: अभवत्। उत्तरकोशल: सरय्वा: उत्तरे भागे अवस्थित:, तत्र अयोध्यानाम नगरी मनुना निर्म्मिता तद्वंश्यानां राजधानी। अस्मिन् वंशे जात: भगीरथ: प्रपितामहानां सगरपुत्राणां उद्धाराय दुश्चरं तप: तप्त्वा त्रिलोकपावनीं गङ्गां अवतारयत। मनुवंशे दिलीपो प्रसूत:, स च विष्णुपुराणे दीर्घबाहु: इति प्रथित:। स वशिष्ठधेनुं नन्दिनीं प्रसाद्य रघुं पुत्रं लेभे, अयमेव रघु: रामायणे नाभाग: इति कीर्त्तित:। स च विजयव्यापारेण भूपतीन् विजित्य सर्व्वस्वदक्षिणं विश्वजितं नाम यज्ञं आजह्रे। तन्नामगौरवेण तद्वंश: रघुवंश: इति ख्यातिमाप। तद्वंश्याश्च राघवा: इति ख्यातिं लेभिरे, तस्य पुत्र: अज:। दशरथ: तस्मात् जात:।

**कोशल: इति।** अन्वय:। मुदित: स्फीत: प्रभूतधनधान्यवान् सरयूतीरे निविष्ट: कोशलं नाम महान् जनपद: (अस्ति)। १॥

व्याख्या। मुदित:=प्रफुल्ल: (मुद-धा+क्त) राजभि: धर्म्मत: प्रतिपालनात् तत्रस्था: प्रजा: सदा आनन्दिता: आसन् इत्यर्थ: (कर्त्ता-विण) स्फीत:=उत्तरोत्तरवृद्धिं प्राप्त: (स्फाय धा+क्त, पक्षे स्फात, कर्त्ता-विण) प्रभूतधनधान्यवान्=धनानि च धान्यानि च (द्वन्द्व) तानि धनधान्यानि (कर्म्म धा) तानि सन्ति यस्मिन् (वतुप् प्रत्यय:) स: विभवशाली (कर्त्ता-विण) सरयूतीरे=सरयू तन्नामिका नदी तस्या: (६तत्) तीरं तस्मिन् (अधि) निविष्ट:=स्थित: (नि-विश-धा+क्त, कर्त्ता-विण)

कोशलः (कर्त्ता-विण) नाम (अव्य) महान्=अतिविस्तीर्णः (कर्त्ता-विण) जनपदः=जनाः पद्यन्ते यत्र (जन-पद-धा+अधिकरणे-अच) देशः (कर्त्ता) अस्तीति शेषः । १ ॥

वाच्यान्तरं । मुदितेन स्फीतेन प्रभूतधनधान्यवता निविष्टेन कोशलेन महता जनपदेन भूयते । १ ॥

सरयू के तीर पर एक बड़ा कोशल नाम देश है, वह बहुत धन-धान्य से भरा हुआ और राजाओं के धर्म्मानुसार पालने के कारण बहुत बढ़ गया था और उसके प्रजा बहुत आनन्दित थे । १ ॥

(1.) On the side of the Saraju, there lies Kosala, a kingdom of vast extent, and rich in wealth and crops.

**अयोध्या इति ।** अन्वयः । तत्र अयोध्या नाम लोकविश्रुता नगरी (अस्ति) या पुरी मानवेन्द्रेण मनुना स्वयं निर्म्मिता । २ ॥

व्याख्या । तत्र=कोशलजनपदे (तद्-श+७मी+त्रल, अधि-अव्य) अयोध्या (कर्त्ता विण) नाम (अव्य) लोकविश्रुता=लोकेषु प्रसिद्धा भुवनविदिता (विश्रु-धा+क्त, कर्त्ता-विण) नगरी=पुरी सप्तपुर्य्यन्तर्गता इत्यर्थः (कर्त्ता) अस्ति इति शेषः (क्रिया), या (सर्व्व-कर्म्म-विण) पुरी नगरी (कर्म्म-१मा) मानवेन्द्रेण=मानवेषु (७तत्) इन्द्रः यथा देवेषु देवराजः इन्द्रः प्रधानं यथा मानवेषु मनुः इत्यर्थः तेन मानवश्रेष्ठेन (कर्त्ता विण) मनुना=वैवस्वतेन सूर्य्यवंशस्य आदिनृपतिना सप्तममनुना (कर्त्ता-३या) स्वयं=निजतत्वावधारणादिना (अव्य) निर्म्मिता= गठिता निर्म्मापिता इत्यर्थः (निर-मा धा+कर्म्मणि क्त, णिचप्रत्ययस्य अर्थः अन्तर्भूतः) अथवा जयत्सैन्येषु राजा जयति इतिवत् उपचारात् तस्य भृत्यनिर्म्मितस्य मनौ आरोपः इति । मनुः न पुरुषविशेषः चतुर्द्दश मनवः तेषां षट् मनवः अतीताः सप्तमः मनुः वर्त्तमानः । सप्त मनवः भविष्यन्ति । तदुक्तं विष्णुपुराणे ;

स्वायम्भुवो मनुः पूर्व्वं मनुः स्वारोचिषस्तथा ।
औत्तमिस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥
षड़ेते मनवोऽतीताः साम्प्रतन्तु रवेः सुतः ।
वैवस्वतोऽयं यस्यैतत् सप्तमं वर्त्ततेऽन्तरं ॥
सावर्णिः दक्षसावर्णिः, ब्रह्मसावर्णिः,
रुद्रसावर्णिः रौच्यः भौत्यश्च एते सप्त भविष्यन्तः मनवः । १ ॥

वाच्यान्तरं । अयोध्यया नगर्य्या लोकविश्रुतया भूयते, यथा पुर्य्या निर्म्मितया अभूयत । २ ॥

मनुष्यश्रेष्ठ मनुजीने जिस पुरीको आप बनवाई थी वह अयोध्या नगरी जो तीनों लोकमे जानी हुई है, वहां थी । २ ॥

(2.) In that kingdom, stands Ajodhya, a town, famed among men and built by Manu himself the Prince of men.

**आयता इति ।** अन्वयः । श्रीमती सुविभक्तमहापथा, महता सुविभक्तेन मुक्तपुष्पावकीर्णेन नित्यशः जलसिक्तेन राजमार्गेण शोभिता महापुरी दश च द्वे च योजनानि आयता त्रीणि (योजनानि) विस्तीर्णा । ३ ४ ॥

व्याख्या । श्रीमती=श्रीः विद्यते अस्यां सा ( श्री श+मतुप् ) शोभा-युक्ता ( कर्त्ता-विण ) सुविभक्तमहापथा=महान्तः पन्थानः (कर्म्मधा, आन्म-हतः इत्यादिना महतः आकारोऽन्तादेश: ) वहिर्भागाः, सुविभक्ताः ( सु-वि भज-धा+क्त) महापथाः यस्यां ( वहुव्री, कर्त्ता विण ) सा महता=अतिदीर्घेण ( करण विण ) सुविभक्तेन=विभिन्नेन ( करण-विण ) मुक्तपुष्पावकीर्णेन=मुक्तानि विकसितानि लोकैर्विक्षिप्तानि वा ( मुच धा+क्त ) पुष्पाणि ( कर्म्मधा) तैः अवकीर्णेन व्याप्तेन (अव-कृ-धा+क्त, करण-विण ) नित्यशः=प्रतिदिनं ( नित्य-श+शस्, अव्य ) जलसिक्तेन=जलेन ( इतत् ) सिक्तः आर्द्रः ( सिच-धा+क्त ) तेन ( करण-विण) राजमार्गेण

राज्ञः ( ६तत् ) मार्गः राजद्वारात् प्रवृत्तः पन्थाः तेन ( करण ) शोभिता =विराजिता ( शुभ-धा+क्त, कर्त्ता-विण ) महापुरी=महती ( कर्म्मधा- पूर्व्ववत् आकारान्तादेशः ) पुरी नगरी ( कर्त्ता ) दश च द्वे च=द्वादश ( २या-विण ) योजनानि=चतुष्क्रोशीः अष्टचत्वारिंशत् क्रोशान् व्याप्य इति यावत् ( अत्यन्त संयोगे-२या, योजनं परमात्मनि चतुष्क्रोश्यां योगे चेति मेदिनी ) आयता=दीर्घा ( आङ्-यम-धा+क्त) अष्टचत्वारिंशत् क्रोषान् व्याप्य दीर्घा इत्यर्थः त्रीणि-योजनानि इति शेषः=द्वादशक्रोशान् व्याप्य ( अत्यन्तसंयोगे-२या ) विस्तीर्णा=तिर्य्यक्‌विस्तारवती ( कर्त्ता- विण, वि-स्तृ-धा+क्त ) अस्तीति शेषः क्रिया ) । ३-४ ॥

वाच्यान्तरं । श्रीमत्या सुविभक्तमहापथया शोभितया महापुर्य्या आय- तया विस्तीर्णया भूयते । ३-४ ॥

यह महापुरी लम्बाई में बारह योजन ( ४८ क्रोश ) और चौड़ाई में तीन योजन ( बारह क्रोश ) थी । इस के महा पथ सब अच्छे ढवसे बढ़े हुए थे, और यह अच्छे सजे हुए बड़े राज पथ से जिसमें फुल बिखरे हुए थे, और जिस में हर दिन पानी का छिड़काव होता था, शोभित थी । ३-४ ॥

(3-4.) That picturesque queenly city is ten and two miles in length and three in breadth, and is intersected by numerous nobly-planned streets, and royal roads strewn with blown-flowers, and well-watered every day.

तां इति । अन्वयः । देवपतिः दिवि ( पुरीं ) इव महा- राष्ट्रविवर्द्धनः राजा दशरथः तां पुरीं आवासयामास । ५ ॥

व्याख्या । देवपतिः=देवानां ( ६तत् ) पतिः राजा इन्द्रः इत्यर्थः (उपमा कर्त्ता) दिवि=स्वर्गे (अधि ७मी दिवं स्वर्गेऽन्तरीक्षे च इति विश्वः ) पुरीं=नगरीं अमरावतीं इत्यर्थः ( उपमा-कर्म्म ) इव (उपमावाचक-अव्य)

महाराष्ट्रविवर्द्धनः=विवर्द्धयति यः (वि-वृध धा+कर्त्तरि-ल्यु) सः विवर्द्धनः, महतः (कर्म्मधा) राष्ट्रस्य राज्यस्य (६तत्) विवर्द्धनः धर्म्मन्यायबलेन पोषणात् अतिविस्तीर्णराज्यस्य विशेषेण वृद्धेन कर्त्ता इत्यर्थः (कर्त्ता-विश) राजा=भूपतिः (कर्त्ता-विश) दशरथः=तन्नामकः मनुवंशीयः राजा (कर्त्ता) तां=पूर्व्वोक्तां अयोध्यां (सर्व्व कर्म्म-विश) पुरीं=नगरीं (कर्म्म-२या) आवासयामास=पूर्व्वापेक्षयाधिकलोकवसतिमतीं चकार (आ-वस-धा णिच+लिट्, क्रिया)। ५ ॥

वाच्यान्तरं। देवपतिना पुरी इव महाराष्ट्रविवर्द्धनेन राज्ञा दशरथेन सा पुरी आवासयामासे। ५ ॥

बड़े बड़े राज्यों के बढ़ानेवाले राजा दशरथ ने स्वर्ग में जैसे इन्द्रने अमरावती बसाई है, उसी ढब से इस पुरी को बसाया था। ५ ॥

(5.) Like Indra, the king of the Gods in heaven, king Dasaratha, made that city (her) more populous than before.

**कपाट इति।** अन्वयः। कपाटतोरणवतीं सुविभक्तान्तरापणां सर्व्वयन्त्रायुधवतीं सर्व्वशिल्पिभिः उषितां पुरीं राजा दशरथः तदा आवासयामास इति अग्रिमेण श्लोकेन अन्वयः। ६ ॥

व्याख्या। इदानीं त्रयोदशभिः श्लोकैः पुरीं विशिनष्टि कपाट इति। कपाटतोरणवतीं=तोरणं बहिर्द्वारालङ्कारदारुबन्धः कपाटाः च तोरणानि च (द्वन्द्व) तानि विद्यन्ते अस्यां (मतुप्, कर्म्म विश) सुविभक्तान्तरापणां सुविभक्तं अन्तरं येषां तादृशाः आपणाः क्रयविक्रयस्थानानि यस्यां (बहुव्री) तां आपणेषु विविधानि द्रव्याणि भिन्नभिन्नस्थानेषु सज्जीकृतानि आसन् इत्यर्थः (कर्म्म-विश) सर्व्वयन्त्रायुधवतीं=सर्व्वाणि (कर्म्मधा) यन्त्रायुधानि यन्त्रबलेन प्रयोज्याः प्राकारोपरि स्थिताः अस्त्रविशेषाः तानि विद्यन्ते अस्यां (मतुप्, कर्म्म-विश) सर्व्वशिल्पिभिः=सर्व्वैः (कर्म्मधा) शिल्पिनः तैः (उषितां इत्यस्य कर्त्ता-३या) उषितां=कृतनिवासां (वस-धा+कर्म्मणि-

ता) पुरीं=नगरीं (कर्म्म) राजा=भूपतिः (कर्त्ता-विश) दशरथः (कर्त्ता) आवासयामास इति पूर्व्वश्लोकेनान्वयः। ६॥

वाच्यान्तरं। कपाटतोरणवती सुविभक्तान्तरापणा सर्व्वयन्त्रायुधवती उषिता पुरी राज्ञा दशरथेन आवासयामासे। ६॥

इस पुरी में किवाड़ और फाटक लगे थे। बजार ठीक ठीक दूरी पर बठाये गये थे, इस में सब तरह के यन्त्र और अस्त्र थे, और हर तरह के शिल्पी बसते थे। ६॥

(6.) With gates and triumphal arches, and shops at intervals, Ayodhya, was the home of all sorts of artists and artisans, and the centre of instruments and weapons of every description.

सुत इति। अन्वयः। सूतमागधसंबाधां श्रीमतीं अतुलप्रभां उच्चाट्टालध्वजवतीं शतघ्नीशतसंकुलां। ७॥

व्याख्या। कथङ्कृता। सूतमागधसंबाधां=सूताः स्तुतिपाठकाश्च मागधाः वंशावलीकथकाश्च (द्वन्द्व) तेषां सम्बाधः यस्यां (बहुव्री) यत्र बहवः स्तुतिपाठकाः वंशावलीकीर्त्तकाश्च प्रतिवसन्तिस्म इत्यर्थः (कर्म्म-विश) श्रीमतीं=विभवशालिनीं (कर्म्म-विश) अतुलप्रभां=अतुला प्रभा यस्याः (बहुव्री) तां असीमशोभासम्पन्नां (कर्म्म-विश) उच्चाट्टालध्वजवतीं=उच्चट्टालाः उपरिगृहाः उच्चेषु अट्टालेषु (७तत्) ध्वजाः विद्यन्ते येषां (मतुप) तां यत्र उच्चाः वितलवितलगृहाः तदुपरिध्वजाश्च विराजन्तेस्म इत्यर्थः (कर्म्म-विश) शतघ्नीशतसंकुलां=शतं घ्नन्ति याः ताः (शत-हन्-आ+कर्त्तरि-क्विप, स्त्रियां ईप्) शतघ्न्यः नाम प्राकारसंरक्षणार्थं लौह-भारनिर्म्मिताः प्राकारोपरिस्थापिताः आयुधविशेषाः। लौहनिर्म्मितेन येन आयुधेन युगपद् योध्दृशतं हन्यते इत्यर्थः तासां (६तत्) शतेन (३तत्) संकुलां व्याप्तां (कर्म्म-विश) पुरीं आवासयामासेति क्रियापदं सर्व्वत्र योजनीयम्। ७॥

वाच्यान्तरं। सूतमागधसम्बाधा श्रीमती अतुलप्रभा उच्चाट्टाल-ध्वजवती शतघ्नीशतसंकुला। ७॥

जिस में भाट और वंशावली के बोलनेवाले बहुत रहते थे। जिस की शोभा कुछ अनोखी सी थी। जिस के ऊपर के मकानों पर ध्वजा सदा उड़ती रहती थी, सैकड़ों शतघनी (तोप) रखी रहती थी। ७॥

(7.) This lovely city, of matchless beauty and splendors, with stately towers and banners resounded with the cries of bards and minstrels and was defended by mounted-guns (artillery) called the *centicide.*

वधू इति। अन्वयः। वधूनाटकसंघैः च सर्व्वतः संयुक्तां उद्यानाम्रवणोपेतां महतीं सालमेखलां पुरीं। ८॥

व्याख्या। वधूनाटकसंघैः च=नाटकं नाट्यशाला तस्य (६तत्) संघाः समूहाः वधूनां रमणीनां (६तत्, वधूः स्त्रीसारिवौषधी। स्नुषा-शटीनवोढासु भार्य्याशृक्काङ्गनासु च इति मेदिनी) नाटकसंघाः तैः (संयुक्तां इत्यस्य कर्त्ता-३या) सर्व्वतः=सर्व्वस्मिन् स्थाने (अधि-७मी+तस्, अव्य) संयुक्तां=अन्वितां (सम्-युज-धा+क्त, कर्म्म-विण) उद्यानाम्रवणोपेतां= उद्यानानि क्रीड़ार्थपुष्पवाटिकाः, तानि च आम्रवणानि च (द्वन्द्व) तैः उपेतां युक्तां (उप-इ-धा+क्त, कर्म्म-विण) महतीं=अतिदीर्घां विस्तृतां च (कर्म्म-विण) सालमेखलां=सालः प्राकारः सालवनं वा सः एव मेखला कटिभूषणं यस्याः (बहुव्री) यस्याः प्रान्ते सालः मेखलावत् विभाति इत्यर्थः (पुरीमिति कर्म्म-विण)।

वाच्यान्तरं। संयुक्ता उद्यानाम्रवणोपेता महती शालमेखला पुरी। ८॥

जिस पुरी में स्त्री नाट्यशाला उद्यान और आम्रवन है और जिस के चारों ओर दीवार की मेखला थी। ८॥

(8.) It smiled with flower-gardens and mangoe groves and was girt with the forests of Sal trees and abounded with theaters of female actresses.

**दुर्गं इति ।** अन्वयः । दुर्गगम्भीरपरिखां दुर्गां अन्यैः दुरासदां वाजिवारणसम्पूर्णां तथा गोभिः, उष्ट्रैः, खरैः ( सम्पूर्णां )। ९ ॥

व्याख्या । दुर्गगम्भीरपरिखां=परिखा शत्रूणां आगमननिवारणार्थं दुर्गप्राकारस्य समन्तात् जलपूर्णजलाधारः दुर्गा परिखास्थितजलेन दुर्गम्या गम्भीरा अगाधा परिखा यस्यां ( बहुव्री ) तां ( कर्म-विण ) दुर्गां मित्रैः अपि इति शेषः=मित्रैः अपि दुःखगम्यां ( कर्म-विण ) अन्यैः=शत्रुभिः ( दुरासदां इत्यस्य=कर्त्ता३या ) दुरासदां=दुःखेन आसाद्यते या सा (दुर-सद-धा+कर्मणि-घञ ) तां अशक्यसमीपगमनां (कर्म विण ) वाजिवारण-सम्पूर्णां=वाजिनः घोटकाः च वारणाः हस्तिनः च (द्वन्द्व) तैः (३तत्) सम्पूर्णां=परिपूर्णां ( सम्-पूर-धा+क्त, कर्म-विण ) तथा (अव्य) गोभिः धेनुभिः बलीवर्द्दैः च ( सम्पूर्णां इत्यस्य-कर्त्ता-३या ) उष्ट्रैः ( पूर्ववत्-३या) खरैः=गर्द्दभैः ( पूर्ववत्-३या ) सम्पूर्णां इति शेषः पुरीं इत्यादि । ९ ॥

वाच्यान्तरं । दुर्गगम्भीरपरिखा दुर्गा दुरासदा वाजिवारणसम्पूर्णा ।९॥

जिस के चारों ओर परिखा थी, और जिसमें शत्रु नहीं प्रवेश कर सके थे, और जो घोड़े, हाथी, गौ, उष्ट्र और खरों से परिपूर्ण थी । ९ ॥

(9.) It was guarded with deep trenches cut all round and was inaccessible to enemies and others, abounding in horses, elephants, cows, camels and mules as well.

**सामन्तः इति ।** अन्वयः । बलिकर्म्मभिः सामन्तराजसंघैः च आवृतां नानादेशनिवासैः वणिग्भिः च आवृतां । १० ॥

व्याख्या । बलिकर्म्मभिः=राजग्राह्यः करः बलिः तद्दानरूपं कर्म्म येषां ( बहुव्री ) तैः करदानार्थं आगतैः इत्यर्थः ( कर्त्ता-विण ) सामन्तराजसंघैः च=समन्तात् भवाः ( समन्तात्-अ+षण् ) सामन्ताः ते च

( कर्म्मधा ) राजानः अधीनराजानः तेषां ( ६तत् ) संघाः समूहाः तैः ( आहृतां इत्यस्य कर्त्ता-३या ) अथवा वलिभिः=देवान् उद्दिश्य प्रदत्तैः पूजोपहारसामग्रीभिः आहृतां व्याप्तां (आ-हृत-धा+कर्म्म विण ) नानादेश-निवासैः=नाना ( कर्म्मधा) देशाः तेषु ( ७तत् ) निवासः वसतिः (नि-वस-धा+घञ् ) येषां ( बहुव्री ) तैः नानादेशात् आगतैः इत्यर्थः ( कर्त्ताविण) वणिग्भिः=क्रयविक्रयिकैः ( उपशोभितां इत्यस्य कर्त्ता३या) उपशोभितां=अलङ्कृतां ( उप-शुभ-धा+कर्म्मणि-क्त, कर्म्म-विण) पुरीं इत्यादि । १० ॥

पाठान्तरं । आवृता उपशोभिता ।

जिसमें सामन्त राजगण बसते थे, और पूजोपहार चारों और फैले हुए थे, और जो नानादेशोंके वणिकों से शोभित थी । १० ॥

(10.) It was filled with crowds of tributary princes, busy in offering their tribute, and merchants from different countries.

**प्रासादैः इति ।** अन्वयः । रत्नविकृतैः पर्व्वतैः इव प्रासादैः शोभितां कुटागारैः च सम्पूर्णां अतएव इन्द्रस्य अमरावतीं इव ( स्थितां ) । ११ ॥

व्याख्या । रत्नविकृतैः=विशेषेण कृताः विकृताः ( वि-कृ-धा+क्त ) रत्नैः (३तत् ) विकृताः तैः ( कर्त्ता-विण ) पर्व्वतैः इव=पर्व्वतसदृशैः (इवेन अलुकसमासः ) प्रासादैः=देवभूपतिगृहैः ( हर्म्मादि धनिनां वास प्रासादो देवभूभुजां इत्यमरः, शोभितां इत्यस्य कर्त्ता ) शोभितां=अलङ्कृतां ( शुभ धा+कर्म्मणि-क्त, कर्म्म-विण ) कुटागारैः च=कुटाख्यैः आगारैः गृहैः स्त्रीणां क्रीड़ागृहैः इति यावत् ( सम्पूर्णां इत्यस्य कर्त्ता-३या ) सम्पूर्णां ( सम् पूर धा+क्त, कर्म्म विण ) अतएव इन्द्रस्य=देवराजस्य ( सम्व ) अमरावतीं इव=अमराः विद्यन्ते अस्यां ( अमर-अ+वतुप, शरादित्वात् दीर्घः ) सा इव स्वर्गस्थ सदृशीं स्थितां इति शेषः पुरीं इत्यादि । ११ ॥

वाच्यान्तरं । शोभिता सम्पूर्णा । ११ ॥

जो इन्द्र की अमरावती की तरह रत्न जड़ित प्रासाद और पर्व्वतों से शोभित और स्त्रियों के क्रीड़ा घरों से पूर्ण थी । ११ ॥

(11.) With mountain-like palaces set with jewels and lady's ball-rooms, Ayodhya was a second Amaravati.

चित्रां इति । अन्वयः सुगमः ।

व्याख्या । चित्रां—विविधवर्णां ( कर्म्म विश ) अष्टापदाकारां= अष्टसु धातुषु पदं प्रतिष्ठा यस्य तत् अष्टापदं सुवर्णं ( अष्टापदोऽस्त्री कनके शारीणां फलकेऽपि च इति मेदिनी ) तेन स्वर्णजलेन ( ३तत् ) कृतः आकारः अलङ्कारः यस्याः ( बहुव्री ) तां सुवर्णजलेन रञ्जितां इत्यर्थः, अथवा अष्टापदवत् द्युतफलकवत् आकारः यस्याः ( बहुव्री ) तां ( कर्म्म-विश ) वरनारीगणायुतां=वरैः ( कर्म्मधा ) नारीणां ( ६तत् ) गणैः रूपलावण्यवतीतिः स्त्रीभिः ( ३तत् ) आ समन्तात् युतां ( यु-आ+क्तः ) व्याप्तां ( कर्म्म-विश ) सर्व्वरत्नसमाकीर्णां=सर्व्वैः ( कर्म्मधा ) रत्नानां ( ६तत् ) गणैः ( ३तत् ) समाकीर्णां=( सम्-आ-कॄ-धा+क्त) परिपूर्णां ( कर्म्म-विश ) विमानगृहशोभितां—विमानगृहं सार्व्वभौमगृहं सम्राट-गृहं इत्यर्थः ( विमानं व्योमजाने च सार्व्वभौमगृहेऽपि च इति मेदिनी ) तेन ( ३तत् ) शोभितां विराजितां ( कर्म्म-विश ) पुरीं इत्यादि । १२ ॥

वाच्यान्तरं सुगमं ।

जो चित्र विचित्र और सोने के पानी से फेरी हुई थी, और जिस में सुन्दरी स्त्री सब तरह के रत्न और सात मंजिले मकान थे । १२ ॥

(12.) With hundreds of ladies of exquisite beauty, Ayodhya gilded painted was full of gems and jewels of all kinds and houses seven stories high.

गृहगाढ़ां इति । अन्वयः सुगमः ।

व्याख्या । गृहगाढ़ां=गृहैः पौरजनगृहैः (३तत्) गाढ़ां गाह-धा+क्त) निविड़ां (कर्म-विण) अतएव अविच्छिद्रां=गृहाणां घन-सन्निवेशात् स्थानाभावात् अवकाशरहितां इत्यर्थः (कर्म-विण) समभूमौ =समा (कर्मधा) भूमिः तस्यां समतलक्षेत्रे अवन्ध्यभूमौ (अधि) निवेशितां (नि-विश धा+णिच् क्त) (कर्म-विण) शालितण्डुलसम्पूर्णां =शालिधान्योद्भवतण्डुलैः (३तत्) सम्पूर्णां (कर्म-विण) इक्षुकाण्ड-रसोदकां=इक्षूणां (६तत्) काण्डं स्तम्बः तस्य (६तत) रसः तद्वत् स्वादु उदकं जलं यस्यां (बहुव्री) तां यत्र जलं इक्षुरसवत् सुस्वादु इत्यर्थः (कर्म-विण) पुरीं इत्यादि । १३ ॥ वाच्यान्तरं सुगमं ।

जो बराबर जमीन पर ऐसी घनी बसी हुई थी कि, कुछ भी जगह नहीं थी, और जिस में शालि तण्डुल थे और जिसका पानी ईख के रस की बराबर मीठा था । १३ ॥

(13.) The houses, all standing on level ground, rose so densely that no open space was left, rich in sali-paddy and with water sweet as the sugarcane juice.

**दुन्दुभीभिः इति ।** अन्वयः । दुन्दुभीभिः मृदङ्गैः च वीणाभिः तथा पणवैः भृशं नादितां तपसा अधिगतं दिवि सिद्धानां विमानं इव पृथिव्यां अत्यर्थं अनुत्तमां सुनिवेशितवेश्मान्तां नरोत्तमसमावृतां तां । १४-१५ ॥

व्याख्या । दुन्दुभीभिः वाद्यविशेषैः (करण-३या) मृदङ्गैः च= (करण-३या) वीणाभिः (करण-३या) पणवाः वाद्यभेदाः तैः (करण-३या) भृशं=अत्यन्तं (क्रिया-विण) नादितां=ध्वनितां शब्दायमानां इति यावत् सुशासनवशात् नित्योत्सवां इत्यर्थः (नाद-धा+क्त, कर्म-विण) तपसा=तपोबलेन (करण-३या) अधिगतं=प्राप्तं (कर्म-विण) दिवि=स्वर्गे (अधि-७मी) सिद्धानां=सम्यगोगसिद्धानां देवानां वा

( सप्त ) विमानं इव=व्योमयानं इव देवयानेन तुल्यां इत्यर्थः पृथिव्यां =महीतले ( अधि ) अत्यर्थं=अत्यन्तं ( विण-विण ) अनुत्तमां नास्ति उत्तमा यस्याः ( बहुव्री ) सा श्रेष्ठा तां ( कर्म्म-विण ) सुनिवेशितवेश्मान्तां =वेश्मनः गृहस्य ( ६तत् ) अन्तः बाह्यप्रदेशः सुष्ठु निवेशितः स्थापितः वेश्मान्तः यस्यां (बहुव्री, कर्म्म-विण) तां नरोत्तमसमावृतां=नरेषु (७तत्) उत्तमाः नरश्रेष्ठाः तैः ( ३तत् ) समावृतां आकीर्णां ( सम्-आ-वृ-धा+क्त ) तदा अयोध्यावासिनः सर्व्वेः अपि विनयदाक्षिण्यादिसद्गुणशालिनः आसन् इत्यर्थः ( कर्म्म-विण ) तां ( सर्व्व-कर्म्म-विण ) पुरीं इत्यादि । १४-१५ ॥

वाच्यान्तरं। नादिता सा अनुत्तमा सुनिवेशितवेश्मान्ता नरोत्तम-समावृता । १४-१५ ॥

सारी पृथ्वी में सर्व्वोत्तम जिस नगरी मैं सदा दुंदुभि, मृदङ्ग, वीणा, और ढोल बजा करते थे। स्वर्गमें सिद्धपुरुषों के तपस्या से पाये हुए विमान की तरह जिसके मकानोंके प्रदेश ठीक बने हुए थे, और जिसमें अच्छे लोग रहते थे। १४-१५॥

(14-15) Ayodhya, the best of places on earth, resounded with the sounds of lyres, kettle-drums and drums and looked like a Baloon of Sidhas obtained through the devont contemplation. It had houses placed in beautiful order, and was inhabited by noblemen.

ये इति। अन्वयः। ये च विविक्तं अपरापरं शब्दवेध्यं विततं च ( शत्रुं ) बाणैः न विध्यन्तिः, ( ये च ) लघुहस्ताः विशारदाः तेषां सहस्रैः पूर्णा इति उत्तरश्लोकेन अन्वयः। १६ ॥

व्याख्या। ये च=महारथाः ( सर्व्व-कर्त्ता ) विविक्तं=( वि-विच-धा+क्त ) समूहात् भ्रष्टं सहायरहितं इत्यर्थः ( कर्म्म-विण ) अपरापरं= =परे पित्रादयः अपरे पुत्रादयः न सन्ति परे च अपरे च ( द्वन्द्व ) यस्य

( बहुव्री ) तं पितृपुत्रादिभिः हीनं कुलस्य एकतन्तुं इति एके, स्वपक्षीयापरपक्षीयभिन्नं केवलं दर्शकं इत्यन्ये ( कर्म्म-विण ) शब्दवेध्यं च = शब्देन शब्दमात्रानुमितसत्त्वया ( ३तत् ) वेध्यं वेधयोग्यं ( विध+यत् ) प्रच्छन्नं इति यावत् ( कर्म्म-विण ) विततं च=वि विरुध्य युद्धं कृत्वा पश्चात् ततं ( तन-धा+क्त ) पलायितं ( कर्म्म-विण ) ईदृशं शक्यवेधं अपि इति भावः, शत्रुं इति शेषः ( कर्म्म ) बाणैः=शरैः ( करण ) न विध्यन्ति तेषु बाणप्रहारं न कुर्व्वन्ति इत्यर्थः ( व्यध धा++लट्, क्रिया ) । ये च ( प्रातिपदिकार्थे १मा) लघुहस्ताः=लघुः हस्तः अस्त्रशस्त्रप्रयोगे हस्तव्यापारः येषां ( बहुव्री ) ते शीघ्रवेधिनः ( १मा-विण ) विशारदाः=अस्त्रशस्त्रप्रयोगनिपुणाः ( १मा-विण ) तेषां सहस्रैः पूर्णां पुरीं इत्यादि । १६ ॥

वाच्यान्तरं । यैः विविक्तः अपरापरः शब्दवेधः विततः न विध्यते ।१६॥

अस्त्रविद्या में निपुण और शीघ्र अस्त्र चलनेवाले जो असहाय शब्द से अनुमान करके मारने योग्य और भागे हुए अनाथ को नहीं मारते । १६ ॥

( 16. ) Clever and master archers and bowmen, they never let their arrows fall upon the helpless and the wretched, destitute alike of fathers and children or those who have fled, or from fear have kept themselves concealed from them.

**सिंह इति ।** अन्वयः । ( ये च ) वने नदतां मत्तानां सिंहव्याघ्रवराहाणां निशितैः शस्त्रैः बाहुबलैः अपि बलात् हन्तारः तादृशानां सहस्रैः अतिपूर्णां पुरीं इति उत्तरेण अन्वयः । १७ ॥

व्याख्या । ये च ( प्रातिपदिकार्थे-१मा ) वने=अरण्ये ( अधि ) नदतां=शब्दायमानानां ( ६ष्ठी-विण ) मत्तानां=मदेन उन्मत्तानां ( मद-धा+क्त, ६ष्ठी-विण) सिंहव्याघ्रवराहाणां=सिंहाः च व्याघ्राः च वराहाः च (द्वन्द्व) तेषां ( कर्म्म-६ष्ठी ) निशितैः=शाणितैः ( नि-शो-धा+क्त, करण-

विश ) शस्त्रैः=शरादिभिः ( करण ) अपि बलात्=बलं आश्रित्य ( ल्यप्-लोपे-५मी ) हन्तारः=विनाशयितारः ( हन-धा+तृच्=हन्तृ-श+१मा-३व, विश) । १७ ॥

वन में गरजते हुए मत्त सिंह, व्याघ्र और वराहों को बलपूर्व्वक शस्त्रोंसे मारनेवाले बाहुबलशाली । १७ ॥

( 17. ) Who with great prowess and force killed wild lions, tigers and boars roaming in the woods.

**तादृशानां इति ।** अन्वयः । महारथः राजा दशरथः तादृशानां सहस्रैः अभिपूर्णां तां पुरीं तदा आवासयामास । १८ ॥

व्याख्या । महारथः=( आत्मानं सारथिं चाश्वान् रक्षन् युध्येत यो नरः । स महारथसंज्ञः स्यात्, अथवा एकोदशसहस्राणि योधयेत् यस्तु धन्विनां, अस्त्रशस्त्रप्रवीणश्च स महारथ उच्यते ) इत्युक्तप्रकारः ( कर्त्तृ-विश ) राजा दशरथः ( कर्त्ता ) तादृशानां=तेषां इव दर्शनं येषां ( तद-दृश-धा+टक् ) तेषां पूर्व्वोक्तवीरसदृशानां ( सम्ब ) सहस्रैः=शत-सहस्रैः बहुभिः इत्यर्थः (अभिपूर्णां इत्यस्य-करण-श्या, ( अत्र सहस्रशब्दस्य एकवचनान्तत्वे अपि बहुसहस्रविवक्षया बहुवचनं ) अभिपूर्णां ( अभि-पूर-धा+क्त, पुरीं इत्यस्य-विश ) पुरीं=नगरीं अयोध्यां ( कर्म्म ) तदा=तस्य राजत्वकाले ( अधि-अव्य ) आवासयामास=तेषां आवासेन पूर्णां चकार ( क्रिया ) । १८ ॥

वाक्यान्तरं । अभिपूर्णा पुरी राज्ञा [illegible] आवासयामासे । १८ ॥

हजारों माहारथों से भरी हुई पुरी को राजा दशरथने बसाया था । १८ ॥

( 18. ) The city founded by Dasarat was peopled by thousands of these brave warriors.

**तमिति ।** अन्वयः । अग्निमद्भिः गुणवद्भिः द्विजोत्तमैः वेद-

षड़ङ्गपारगैः सहस्रदैः सत्यरतैः महात्मभिः महर्षिकल्पैः केवलैः ऋषिभिः च आवृतां पुरीं आवासयामास इति पूर्व्वेण अन्वयः ।

व्याख्या । अग्निमद्भिः=अग्निः विद्यते येषां ( अग्नि-श्र मतुप् ) आहिताग्निभिः ( कर्त्ता-विण ) गुणवद्भिः= दयार्जवादिगुणशालिभिः ( कर्त्ता-विण ) द्विजोत्तमैः=द्विजेषु ब्राह्मणेषु ( ७तत्, न निर्द्धारे इति षष्ठीसमासप्रतिषेधः ) उत्तमाः श्रेष्ठाः तैः ( कर्त्ता-विण ) वेदषड़ङ्गपारगैः =वेदाः ऋकयजुःसामाथर्व्वाणि चत्वारि वेदाः षड़ङ्गानि शिक्षाकल्प-व्याकरणनिरुक्तछन्दःज्योतींषि इति षड़विधानि वेदाङ्गानि, वेदाः च षड़ङ्गानि च ( द्वन्द्व ) तेषां ( ६तत् ) पारं गच्छन्ति ये ( गम-धा+ड ) तैः सर्व्वशास्त्रतत्त्वज्ञैः इत्यर्थः ( कर्त्ता-विण) सहस्रदैः=सहस्रं ददति ये ( दा धा+ड ) तैः दातृभिः ( कर्त्ता-विण) सत्यरतैः=सत्ये ( ७तत् ) रताः ( रम-धा+क्तः ) सत्यकथनशीलाः ( कर्त्ता-विण ) तैः महात्मभिः= महान् आत्मा येषां ( बहुव्री ) तैः उदाराशयैः ( कर्त्ता-विण ) महर्षि-कल्पैः=ईषदूनाः महर्षयः=( कल्पप् प्रत्ययः ) तैः महर्षितुल्यैः ( कर्त्ता-विण) केवलैः=मुख्यैः (कर्त्ता-विण) ऋषिभिः=मुनिभिः मन्त्रद्रष्टृभिः इत्यर्थः ( आवृतां इत्यस्य-कर्त्ता-३या ) आवृतां=व्याप्तां ( आ-वृ-धा+कर्म्मणि-क्त) पुरीं आवासयामास। अत्र प्रथमे पादे इन्द्रवंशा अन्येषु च पादेषु वंशा-विलं वृत्तं तयोरुपजातिः । १९ ॥

वाच्यान्तरं । आवृता पुरी आवासयामासे । १९ ॥

इस पुरी में साग्निक, गुणवान् वेदवेदाङ्गके जाननेवाले सहस्र दान करनेवाले सत्यवादी, महर्षिसदृश महात्मा ब्राह्मणश्रेष्ठ और केवल ऋषि बसते थे । १९ ॥

(19.) The city was inhabited by Sagnik (fireworshipeprs) Brahmans who were possessed of good qualities and had mastered the Vedas and Sharangas and also by distinguised Rishis

who truthful and maguanimous, and were as good as *Mtharshis* and gave away by thousands.

**तस्यां इति ।** अन्वयः। तस्यां अयोध्यायां पुर्य्यां वेदवित् सर्व्वसंग्रहः दीर्घदर्शी महातेजाः पौरजानपदप्रियः (राजा दशरथः लोकस्य परिरक्षिता इति चतुर्थश्लोकेन अन्वयः)। २०॥

व्याख्या। चतुर्भिः श्लोकैः कलापकमाह। तस्यां (सर्व्व-अधि-विण) अयोध्यायां पुर्य्यां (अधि-७मी) वेदवित्=वेदं वेत्ति यः (विद-धा=क्विप्) सः वेदज्ञः (वैदिकस्य अधिकारात् आद्योऽयं गुणः, कर्त्ता-विण) सर्व्वसंग्रहः—संगृह्णाति यः सः संग्रहः (सम्-ग्रह-धा+कर्त्तरि-अच्) संग्राहकः, सर्व्वेषां अपरिमितचतुरङ्गबलराष्ट्रदुर्गादीनां (६तत्) संग्रहः संग्रह-कर्त्ता (कर्त्ता-विण) दीर्घदर्शी=दीर्घं द्रष्टुं शीलं अस्य (दृश धा+शीलार्थे णिन्) सः बहुदर्शी सामादिप्रयोगे दर्शननिपुणः (कर्त्ता-विण) महातेजाः=महत् तेजः यस्य (बहुव्री) सः महाप्रतापशाली (कर्त्ता-विण) पौरजानपदप्रियः=पुरे भवाः (पुर-श+षण) नगरवासिनः, जनपदे भवाः जानपदाः (जनपद-श+षण) देशवासिनः, पौराः च जानपदाः च (द्वन्द्व) तेषां (६तत्) प्रियः सर्व्वाः प्रकृतयः दशरथे सन्तुष्टाः आसन् इत्यर्थः (कर्त्ता-विण) राजा भूपतिः (कर्त्ता-विण) दशरथः (कर्त्ता) लोकस्य=जनस्य प्रजापुञ्जस्य इत्यर्थः (कर्म्म ६ष्ठी) परिरक्षिता—पालयिता (परि-रक्ष-धा+तृच, कर्त्ता-विण) आसीत् इति शेषः (क्रिया)। २०॥

वाच्यान्तरं। वेदविदा सर्व्वसंग्रहेण दीर्घदर्शिना महातेजसा पौरजानपदप्रियेण राज्ञा दशरथेन परिरक्षित्रा अभूयत। २०॥

उस अयोध्या पुरी में वेदज्ञ, चतुरंगबल के संग्रह करने वाले दीर्घदर्शी, महातेजस्वी, बली, पुर और जनपद के रहने वालों के प्रिय राजा दशरथ रहते थे। २०॥

(20.) Here ruled the king *Dasrath* who was versed in the Vedas and possessed of an entire army. Of vast experience and high spirits, he was loved and liked by both in and around his country.

इक्ष्वाकूणां इति । अन्वयः सुगमः ।

व्याख्या। स कथम्भूत इति आह। इक्ष्वाकूणां=इक्ष्वाकोः अपत्यानि पुमांसः इक्ष्वाकवः इक्ष्वाकुवंशोद्भवाः (इक्ष्वाकु-शब्द+अण, तद्राजस्य बहुषु इत्यादिना अणः लोपः) तेषां मध्ये (निर्द्धारे ६ष्ठी) अतिरथः=दश-सहस्रमहारथैः योद्धा तेषु वीरः इत्यर्थः (कर्त्ता-विण) यज्वा=यजते यः (यज्-धा+क्वनिप्) याज्ञिकः विधिनेष्टवान् (यज्वात् विधिनेष्टवान् इत्यमरः कर्त्ता-विण) धर्म्मपरः=धर्म्मे (७तत्) परः धार्म्मिकः (कर्त्ता-विण) वशी=विजितेन्द्रियः स्वाधीनः (कर्त्ता-विण) महर्षिकल्पः=ईषदूनः महर्षिः (कल्पप् प्रत्ययः) महर्षिसदृशः (कर्त्ता विण) राजर्षिः=राजा ऋषिः इव (उपमित समासः) त्रिषु लोकेषु त्रिभुवनेषु (अधि) विश्रुतः=प्रसिद्धः (कर्त्ता-विण)। २१ ॥

वाच्यान्तरं। अतिरथेन यज्वना धर्म्मपरेण वशिना महर्षिकल्पेन इत्यादि। २१ ॥

इक्ष्वाकुकुल के महा योद्धा, यज्ञ करनेवाले, धार्म्मिक, स्वाधीन, महर्षियों के समान राजर्षि तीनों लोक में प्रसिद्ध राजा दशरथ रहते थे। २१ ॥

(21,) He regularly performed the sacrifices, was virtuous and had subdued his senses. He was a *Rajarshi* as great as a *Maharshi* and was the greatest warrior among the Ikshakus, well known to the three worlds.

बलवान् इति । अन्वयः। बलवान् निहतामित्रः मित्रवान् विजितेन्द्रियः धनैः च सञ्चयैः च शक्रवैश्रवणोपमः। २२ ॥

व्याख्या। पुनः कथम्भूतः? बलवान्=बलं विद्यते यस्य (वतुप, कर्त्ता-विण) निहतामित्रः=निहतानि अमित्राणि शत्रवः येन (बहुव्री) सः तथोक्तः (कर्त्ता-विण) मित्रवान्=सदन्धु सहायः (कर्त्ता-विण) विजितेन्द्रियः=विजितानि पराजितानि इन्द्रियानि चक्षुरादिविषयभोगद्वाराणि येन (बहुव्री) सः वशीकृतेन्द्रियः (कर्त्ता-विण) धनैः=हिरण्यादिभिः (करण) अन्यैः सञ्चयैः च=धान्यादिसंग्रहैः (करण) शक्रवैश्रवणोपमः=शक्रः इन्द्रः, विश्रवसः अपत्यं पुमान् वैश्रवणः (विश्रवस्‌ श+अण्) कुवेरः, तौ उपमा यस्य (बहुव्री) सः इन्द्रेण कुवेरेण च तुल्यः इत्यर्थः (कर्त्ता-विण। २२॥

वाच्यान्तरं। धनवता निहतामित्रेण मित्रवता विजितेन्द्रियेण शक्रवैश्रवणोपमेन राज्ञा दशरथेन इत्यादि। २२॥

बलवान् निहतशत्रु, मित्रवान् जितेन्द्रिय, धन और धान्य संग्रह से, इन्द्र और कुवेर के समान। २२॥

(22.) Perfeet master of self, the killers of his enemies and possessed of many friends, he equalled Indra and Kuber in plenty (power) and riches.

यथा इति। अन्वयः। यथा महातेजाः मनुः लोकस्य परिरक्षिता, तथा, राजा दशरथः लोकस्य परिरक्षिता। २३॥

व्याख्या। यथा=यादृशः (अव्य) महातेजाः=महत् तेजः यस्य (बहुव्री) सः अतितेजस्वी (उपमा-कर्त्ता-विण) मनुः=अस्य वंशस्य आदिमो राजा वैवस्वतः मनुः (उपमा-कर्त्ता) लोकस्य (कर्म्म-६ष्ठी) परिरक्षिता (तृच, कर्त्ता-विण) तथा=तादृशः (अव्य) राजा दशरथः (कर्त्ता) लोकस्य परिरक्षिता आसीत् इति शेषः (क्रिया)। २३॥

वाच्यान्तरं। यथा महातेजसा मनुना परिरक्षिता तथा राज्ञा दशरथेन परिरक्षिता अभूयत। २३॥

महा तेजस्वी मनु जैसे लोक की रक्षा करनेवाले थे, वैसे ही राजा दशरथ लोगों की रक्षा करते थे । २३ ॥

(23.) As the high-spirited Manu was the protector of the world, so the king Dasarath protected the world.

तेन इति । अन्वयः । सत्याभिसन्धेन त्रिवर्गं अनुतिष्ठता तेन ( दशरथेन ) इन्द्रेण अमरावती इव सा श्रेष्ठा पुरी पालिता । २४ ॥

व्याख्या । सत्याभिसन्धेन=सत्ये अभिसन्धा ( सम्-धा-धा+अङ् ) यस्य ( बहुव्री ) तेन सत्यप्रतिज्ञेन ( कर्त्ता-विश ) त्रिवर्गं=धर्म्मार्थकामान् ( अनुतिष्ठता इत्यस्य-कर्म्म, ) अनुतिष्ठता=आचरता ( अनु-स्था-धा+शतृ कर्त्ता विश ) तेन=दशरथेन ( पालिता इत्यस्य-कर्त्ता-३या ) इन्द्रेण=देवराजेन ( उपमा-कर्त्ता-३या ) अमरावती इव=स्वर्गः इव ( उपमा-कर्म्म-१या ) सा=अयोध्या ( सर्व्व-कर्म्म-विश ) श्रेष्ठा=उत्तमा ( प्रशस्य-श्र +इष्ठ ) पुरी=नगरी ( पालिता इत्यस्य-कर्म्म ) पालिता=रक्षिता दुष्ट-निग्रहेण शिष्टपालनेनेत्यर्थः ( पा-धा+णिच कर्म्मणि-क्त ) त्रिवर्गसम्पादककर्म्मानुष्ठानेन पालिता अभवत् इति भावः । २४ ॥

वाच्यान्तरं । सत्याभिसन्धः अनुतिष्ठन् सः इन्द्रः अमरावतीं इव तां श्रेष्ठां पुरीं पालितवान् । २४ ॥

सत्यप्रतिज्ञ राजा दशरथ धर्म्म, अर्थ, काम का अनुष्ठान करते थे, और इन्द्र जैसे अमरावती को पालन करते है, उसी ढव से उस श्रेष्ठ पुरी को पालन करते थे । २४ ॥

(24) As Amaravati was ruled by Indra so was that best of cities ruled by Dasarath, who was true to his word and pursued wealth and the objects of enjoyment and perfored his duties.

तस्मिन् इति । अन्वयः । तस्मिन् पुरवरे जनाः हृष्टाः धर्म्मात्मानः बहुश्रुताः स्वैः स्वैः धनैः तुष्टाः अलुब्धाः सत्यवादिनः (आसन्) २५ ॥

व्याख्या । तस्मिन् पुरवरे=नगरश्रेष्ठे अयोध्यायां ( अधि ) नराः= सर्व्वे मानवाः ( कर्त्ता-१मा ) हृष्टाः=आह्लादिताः ( हृष-धा+क्त, कर्त्ता-विण ) धर्म्मात्मानः=धर्म्मे आत्मा येषां ( बहुव्री ) ते धर्म्मानुष्ठानदत्तचित्ताः ( कर्त्ता-विण ) बहुश्रुताः=बहु श्रुतं येषां ( बहुव्री ) ते अशेषशास्त्रज्ञाः ( कर्त्ता-विण ) स्वैः स्वैः=निजैः निजैः (करण-विण, वीप्सायां द्विर्वचनं) धनैः=सुवर्णादिभिः ( करण ) तुष्टाः=सन्तोषं गताः परधने विमुखाः इति यावत् ( तुष-धा+क्त, कर्त्ता-विण ) अलुब्धाः=लोभविरहिताः ( न-लुभ-धा+क्त, ( कर्त्ता-विण ) सत्यवादिनः=सत्यं वदितुं शीलं येषां ( वद-धा+णीन् ) ते सत्यभाषणशीलाः ( कर्त्ता विण ) आसन् इति शेषः । २५ ॥

वाच्यान्तरं । जनैः हृष्टैः धर्म्मात्मभिः बहुश्रुतैः तुष्टैः अलुब्धैः सत्यवादिभिः अभूयत । २५ ॥

उस अच्छी नगरी मे सब लोग संतुष्ट, धर्म्मात्मा, शास्त्रज्ञ, अपने अपने धन से सन्तुष्ट, निर्लोभ और सत्यवादी थे । २५ ॥

(25) The men in that best of cities were all truthful, religious versed in the shasters, and contended with their own riches and stranger to covetousness or envy.

न इति । अन्वयः । तस्मिन् पुरोत्तमे कश्चित् अल्पसन्निचयः न आसीत् । यः हि भगवान्धनधान्यवान् ( ईदृशः ) अविद्धार्थः कुटुम्बी कश्चित् न आसीत् । २६ ॥

व्याख्या । तस्मिन् – ( सर्व्व-अधि-विण ) पुरोत्तमे=पुरेषु ( ७तत्, न निर्द्धारे इति ६ष्ठीसमासप्रतिषेधः ) उत्तमः श्रेष्ठः तस्मिन् अयोध्यायां इत्यर्थः ( अधि ) कश्चित्=कोऽपि जनः ( कर्त्ता-किम्-श-१मा+चित्, अव्य ) अल्पसन्निचयः=सतां उत्कृष्टवस्तूनां ( ६तत् ) निचयः समूहः सन्निचयः, अल्पः सन्निचयः यस्य (बहुव्री) सः तथोक्तः (कर्त्ता-विण) न आसीत् (अस-

धा+लङ्, क्रिया) यः हि ( प्रातिपदिकार्थे-१मा ) अगवाश्वधनधान्यवान्= गावश्च अश्वाश्च धनानि च धान्यानि च ( द्वन्द्व ) न तानि, तेषां अभावः वा, तानि तत् वा विद्यन्ते अस्य सः (अर्थाभावे अव्ययीभावे नञ्तत्पुरुषे वा ततः मतुप् ) यस्य गवादयः न सन्ति इत्यर्थः ( १मा-विण) अतएव असिद्धार्थः= असिद्धः निष्फलः अर्थः ऐहिकं आमुष्मिकं प्रयोजनं यस्य सः ( बहुव्री ) यः इह जगति परलोकेषु च सुखभोगकारणं किञ्चिदपि कर्म्म न करोति इत्यर्थः ( १मा विण ) ईदृशः कश्चित् ( सर्व्व-कर्त्ता-विण ) कुटुम्बी= कुटुम्बः स्त्रीपुत्रादयः परिवारवर्गः सः विद्यते अस्य ( कुटुम्ब-अ-इन् ) गृहस्थः इत्यर्थः ( कर्त्ता ) न आसीत् ( क्रिया )। अत्र अभावमुखेन सर्व्वेषां बहुधनवत्ता सूच्यते । २६ ॥

वाच्यान्तरं। अल्पसन्निचयेन केनचित् न अभूयत, कुटुम्बिना न अभूयत । २६ ॥

उस सर्व्वोत्तम नगर में ऐसा कोई नहीं था, जिस ने थोड़ा संचय किया था, और न ऐसा गृहस्थ था, जिस के गौ, घोड़े, धन और धान्य न था, और जिस का प्रयोजन सिद्ध नहीं हुआ हो । २७ ॥

(26,) In that best of cities there was none who had not amassed great wealth and there was not such a house-holder who without cattle, horses, riches and crops and who had not gained his wishes.

**कामी इति ।** अन्वयः। अयोध्यायां क्वचित् पुरुषः कामी च न, कदर्य्यः वा न, नृशंसः वा न, अविद्वान् च न, नास्तिकः च न, द्रष्टुं शक्यं । २७ ॥

व्याख्या। अयोध्यायां ( अधि ) क्वचित्=कुत्रापि ( अधि-अव्य ) पुरुषः=जनः ( शक्यं इत्यस्य कर्म्म-१मा ) कामी=विषयभोगी तदेकतत्परः इत्यर्थः ( कर्म्म-विण ) द्रष्टुं=निरीक्षितुं ( दृश-धा+तुमुन् ) न शक्यं ( शक-धा+ण्यप्, क्रिया, सामान्ये नपुंसकं, शक्यं च अनेन अमांसादिभि-

रपि चुतप्रतिहन्तुमिति महाभाष्ये प्रयोगात्) लोकैः इति कर्तृपदमूह्यं। कश्चित् पुरुषः कदर्य्यः=आत्मपीड़नादिदोषयुक्तः (कर्म्म विश, आत्मानं धर्म्मकृत्यं च पुत्रदारांश्च पीड़येत्, लोभी च पितरौ भावृन् स कदर्य्य इति स्मृतः) नृशंसः वा=नॄन् मनुष्यान्=शंसति हिनस्ति (नृ-शंस-धा+अच्) क्रूरः (कर्म्म-विश, नृशंसः घातुकः क्रूरः इत्यमरः) अविद्वान्=अपण्डितः (कर्म्म विश) नास्तिकः ईश्वरविश्वासविरहितः वेदनिन्दकः वा (कर्म्म-विश) पुरुषः द्रष्टुं न शक्यं इति प्रत्येकं अभिसम्बध्यते। पृथक् पृथक् ग्रहणात् एतेषां एकतमदोषयुक्तः समुदायदोषयुक्तः वा कश्चित् न दृश्यते इति सूचयति। २७॥

वाच्यान्तरं। कामिनं कदर्य्यं नृशंसं अविद्वांसं नास्तिकं वा द्रष्टुं न शक्नुयुः। २७॥

अयोध्या में कामी, अपनेतईं और स्त्री पुत्रादि के दुख देनेवाले निठुर, मूर्ख और नास्तिक कोई पुरुष नहीं था। २७॥

(27) In Ayodhya there was nowhere a lustful, wicked, or heartless person; nor was there to be found one godless and illiterate.

सर्व्वे इति। अन्वयः। (अयोध्यायां) सर्व्वे नराः नार्य्यः च अमलाः महर्षयः इव धर्म्मशीलाः सुसंयुताः शीलवृत्ताभ्यां मुदिताः (आसन्)। २८॥

व्याख्या। अयोध्यायां सर्व्वे (सर्व्व-कर्त्ता-विश) नराः=मानवाः (कर्त्ता) नार्य्यः च=स्त्रियः च (कर्त्ता) अमलाः=निर्म्मलाः दोषशून्याः (उपमा-कर्त्ता-विश) महर्षयः इव=महान्तः (कर्म्मधा) ऋषयः ते इव (इवेन अलुक, उपमा-कर्त्ता) धर्म्मशीलाः=धार्म्मिकाः (कर्त्ता-विश) सुसंयुताः=सुष्ठु निग्रहीतेन्द्रियाः (सु-सम्-यम-धा+क्त, कर्त्ता विश) शील-वृत्ताभ्यां=शीलं चरित्रं च वृत्तं आचरणं च (द्वन्द) ताभ्यां (करण)

मुदिता:—आनन्दिता: सर्व्वे सच्चरित्रा: सदाचारा: इत्यर्थ: ( कर्त्ता-विश ) आसन् इति शेष: । २८ ॥

वाच्यान्तरं । सर्व्वै: नरै: नारीभि: अमलै: महर्षिभि इव धर्म्मशीलै: सुसंयुतै: मुदितै: अभूयत । २८ ॥

वहां सब नर और नारी धर्म्मशील वशीकृतेन्द्रिय अपने चरित्र और अनुष्ठान से सन्तुष्ट, महर्षि के न्याई निर्मल थे । २८ ॥

(28.) Like great and pure Rishis every one, wehther male or female, was pious and cheerful for their character and deeds and had control over their passions.

नाकुण्डली इति । अन्वय: । ( कश्चित् ) अकुण्डली न विद्यते, अमुकुटो न विद्यते, असग्वी न विद्यते, अल्पभोगवान् न विद्यते, अमृष्ट: न विद्यते, न लिप्ताङ्ग: न विद्यते, असुगन्ध: न विद्यते । २९ ॥

व्याख्या । कश्चित् जन: इति शेष: ( कर्त्ता ) अकुण्डली=कुण्डलं कर्णाभरणं विद्यते अस्य स कुण्डली स: न भवति इति अनलङ्कृतकर्ण: ( कुण्डल-अ+इन्, कर्त्ता-विश ) न विद्यते=न अस्ति ( विद-धा+कर्त्तरि-लट, क्रिया ) अमुकुटी=न मुकुटं शिरोभूषणं तद्वान् न भवति इति न ( कर्त्ता-विश ) सर्व्वे मुकुटशोभितशिरस: इत्यर्थ: । असग्वी=स्रक्पुष्पादि- माल्यं तद्वान् न भवति इति न ( स्रज-अ+विन, कर्त्ता-विश ) सर्व्वेषां गलदेशे माल्यं अस्ति इत्यर्थ: । अल्पभोगवान् न=धर्म्माद्यविरुद्ध: कामभोग: भोग: तद्वान् न भवति इति न ( कर्त्ता-विश ) धर्म्मस्य अविरोधेन सुखं अनुभवन्ति इत्यर्थ: । अमृष्ट: न=अमार्ज्जित: अनिर्म्मल: न, नलिप्ताङ्ग: न लिप्तं (सुप्सुपेति समास:) चन्दनादिना चर्च्चितं अङ्गं यस्य इति न (बहुव्री, कर्त्ता-विश ) सर्व्वे चन्दनचर्च्चितदेहा: इत्यर्थ: । अतएव असुगन्ध:=न सुगन्धरहित: न ( कर्त्ता-विश ) विद्यते प्रत्येकेनान्वय: द्वौ न शब्दौ प्रकृत-मर्थं गमयत इति न्यायेन सर्व्वत्र अर्थसंगति: कार्य्या । २९ ॥

वाच्यान्तरं । अकुण्डलिना, अमुकुटिना, अस्रग्विना, अल्पभोगवता, अमृष्टेन, लिप्ताङ्गेन, असुगन्धेन न विद्यते । २९ ॥

वहां ऐसा कोई नहीं था, जिस के कानों में कुण्डल सिर में मुकुट, गले में माला न था, और जो अल्प भोग नहीं करता, और जिसका निर्म्मल चन्दन लगाए हुए और सुगन्ध देह नहीं था । २९ ॥

(29.) There was none that had not earrings in his ears or crown in his head or garland about his neck; none that had not a considerable quantity of enjoyable things. Nor was there any one that did not look neat and clean and did not cover his body with sandle, which breathed fragrance around.

**नामृष्टभोजी इति ।** अन्वयः । अमृष्टभोजी न दृश्यते, अदाता न दृश्यते, अनङ्गदनिष्कधृक न अपि दृश्यते, अहस्ताभरणः वा अपि न दृश्यते, अनात्मवान् न अपि दृश्यते । ३० ॥

व्याख्या । अमृष्टभोजी=न मृष्टं मार्जितं अमृष्टं अपरिष्कृतं इत्यर्थः भुङ्क्ते यः सः (भुज् धा + क्विप, कर्म्म-विण) कश्चिदिति शेषः (कर्म्म-१मा) न दृश्यते=न अवलोक्यते (दृश-धा+कर्म्मणि लट, क्रिया) सर्व्वेषामेव अन्नानि परिष्कृतानि इत्यर्थः । अदाता न=सर्व्वएव वदान्याः इत्यर्थः (कर्म्म-विण) अङ्गदनिष्कधृक न अपि=अङ्गदः केयूरः वाह्वोः आभरणं निष्कः वक्षोभूषणं (द्वन्द्व) तौ धरति यः सः (धृ-धा+क्विप) सः न भवति इति न (कर्म्म-विण) सर्व्वएव अङ्गदधारिणः निष्कधारिणश्च इत्यर्थः, अहस्ताभरणः न अपि=हस्तस्य (६तत्) आभरणं वलयादिकं तत् नास्ति यस्य (वहुव्रो) वलयादिरहितः इत्यर्थः इति न (कर्म्म-विण) अनात्मवान् न अपि=अजितान्तःकरणः (कर्म्म-विण) न दृश्यते इति प्रत्येकेन अभिसम्बध्यते, लोकैः इति कर्तृपदं उह्यं । ३० ॥

वाच्यान्तरं । अमृष्टभोजिनं अनङ्गदनिष्कधृतं अहस्ताभरणं अनात्मवन्तं न पश्यन्ति । ३० ॥

वहां ऐसा भी कोई पुरुष नहीं देखने में आता था, जो मैला भोजन करता था, दान नहीं करता, बाजु और कण्ठा, और कड़े पहने हुए और जो जितेन्द्रिय नहीं था। ३०॥

(30.) There was no one to be found who took unclean food and was not generous; none who had not bracelets; and who was not master of his senses.

**नानाहित इत्यादि।** अन्वयः। अयोध्यायां कश्चित् अनाहिताग्निः न आसीत्, अयज्वा न आसीत्, क्षुद्रः न आसीत्, तस्करः न आसीत्, आवृत्तः न आसीत्, संकरः च न आसीत्। ३१॥

व्याख्या। अयोध्यायां (अधि) कश्चित् (कर्त्ता-अव्य) अनाहिताग्निः=न आहिताः न हुताः अग्नयः गार्हपत्यादिर्वेताग्नयः येन (बहुव्री) सः (कर्त्ता-विण) न आसीत् (क्रिया) साग्निकद्विजानां प्रत्यहं होमः कर्त्तव्यः, तत्र च सर्व्वएव साग्निकाः इत्यर्थः। अयज्वा=यजति यः (यज-धा+कर्त्तरि वनिप) स न सोमयागरहितः इत्यर्थः (कर्त्ता-विण), क्षुद्रः न=अल्पविद्यैश्वर्य्यादिमान् न (कर्त्ता-विण) तस्करः वा न=चौर अपि न (कर्त्ता-विण) आवृत्तः न च=दुश्चरित्रः सदाचाररहितः (कर्त्ता-विण, अत्र कुत्सा नञः अर्थः) सङ्करः न=वर्णसांकर्य्योत्पन्नः न (कर्त्ता-विण) कश्चित् न दृश्यते इति प्रत्येकेन अभिसम्बध्यते। ३१॥

वाच्यान्तरं। अनाहिताग्निना अयज्वना क्षुद्रेण तस्करेण आवृत्तेन सङ्करेण न अदृश्यत। ३१॥

अयोध्या में सब साग्निक और सोम याजी थे, क्षुद्र और चोर कोई नहीं था, और न दुश्चरित्र और वर्णसंकर था। ३१॥

(31.) None who was not a worshiper of the holy fire and did not offer sacrifices was here, No mean-minded man nor thief was to be found here. Nor was there any man of wicked character nor of mixed birth.

**स्वकर्म्म इति ।** अन्वयः । ब्राह्मणाः नित्यं स्वकर्म्मनिरताः विजितेन्द्रियाः दानाध्ययनशीलाः च प्रतिग्रहे संयताः च । ३२ ॥

व्याख्या । तत्र अयोध्यायां ब्राह्मणाः—ब्रह्म वेदं विदन्ति अधीयन्ते वा ( ब्रह्मन्-अ+अण् ) विप्राः ( कर्त्ता ) नित्यं=प्रतिदिनं ( अत्यन्तसंयोगे-२या ) स्वकर्म्मनिरताः=स्वस्य ( ६तत् ) कर्म्मणि पञ्चमहायज्ञादौ ( ७तत् ) निरताः तत्पराः ( नि-रम-धा+क्त, कर्त्ता-विण) विजितेन्द्रियाः= विजितानि पराजितानि इन्द्रियाणि चक्षुरादीनि यैः ( बहुव्री ) ते कामादीनां विजेतारः ( कर्त्ता-विण ), दानाध्ययनशीलाः=यथाशक्ति यथाप्राप्तं परस्मै अर्पणं दानं, वेदादिपाठः अध्ययनं दानशीला अध्ययनशीलाश्च ( कर्त्ता-विण ) प्रतिग्रहे=विधिना परदत्तस्य स्वीकारः प्रतिग्रहः दानग्रहण इत्यर्थः तस्मिन् ( अधि ) संयताः सङ्कुचिताः ( सम्-यम-धा+क्त ) निषिद्धप्रतिग्रहरहिताः इत्यर्थः ( कर्त्ता-विण ) आसन् इति शेषः । ३२ ॥

वाच्यान्तरं । ब्राह्मणैः स्वकर्म्मनिरतैः विजितेन्द्रियैः दानाध्ययनशीलैः संयतैः अभूयत । ३२ ॥

सब ब्राह्मण जितेन्द्रिय और नित अपना कर्म्मानुष्ठान दान और वेद पाठ करते थे, और दान ग्रहण करने में संकुचित होते थे । ३२ ॥

(32.) The Brahmins of Ayodhya, perfect masters of their senses, at all times remained engaged in their works of devotion, study, and charity and were very careful in accepting alms.

**नास्तिकः इति ।** अन्वयः । क्वचित् कश्चित् नास्तिकः न विद्यते, अनृती न विद्यते, अबहुश्रुतः न विद्यते, असूयकः न विद्यते, अशक्तः च न विद्यते, अविद्वान् न विद्यते । ३३ ॥

व्याख्या : अयोध्यायां क्वचित्=कुत्रापि ( अधि अव्य ) कश्चित्= कः अपि जनः ( किम्-अ+१मा+चित्, अव्य-कर्त्ता ) नास्तिकः=नास्ति

परलोक: ईश्वर: वा इति बुद्धिमान्, वेदनिन्दक: वा (कर्त्ता-विष) न विद्यते=न अस्ति (विद्-धा+कर्त्तरि-लट्, क्रिया) अनृती न—ऋतं=सत्यं तद्विद्यते अस्य स: न भवति (न ऋत-अ+इन्) मिथ्यावादी न, (कर्त्ता-विष) अबहुश्रुत:=न बहुश्रुतं शास्त्राध्ययनजन्यज्ञानं यस्य (बहुव्री) स: अल्पशास्त्रज्ञ: इत्यर्थ: न (कर्त्ता-विष) असूयक: न=अन्ययुभद्वेषी (कर्त्ता-विष) न (अव्य) अशक्त: न=स्वकीये इहलौकिके पारलौकिके च कार्य्यसाधने असमर्थ: न (न-शक-धा+क्त, कर्त्ता-विष) अविद्वान्=न वेत्ति न जानाति य: स: (विद्-धा+शतृ) अपण्डित: क्वचित् न विद्यते इति प्रत्येकेन सह अन्वय:। ३३ ॥

व्याख्यान्तरं। केनचित् नास्तिकेन, अनृतिना, अबहुश्रुतेन, असूयकेन, अशक्तेन, अविदुषा न विद्यते। ३३ ॥

वहां कहीं नास्तिक, मिथ्यावादी, बहुत न पढ़ा हुआ और और की भलाई का द्वेष करनेवाला, असमर्थ, मूर्ख न था ॥ ३३ ॥

(33,) There was no atheist in Ayodhya nor any truthless person was there, Every one was well-read in the Shastras. The envious, incompetent and the ignorant were strangers to this soil.

नाषडङ्गवित् इति। अन्वय:। अत्र कश्चन अषडङ्गवित् न अस्ति, अव्रत: न अस्ति, अबहुश्रुत: न अस्ति, दीन: न अस्ति, क्षिप्तचित्त: वा न अस्ति, व्यथित: वा अपि न अस्ति। ३४ ॥

व्याख्या। अत्र=अयोध्यायां (अधि-अव्य) कश्चन=कोऽपि (किम्-अ+पुं-१मा-१व+चन, कर्त्ता-अव्य) अषडङ्गवित्=षडङ्गानि=शिक्षा-कल्पादिवेदाङ्गानि तानि न वेत्ति य: स: (विद्-धा+क्विप्) अशास्त्रज्ञ: (कर्त्ता-विष) न अस्ति (क्रिया) अव्रत: न=व्रतं चान्द्रायणादिव्रतं तद्विहीन: न (कर्त्ता-विष) अबहुश्रुत: न=न बहुश्रुतं यस्य (बहुव्री) अपण्डित: न (कर्त्ता-विष) दीन: न—दु:खी न (कर्त्ता-विष) क्षिप्त-

चिन्न:=खिन्नं चित्तं यस्य ( वहुव्री ) स: उन्मत्त: न ( कर्त्ता-विण )
व्यथित: न=व्यथा सञ्जाता अस्य ( व्यथा-अ+इतच् ) आधिव्याधिपीडित:
न ( कर्त्ता-विण ) सर्व्वत्र अस्ति इति क्रियापदं ऊह्यं । ३४ ॥

वाच्यान्तरं । केनचित् अषड़ङ्गविदा, अव्रतेन, अवहुश्रुतेन, दीनेन, खिन्नचित्तेन, व्यथितेन न भूयते । ३४ ॥

ऐसा कोई न था, जो षड़ंग वेद न जानता हो, व्रत न करता हो, और वहुत पढ़ा हुआ न हो, और कोई दीन उन्मत्त दुःखित भी नहीं था । ३४ ॥

(34.) There was none that was not versed in the six branches of learning, that was not of ample experience and high observances. No poor man, none of insane mind, none grieved at heart was there.

कश्चित् इति । अन्वयः । अयोध्यायां कश्चित् नरः अश्रीमान् न द्रष्टुं न शक्यं, अरूपवान् द्रष्टुं नापि शक्यं, राजनि अभक्तिमान् द्रष्टुं शक्यं, वा नारी अश्रीमती, अरूपवती, राजनि अभक्तिवती द्रष्टुं न शक्यं । ३५ ॥

व्याख्या । अयोध्यायां ( अधि ) कश्चित् नरः=कोऽपि जनः (कर्त्ता-अव्य ) अश्रीमान्=श्रीः शोभा सा न विद्यते अस्य ( कर्म्म-विण ) अरूपवान्=रूपं लावण्यं तत् न विद्यते अस्य ( कर्म्म-विण ) राजनि=भूपती दशरथे ( अधि-७मी ) अभक्तिमान्=भक्तिः स्नेहः तदभाववान् ( कर्म्म-विण ) द्रष्टुं न शक्यं ( क्रियासामान्ये नपुंसकं ) वा=अथवा ( अव्य ) काचित् नारी अश्रीमती अरूपवती दशरथे स्नेहाभाववती द्रष्टुं न शक्यं । ३५ ॥

वाच्यान्तरं । कंचित् नरं नारीं अश्रीमन्तं अरूपवन्तं अभक्तिमन्तं द्रष्टुं न शक्नुयुः । ३५ ॥

ऐसा कोई नारी और नर अयोध्या में न था, जो श्रीमान् रूपवान् था, और राजा की भक्ति नहीं करता था। ३५ ॥

(35.) There was not to be found any person in ayodhya male or female, that was not well-formed,and beautiful, and was not loyal to the king.

**वर्णेषु इति।** अन्वयः। अग्रयचतुर्थेषु वर्णेषु ( सर्व्वे ) देवतातिथिपूजकाः कृतज्ञाः वदान्याः शूराः विक्रमसंयुताः च (आसन् ) । ३६ ॥

व्याख्या। प्रथमं राजानं स्तुत्वा तस्मिन् पुरवरे इत्यादिभिः ब्राह्मणप्रशंसा कृता, इदानीं क्षत्रियादयः साधारणेन प्रशंस्यन्ते वर्णेषु इति। अग्रयचतुर्थेषु = अग्रयः अग्रे भवः ( अग्र-श्र+यण् ) ब्राह्मणः शूद्रादिगणनया येषां ( बहुव्री ) तेषु ब्राह्मणक्षत्रियवैश्यशूद्रेषु इत्यर्थः ( अधि ) वर्णेषु=जातिषु मध्येषु ( निर्द्धारे-७मी सर्व्वे इति शेषः ( कर्त्ता ) देवतातिथिपूजकाः पूजयन्ति ये ते पूजकाः ( पूज-धा+ण्वुल ) देवतानां अतिथीनां च ( इन्द्व ) पूजकाः ( कर्त्ता विण ) कृतज्ञाः=कृतं उपकारं जानन्ति ये ते ( कृत-ज्ञा-धा+ड) प्रत्युपकर्त्तारः ( कर्त्ता-विण ) वदान्याः च=दानशौण्डाः च ( वदान्यो दानशौण्डः स्यात् इति विश्वः, कर्त्ता-विण) शूराः=बलवन्तः ( कर्त्ता-विण ) विक्रमसंयुता=विक्रमेण ( ३तत् ) संयुताः पराक्रमशालिनः ( कर्त्ता-विण ) आसन् इति शेषः ( क्रिया ) ३६॥

वाच्यान्तरं। सर्व्वैः देवतातिथिपूजकैः कृतज्ञैः वदान्यैः शूरैः विक्रमसंयुतैः अभूयत। ३६ ॥

ब्राह्मणादि सब देवता और अतिथि की पूजा करते थे, और कृतज्ञ, दानी शूर और वीर थे। ३६ ॥

(36.) Every one among the Brahmins worshipped his gods and was hospitable to his guests; was grateful, liberal, warrior and high-spirited,

**दीर्घायुषः इति।** अन्वयः। पुरोत्तमे सर्व्वे नराः दीर्घायुषः

धर्म्मं सत्यं च संश्रिताः स्त्रिभिः पुत्रपौत्रैः च नित्यं सहिताः ( आसन् )। ३७ ॥

व्याख्या। पुरोत्तमे=पुरेषु ( ७तत् ) उत्तमे अयोध्यायां ( अधि ) सर्व्वे नराः ( कर्त्ता ) दीर्घायुषः=दीर्घं आयुः येषां ( बहुव्री ) ते दीर्घ-जीविनः ( कर्त्ता-विश ) धर्म्मं=वेदविहितकर्म्मानुष्ठानजन्यफलं ( कर्म्म ) सत्यं च ( कर्म्म ) संश्रिताः=अवलम्बिताः ( सम्-श्रि-धा+कर्त्तरि-क्त ) स्त्रिभिः=पत्नीभिः ( सहार्थे-३या ) पुत्रपौत्रैः च=पुत्रस्य पुत्राः पौत्राः ( पुत्र-अ+ष्ण ) पुत्राः च पौत्राः च ( द्वन्द्व ) तैः ( सहार्थे-३या) नित्यं=सतत ( अत्यन्तसंयोगे-२या ) सहिताः=मिलिताः ( कर्त्ता-विश ) आसन् इति शेषः ( क्रिया )। ३७ ॥

वाच्यान्तरं। सर्व्वैः नरैः दीर्घायुर्भिः संश्रितैः सहितैः अभूयत ।३७॥

उस उत्तम पुरी में सब लोग दीर्घजीवी, धर्म्म और सत्यपरायण थे और पुत्र पौत्र और स्त्री के साथ बसते थे। ३७ ॥

(37.) Every one in that best of cities, was longeval religious and truthful, blest with sons, grandsons and wives,

क्षत्रं इति। अन्वयः। क्षत्रं ब्रह्ममुखं आसीत् वैश्याः क्षत्रं अनुव्रताः शूद्राः स्वकर्म्मनिरताः त्रीन् वर्णान् उपचारिणः ( आसन् ) ।३८॥

व्याख्या। क्षत्र=क्षत्रियः ( कर्त्ता ) ब्रह्ममुखं=ब्रह्म ब्राह्मणः मुखं प्रधानं यस्य ( बहुव्री ) तदाज्ञावर्त्ति इत्यर्थः (कर्त्ता-विश) आसीत् (क्रिया), वैश्याः ( कर्त्ता ) क्षत्रं ( अनुयोगे-२या ) अनुव्रताः अधीनाः (कर्त्ता-विश) आसीत् इति शेषः ( क्रिया ) शूद्राः=स्वकर्म्मनिरताः=स्वस्य ( ६तत् ) कर्म्मणि ( ७तत् ) निरताः तत्पराः ( नि-रम-धा+क्त) तेषां किं कर्म्म इत्याह त्रीन् इति। त्रीन् वर्णान्=ब्राह्मणक्षत्रियवैश्यान् ( उपचारिणः इत्यस्य कर्म्म-२या ) उपचारिणः=उपचरन्ति ये ते ( उपचर-धा+णीन् ) सेवकाः ( कर्त्ता-विश ) आसन् इति शेषः ( क्रिया )। ३८ ॥

वाच्यान्तरं। क्षत्रेण ब्रह्ममुखेन अभूयत, वैश्यैः अनुव्रतैः शूद्रैः स्वकर्म्म-निरतैः उपचारिभिः अभूयत। ३८॥

क्षत्रिय ब्राह्मणों की, वैश्य क्षत्रियों की, और शूद्र तीनों वर्ण की सेवा करते थे और अपने काम में लगे हुये थे। ३८॥

(38.) The Kshatriyas were devoted to the Brahmins, and the Uaisyas to their Kshatriya superiors. The Sudras, who served the three superior clases, were all well-pleased with their duty,

**सा इति।** अन्वयः। पुरस्तात् धीमता मानवेन्द्रेण मनुना यथा (तथा) इक्ष्वाकुनाथेन तेन सा पुरी सुपरिरक्षिता॥ ३९॥

व्याख्या। पुरस्तात्=पुराकाले (पूर्व्व-श+अस्ताति, अधि अव्य) धीमता=धीः बुद्धिः विद्यते अस्य (धी-श+मतुप्) तेन धीमता सुबुद्धिना (उपमा-कर्त्ता-विण) मानवेन्द्रेण=नरपतिना (पूर्व्ववत्-विण) मनुना यथा=वैवस्वतेन मनुना इव (उपमा-कर्त्ता इक्ष्वाकुनाथेन इक्ष्वाकूणां (६तत्) नाथः तेन इक्ष्वाकुवंशोद्भवेन राज्ञा (कर्त्ता-विण) तेन=दशरथेन (सर्व्व-कर्त्ता-३या) सा पुरी=अयोध्यानगरी (कर्म्म १मा) सुपरिरक्षिता=दुष्टदमनेन शिष्टपालनेन च सुन्दरं प्रतिपालिता (सु-परि-रक्ष-धा+कर्म्मणि-क्त, क्रिया)। ३९॥

वाच्यान्तरं। धीमान् मानवेन्द्रः मनुः यथा इक्ष्वाकुनाथः सः तां पुरीं सुपरिरक्षितवान्। ३९॥

जैसे मानवश्रेष्ठ धीमान् मनुजी पहिले रक्षा करते थे, इक्ष्वाकुनाथ दशरथने उसी ढंग से इस पुरी की रक्षा की थी। ३९॥

(39.) The country thus described above, was as well-governed by the Lord of the Iskhaku race, as it was in former days, by the sage-like Manu, the prince of men.

**योधानां इति ।** अन्वयः । अग्निकल्पानां पेशलानां अमर्षिणां कृतविद्यानां योधानां ( सङ्घैः ) केशरिणां ( संङ्घैः ) गुहा इव (सा) सम्पूर्णा । ४० ॥

व्याख्या । अग्निकल्पानां=ईषत् ऊनाः अग्नयः ( अग्नि-श=कल्पप् ) तेषां शौर्यातिशयात् अग्नितुल्यानां ( सम्ब-विश ) पेशलानां=अकुटिलानां ( सम्ब विश ) अमर्षिणां—अमर्षः विद्यते एषां ( अमर्ष श+इन् ) तेषां पराभवासहिष्णूणां ( सम्ब विश ) कृतविद्यानां=कृता अभ्यस्ता विद्या अस्त्रादिविद्या यैः ( बहुव्री ) तेषां अस्त्रादिविद्यापारदर्शिनां ( सम्ब विश ) योधानां=युद्धनिपुणानां पुरुषाणां (सम्ब) सङ्घैः इति शेषः समूहैः (कर्त्ताइथा ) केशरिणां=केशराणि विद्यन्ते येषां ( केशर-श+इन् ) तेषां सिंहानां ( सम्ब ) सङ्घैः इति शेषः ( उपमा कर्त्ता-इया ) गुहा=पर्व्वतगह्वरः इव ( उपमा-कर्म्म ) सा पुरी इति शेषः ( कर्म्म ) सम्पूर्णा=आवृता ( सम्-पूर धा+कर्म्मणि क्त, क्रिया ) । ४० ॥

वाच्यान्तरं । योधानां सङ्घाः केशरिणां सङ्घाः गुहां इव तां सम्पूर्णवन्तः । ४० ॥

जैसे गुहा में सिंह रहते हैं, वैसे ही इस पुरी में ऐसे योधा रहते थे, जो आग की बराबर, अकुटिल और पराभव नहीं सह सके और अस्त्रविद्या में निपुण थे । ४० ॥

(40.) Under his rule, Ayodhya, like the den of a lion, became the country of fiery, but honest and well-trained soldiers, unable to bear the insults of others.

**काम्बोजविषये इति ।** अन्वयः । काम्बोजविषये जातैः वाह्लिकैः वनायुजैः नदीजैः च हरिहयोत्तमैः हयोत्तमैः ( सा ) पूर्णा । ४१ ॥

व्याख्या । काम्बोजविषये=काम्बोजनामके देशे ( अधि ७मी )

जातैः=उत्पन्नैः ( जन धा+कर्त्तरि क्त, कर्त्ता विण ) वाह्लिकैः=वाह्लिकदेशजातैः ( ष्ण कर्त्ता-विण) वनायुजैः=वनायुः देशविशेषः तस्मिन् जातैः ( जन-धा+ड. कर्त्ता-विण) नदीजैः=नदी: सिन्धु नदी: लक्षणया ततसमीपोद्भवैः ( कर्त्ता-विण ) हरिहयोत्तमैः=हरिः इन्द्रः तस्य ( ६तत् ) हयः घोटकः उच्चैःश्रवाः सः इव ( उपमानानि सामान्यवचनैः इत्यादिना समासः ) उत्तमाः श्रेष्ठाः तैः ( कर्त्ता-विण) हयोत्तमैः=हयेषु घोटकेषु ( ७तत् ) उत्तमाः तैः ( कर्त्ता-३या ) सा पुरी इति शेषः ( कर्म-१मा ) पूर्णा=व्याप्ता ( पूर्-धा+कर्मणि-क्त. क्रिया ) । ४१ ॥

वाच्यान्तरं । जाताः वाह्लिकाः वनायुजाः नदीजाः हरिहयोत्तमाः नृपोत्तमाः तां पूर्णवन्तः । ४१ ॥

काम्बोज देशके और वाह्लिक देशके अच्छे २ घोड़े और बनायुज और सिन्धु नदी के तीरके ऐसे घोड़ों से पूर्ण थी जो इन्द्र के घोड़े से अच्छे थे । ४१ ॥

(41.) Better than the Uchchaisraba of Indra, horses of the noblest form and breed, of *Kamboya* (a country in the north of India), *Balhika*, (modern *Balkh*. a country lying north-west of *Afganisthan*), *Bonayu* (a country famous for the breed of its horse or Pe cia ) and of the coast of Sindhu were here.

**विन्ध्यपर्व्वतजैः इति।** अन्वयः। विन्ध्यपर्व्वतजैः हैमवतैः अपि मदान्वितैः अतिबलैः पर्व्वतोपमैः मतङ्गजैः पूर्णा ह्य योजने भूयः सा सत्यनामा प्रकाशते । ४२ ॥

व्याख्या। विन्ध्यपर्व्वतजैः=विन्ध्यपर्व्वतजातैः (जन-धा+ड, कर्त्ता-विण ) हैमवतैः=हिमवान् हिमालयपर्व्वतः तत्र जातैः अपि ( कर्त्ता-विण ) मदान्वितैः=मदेन ( ३तत् ) अन्वितैः युक्तैः अपि ( अनु-इ+क्त) मत्तैः ( कर्त्ता-विण ) अतिबलैः=बलं साधारणबलं अतिक्रान्तैः ( अत्यदय

क्रान्ताद्यर्थे द्वितीयया इति २या-समासः ) वलीनमैः (कर्त्ताविण) पर्व्वतो-पमैः=पर्व्वतेन सह उपमा साहश्यं येषां ( वहुव्री ) तैः पर्व्वततुल्यैः इहद्भिः ( कर्त्ता-विण ) मतङ्गजैः=हस्तिभिः ( पूर्णा इत्यस्य कर्त्ता-३या ) पूर्णा ( पूर-धा+क्त ) द्वे योजने=अर्द्धक्रोशान् व्याप्य इयोः योजनयोः इत्यर्थः ( अत्यन्तसंयोगे २या ) भूयः अत्यधिकं राज्ञः सुखधाम एतत् सत्यनामा सत्यं नाम यस्याः ( वहुव्री, डाबुभाभ्यामित्यादिना पक्षे डाप ) सा योद्धु-मशक्या इति अयोध्या अन्वर्थनामा सा पुरी ( सर्व्वं कर्त्ता ) प्रकाशते= शोभते ( प्रकाश-धा+लट, क्रिया ) । ४२ ॥

वाच्यान्तरं । पूर्णया सत्यनामया तथा प्रकाश्यते । ४२ ॥

विन्ध्याचल और हिमालयके मतवारे महावल पर्व्वत के सदृश हाथियों से पूर्ण थी, और दो योजन तक फैली हुई थी, और उस का अयोध्या ( युद्ध करने के अयोग्य ) नाम सच था । ४२ ॥

(42.) Full of furious mountain-like elephants, from the Bindhyas as well as from the "borky dales" from of Himalayas, and extending up to 2 *jojuns*, (18. miles) *Ayodhya* (*i.e.*, not to be warred against) revealed its true name.

**तां पुरीं इति ।** अन्वयः । अमितामित्रः महातेजाः महान् राजा सः दशरथः चन्द्रमाः नक्षत्राणि इव तां पुरीं शशास ।

व्याख्या । अमितामित्रः=अमितानि विनाशितानि अमित्राणि शत्रवो येन ( वहुव्री ) सः निहतारिः ( कर्त्ता-विण ) महातेजाः=महत् तेजो यस्य स राजा सम्राट् ( कर्त्ता विण ) सः दशरथः ( कर्त्ता ) चन्द्रमाः= चन्द्रः ( उपमा-कर्त्ता, चन्द्रमस्-श+१मा-१व ) नक्षत्राणि इव=नक्षत्र-लोकान् इव ( उपमा-कर्म्म ) तां पुरीं=अयोध्यां ( कर्म्म ) शशास=पाल-यामास ( शस-धा+लिट, क्रिया ) । ४३ ॥

वाच्यान्तरं । अमितामित्रेण महातेजसा महता राज्ञा तेन दशरथेन चन्द्रमसा नक्षत्राणि इव सा पुरी शशासे । ४३ ॥

महातेजस्वी राजा दशरथ जिसने अपने शत्रुओं को मार डाला है, चन्द्रमा जैसे नक्षत्र लोकको शासन करते हैं, वैसेही उस पुरी का शासन करते थे। ४३॥

(43.) As the moon, overpowering in its splendour the lights of others, reigns in heaven, so the high and the mighty Dasaratha having vanquished his enemies reigned in Ayodhya.

**तां इति।** अन्वयः। शक्रसमः महीपतिः दृढतोरणार्गलां विचित्रैः गृहैः उपशोभितां नृसहस्रसंकुलां तां शिवां सत्यनाम्नीं अयोध्यां पुरीं वै शशास। ४४॥

व्याख्या। शक्रसमः=शक्रः इन्द्रः तेन (३तत्) समः तुल्यः (कर्त्ता-विण) महीपतिः=मह्याः पृथिव्याः पतिः (पा-धा+डति) पालकः राजा दशरथः (कर्त्ता) दृढतोरणार्गलां=तोरणं नाम बहिर्द्वारमलङ्कारकाष्ठबन्धः अर्गलं नाम कपाटावष्टम्भकतिर्य्यक्स्थापितदारुविशेषः, तोरणानि च अर्गलानि (द्वन्द्व) तोरणार्गलानि दृढानि तानि यस्याः (बहुव्री) तां (कर्म्म-विण) विचित्रैः=विविधैः (करण-विण) गृहैः (करण) उपशोभितां=अलङ्कृतां (उप-शुभ-धा+क्त, कर्म्म-विण) नृसहस्रसङ्कुलां=नृणां मनुष्याणां (६तत्) सहस्रैः सहस्रसहस्रमनुष्यैः इत्यर्थः (६तत्) सङ्कुलां व्याप्तां बहुभिः मनुष्यैः कृताधिवासां इत्यर्थः (कर्म्म-विण) शिवां=मङ्गलदायिकां (कर्म्म-विण) तां=पूर्व्ववर्णितां (सर्व्व-कर्म्म-विण) सत्यनाम्नीं=जेतुमशक्या अयोध्या इति अन्वर्थनाम्नीं (कर्म्म-विण, पक्षे डाप) अयोध्यां पुरीं=तन्नामिकां नगरीं (कर्म्म-२या) वै (पादपूरणे-अव्य) शशास=दुष्टदमनेन शिष्टप्रतिपालनेन च पालयामास (शस-धा+लिट्, क्रिया) अत्र प्रथमपादे इन्द्रवंशावृत्तं। द्वितीय तृतीय चतुर्थ पादेषु वंशस्थविलं। तल्लक्षणं यथा छन्दोमञ्जर्यां, वदन्ति वंशस्थविलं जतौ जरौ। तच्च न्द्रवंशा प्रथमाक्षरे गुरौ। ४५॥

वाच्यान्तरं । शक्रसमेन महीपतिना दृढतोरणार्गला उपशोभिता गृहसहस्रसङ्कुला शिवा सा सत्यनामा अयोध्या पुरी शशासे । ४४ ॥

इन्द्र के समान राजा दशरथ उस पुरी को शासन करते थे, उस के द्वार और अर्गल बहुत मजबुत थे और उस में विचित्र घर थे, और हजारों आदमी वसते थे । ४४ ॥

(44.) Like Indra, Dasarath rulled that rightly significantly-termed city of Ayodhya, fortified with gates strongly-bolted and adorned with triumphant arches, splended mansions, well furnished and painted with a population of several thousands.

---

## अन्धमुनिपुत्रवधः ।

राजा दशरथः पूर्व्वं कैकेय्यै द्वौ वरौ ददौ, अधुना सा रामस्य राज्याभिषेकं असहमाना एकेन वरेण रामस्य वनप्रवासनं अपरेण स्वसुतस्य भरतस्याभिषेचनं याचितवती । तत् श्रुत्वा दशरथः कैकेयीं पुनः अनुनीय बहु विलप्य च हतसंज्ञः भूमौ शेते स्म । अथ रामः पितृवन्दनार्थं आगत्य तथाविधं दृष्ट्वा कैकेयीमुखाच्च यथावदुपश्रुत्य वनाय प्रतिशुश्राव, सीतया लक्ष्मणेन च सह वनं जगाम, राजा तु कैकेयीं प्रति द्वेषात् तत्गृहं परित्यज्य कौशल्यामन्दिरं प्राविशत्, तत्र न्यवसच्च ।

अथ भूपतिः षष्ठ्यां रात्रौ पुत्रशोकार्द्दितः कौशल्याप्रबोधवाक्येन कथञ्चित् चाश्वस्तः क्षणं सुप्त्वा बुबुधे, ततः अन्धमुनिशापं संस्मृत्य आत्मानं मृत्युना कवलितं निश्चित्य कौशल्यां सम्बोध्य इमां अन्धमुनिपुत्रवधाश्रितां आख्यायिकां आह ।

अन्धः उभयचक्षुःशून्यः ( कर्म्म-धा ) मुनिः ऋषिः तस्य ( ६तत् ) पुत्रः तनयः तस्य ( ६तत् ) वधः हत्या ( प्रातिपदिकार्थे-१मा )।

**प्रतिवुद्धः इति।** अन्वयः। अथ सः राजा दशरथः मुहूर्त्तेन प्रतिवुद्धः शोकोपहतचेतनः चिन्तां अभ्यपद्यत। १॥

व्याख्या। अथ=अनन्तरं दशरथस्य निद्रानन्तरं ( अव्य ) सः राजा=राजते यः सः ( राज धा+अन् ) भूपतिः ( कर्त्ता-विश ) दशरथः ( कर्त्ता ) मुहूर्त्तेन=द्विदण्डपरिमितः समयः मुहूर्त्तं अल्पक्षणं व्याप्य इत्यर्थः ( अपवर्गे-३या ) प्रतिवुद्धः=जागरितः सन् ( प्रति-वुध धा+क्त, कर्त्ता-विश ) शोकोपहतचेतनः च सन्=शोकेन रामवनगमनजन्यदुःखेन ( शुच-धा+अल, ३तत् ) उपहतं नष्टप्रायं ( उप-हन-धा+क्त ) चेतनं संज्ञा यस्य ( वहुव्री, चित-धा+भावे, ल्युट ) अचेतनप्रायः ( कर्त्ता-विश ) चिन्तां ( कर्म्म ) अभ्यपद्यत=प्राप्तवान् ( अभि-पद-धा+कर्त्तरि-लङ, क्रिया ) १॥

वाच्यान्तरं। अथ तेन राज्ञा प्रतिवुद्धेन शोकोपहतचेतनेन चिन्ता अभ्यपद्यत। १॥

अनन्तर राजा दशरथ मुहूर्त्तभर में जग के शोक से अचेत गये, और चिन्ता कर ने लगे। १॥

(1.) Then the king Dasaratha, who was lost in grief, having recovered his senses in a moment, became filled with anxiety.

**राम इति।** अन्वयः। उपसर्गः रामलक्ष्मणयोः विवासात् एव च वासवोपमं तं, आसुरं तमः सूर्य्यं इव आपेदे। २॥

व्याख्या। उपसर्गः=उपद्रवः शोकः इति यावत् ( कर्त्ता ) रामलक्ष्मणयोः=रामश्च लक्ष्मणश्च ( द्वन्द्व ) तयोः ( विवासात् इत्यस्य कर्त्ता-षष्ठी ) विवासात्=वनगमनात् हेतोः ( वि-वस-धा+घञ, हेतौ-५मी ) एव च ( अव्य ) वासवोपमं=वासवः उपमा यस्य ( वहुव्री ) सः तं इन्द्रतुल्यं

( कर्म्म-विण ) तं=दशरथं ( कर्म्म ) आसुरं=असुरस्य राहोः इदं उपमा-कर्त्ता-विण, असुर श+षण् ) तमः=अन्धकारः आवरणशक्तिः ( उपमा-कर्त्ता ) सूर्य्यं इव—सूर्य्यं यथा आवृणोति तद्वत् ( उपमा-कर्म्म ) आपेदे=प्राप ( आ-पद धा+लिट, क्रिया ) । २ ॥

वाच्यान्तरं। उपसर्गेण वाक्यर्त्ताषुमः सः आसुरेण तमसा सूर्य्यः इव आपेदे । २ ॥

राम और लक्ष्मण के वन जाने से इन्द्र के बराबर उस राजा को शोक ने घेर लिया था जैसे कि सूर्य्य को राहु का अन्धेरा घेर लेता है । २ ॥

(2.) Like the shadow of the rahu ( earth ) eclipsing the sun, the thought of the exile of Ram and Lakshman, darkened the mind of that Indra-like king.

**सः इति ।** अन्वयः। सः राजा दशरथः रामे वनं प्रव्राजिते ( सति ) षष्ठीं रजनीं ( प्राप्य ) अर्द्धरात्रे कृतं दुष्कृतं अस्मरत् । ३ ॥

व्याख्या। सः=त्रिभुवनविख्यातः ( कर्त्ता-विण ) राजा=भूपतिः ( कर्त्ता विण ) दशरथः ( कर्त्ता ) रामे ( भावाधि-७मी ) वनं ( प्रव्राजिते इत्यस्य कर्म्म ) प्रव्राजिते विवासिते प्रेरिते सति राज्ञा इति कर्त्तृ-पदमह्यं। ( प्र व्रज-धा+णिच-क्त ) षष्ठीं=षषां पूरणी ( षष्-श+थ स्त्रियां ङीप ) तां रजनीं=रात्रिं ( कर्म्म ) प्राप्य इति शेषः षष्ठदिवसे अतीते तद्रात्र्यां इत्यर्थः अर्द्धरात्रे=अर्द्धं रात्रेः अर्द्धरात्र ( अर्द्धं नपुंसकं इत्यनेन एकदेशिसमासः ) अहः सर्व्वैकदेशः इत्यादिना समासान्तः अच ) तस्मिन् निशीथसमये ( अधि-७मी ) कृतं=पूर्व्वं आत्मना अनुष्ठितं ( कृ-धा+कर्म्मणि-क्त ) दुष्कृतं=अन्धमुनिपुत्रवधरूपं च कार्य्यं ( दुः कृ-धा+भावे-क्त, कर्म्म-२या ) अस्मरत्=स्मृतवान् ( स्मृ-धा+लङ, क्रिया ) । ३ ॥

वाच्यान्तरं। तेन राज्ञा तेन दशरथेन दुष्कृतं अस्मर्य्यत । ३ ॥

राम के वन जाने पर छठे दिन आधी रात को राजा ने अपना दुष्कर्म्म स्मरण किया। ३ ॥

( 3.) On the sixth mid-night after Rama's exile to the forest, the thought of the great sin, Raja Dasaratha had committed, occured to his mind,

**सः राजा इति** । अन्वयः। पुत्रशोकार्त्तः सः राजा आत्मनः दुष्कृतं स्मृत्वा पुत्रशोकार्त्तां कौशल्यां इदं वचनं अब्रवीत्। ४ ॥

व्याख्या। पुत्रशोकार्त्तः=पुत्राय ( ४तत् ) शोकः तेन ऋतः (३तत् ) तृतीया समासे इति ऋकारस्य वृद्धिः ) रामवनगमनेन कातरः ( कर्त्ता-विण ) सः ( सर्व्व-कर्त्ता-विण ) राजा=भूपतिः दशरथः ( कर्त्ता-१मा ) आत्मनः=स्वस्य ( दुष्कृतं इत्यस्य-कर्त्ता६ष्ठी ) दुष्कृतं ( कर्म्म ) स्मृत्वा= स्मृ-धा+क्त्वा ) पुत्रशोकार्त्तां ( पूर्व्ववत् समासः कर्म्म-विण ) कौशल्यां= कोशलस्य अपत्यं स्त्री ( कोशल-श+ष्यण्, स्त्रियां आप ) कोशलराज-नन्दिनीं तन्नामिकां ज्येष्ठमहिषीं राममातरं ( गौण कर्म्म ) इदं=वक्ष्य-माणं ( कर्म्म-विण ) वचनं=वाक्यं ( मुख्य कर्म्म ) अब्रवीत्=अकथयत् ( ब्रू-धा+लङ्, क्रिया, ब्रूधातुः द्विकर्म्मकः )। ४ ॥

वाच्यान्तरं। पुत्रशोकार्त्ता कौशल्या औच्यत। ४ ॥

वह पुत्रशोकार्त्त राजा ने अपने दुष्कर्म्म को स्मरण कर के पुत्रशोक-कातरा कौशल्या से कहा। ४ ॥

( 4 ) Overwhelmed with grief for his sons Raja Dasaratha, recollecting his own wrong, spoke thus to Kausalya, who was afflicted by sorrow for her son.

**यदाचरति इति**। अन्वयः। ( हे ) कल्याणि ( लोकः ) शुभं यदि वा अशुभं यत् आचरति, ( हे ) भद्रे कर्त्ता आत्मनः कर्म्मजं तत् ( फलं ) लभते एव। ५ ॥

व्याख्या । कल्याणि=हे भद्रे कौशल्ये ( सम्बो ) लोकः इति शेषः ( कर्त्ता ) शुभं=हितं ( कर्म्म विण ) यदि वा=अथवा ( अव्य ) अशुभं= अहितं ( कर्म्म विण ) यत्=यत् कर्म्म ( कर्म्म-२या ) आचरति=अनुतिष्ठति करोति इत्यर्थः ( आ-चर-लट, क्रिया ) भद्रे=हे साध्वि कौशल्ये ( सम्बो ) कर्त्ता=अस्य शुभाशुभकर्म्मणः अनुष्ठाता ( कृ-धा+तृच, कर्त्ता-१मा ) आत्मनः=स्वस्य ( कर्म्मजं इत्यस्य कर्त्ता-६ष्ठी ) कर्म्मजं कर्म्म कार्य्यं ( कृ-धा+म ) तस्मात् जायते यत् ( जन-धा+ड ) तत् निजकर्म्मणा जातं ( कर्म्म-विण ) फलं इति शेषः ( कर्म्म ) लभते एव=प्राप्नोति एव ( लभ-धा+लट, क्रिया, एव निश्चये अव्य ) स्वकृतशुभाशुभकर्म्मफलं मानवेन अवश्यं भोक्तव्यमित्यर्थः । ५ ॥

हे कल्याणि लोग जो भला बुरा काम करता है, हे भद्रे करने वाला अपने उस कर्म्म का फल पाता है । ५ ॥

(5) Good lady, whatever the people do, good or bad, they reap the fruits of their actions.

**गुरुलाघवं इति ।** अन्वयः । यः अर्थानां कर्म्मणां ( च ) आरम्भे फलं ( प्रति ) गुरुलाघवं दोषं वा (अदोषं ) न जानाति, सः बालः इति ह उच्यते । ६ ॥

व्याख्या । यः=जनः ( सर्व्व कर्म्म-१मा ) अर्थानां=ऐहिकानां कर्म्मणां ( सम्ब ) कर्म्मणां=आमुष्मिकाणां कर्म्मणां ( सम्ब ) आरम्भे= आरम्भकाले प्रथमसमये इत्यर्थः ( अधि ) फलं=परिणामं (प्रति योगे-२या) गुरुलाघवं=गौरवं लाघवं च ( कर्म्म ) दोषं=अगुणं ( कर्म्म ) वा=अथवा ( अव्य ) अदोषं=गुणं ( वा शब्द प्रयोगात् अदोषं इति लभ्यते ) न जानाति=वेत्ति ( ज्ञा-धा+लट, क्रिया ) केनचित् अल्पेन भृत्यादिना महत् अनिष्टं केनचित् महतापि यागादिना अल्पफलं, तथा इदं कर्म्म बहुगुणं अल्पदोषं इदं च बहुदोषं अल्पगुणं इत्येवं जानाति इति भावः

सः=जनः ( इति योगे-१मा ) वालः=शिशुः अज्ञः इत्यर्थः ( १मा विण ) इति ( कर्म्म-अव्य ) ह ( पादपूरणे अव्य ) उच्यते=कथ्यते ( वच धा+कर्म्मणि-लट, क्रिया ) वुधैः इति शेषः न केवलस्तनन्धयः वालः इत्यभिप्रायः । ६ ॥

वाच्यान्तरं । येन गुरुलाघवं दोषः न ज्ञायते, इति ब्रुवन्ति । ६ ॥

जो इस लोक और परलोक के कर्म्म का गुरु लघु फल वा दोष को नहीं जानता, वह बालक कहलाया जाता है । ६ ॥

(6.) He who does not consider the lightness or the gravity of his actions, nor the good or evil thereof, is regarded but a child.

**कश्चित् इति ।** अन्वयः । कश्चित् पुष्पं दृष्ट्वा फले गृध्नुः ( सन् ) आम्रवनं छित्वा पलाशान् निषिञ्चति च, सः फलागमे शोचति ७॥

व्याख्या । कश्चित्=कोऽपि जनः ( कर्त्ता-अव्य ) पुष्पं=पुष्पमहत्वं ( कर्म्म ) दृष्ट्वा=विलोक्य ( असमा ) फले ( आध ) गृध्नुः=लिप्सुः सन् ( गृध-धा+क्नु ) फलमहत्वानुमानेन अतिमनोहरमिदं पुष्पं फलमपि एवमेव भवितेति मत्वा इत्यर्थः ( कर्त्ता-विण ) आम्रवनं=आम्रस्य ( ६तत् ) वनं आम्रवृक्षसमूहं (कर्म्म ) छित्वा= कर्त्तयित्वा विनाश्य इत्यर्थः ( छिद-धा+क्त्वा, अव्य ) पलाशान्=पलाशवृक्षान् ( कर्म्म ) निषिञ्चति=आर्द्रीकरोति जलसेकादिना पुष्णाति इत्यर्थः ( नि सिच-धा+लट, क्रिया ) सः=पलाशाभिषेचकः जनः ( कर्त्ता ) फलागमे=फलानां (६तत्) आगमः तस्मिन् फलप्राप्तिसमये ( अधि ) शोचति=परितप्यते स्वतर्कितफलाभावात् इत्यर्थः ( शुच-धा+लट, क्रिया । ७ ॥

वाच्यान्तरं । केनचित् गृध्नुना पलाशाः निषिच्यन्ते तेन शुच्यते । ७

कोई फुल देख फल के लोभ से आम के पेड़ों को काट के पलाशों को सींचता है, पर फल होने पर पछता है । ७ ॥

(7.) He who seeing flower being desirous of fruit, cuts down mango trees to pour water into (to rear) *palasas*, laments when the fruit grows.

**अविज्ञाय इति।** अन्वयः। यः हि फलं अविज्ञाय कर्म्म एव तु अनुधावति, सः फलवेलायां किंशुकसेवकः यथा शोचेत्। ८॥

व्याख्या। दृष्टान्तं दार्ष्टान्तिकेन योजयति अविज्ञाय इति। यः हि=यः जनः (कर्त्ता) फलं=क्रियमाणकर्म्मणः भाविपरिणामं (कर्म्म) अपरिज्ञाय=अविचार्य्य इत्यर्थः (ज्ञा-धा+ल्यप) कर्म्म एव तु=लौकिकं वैदिकं वा कार्य्यं (कर्म्म २या) अनुधावति=अनुसरति अनुतिष्ठति इत्यर्थः (क्रिया) सः=अपरिणामदर्शी अनुष्ठाता (सर्व्व-कर्त्ता) फलवेलायां=फलस्य वेला (६तत्) तस्यां फलसमये उपस्थिते सति (अधि ७मी) किंशुकसेवकः यथा=किंशुकस्य पलाशवृक्षस्य (६तत्) सेवकः आम्रवनं छित्वा पलाशवृक्षवर्द्धकः इव (उपमा-कर्त्ता) शोचेत्=तप्येत् (सम्भावनायां लिङ्, क्रिया)। ८॥

वाच्यान्तरं। येन कर्म्म अनुधाव्यते; तेन किंशुकसेवकेन इव शोच्येत। ८॥

फल को न जानके जो कर्म्म करता है, उसे फल होने के समय शोक करना पड़ता है जैसे कि पलाश के सेवन करने वाले को। ७॥

(8.) Not knowing the result who pursues any work, should grieve in the long run feeling the consequence, like the *Kinsuka*-cultivater.

**सोऽहं इति।** अन्वयः। दुर्म्मतिः सः अहं आम्रवनं छित्वा पलाशान् च न्यषेचयं। फलागमे रामं त्यक्त्वा पश्चात् शोचामि। ९॥

व्याख्या। अप्रस्तुतमिदं प्रकृतविषये किं तत्राह सोऽहं इति। दुर्म्मतिः=दुष्टा मतिः यस्य (बहुव्री) सः मन्दबुद्धिः मूढः, अपरिणामदर्शी इत्यर्थः (कर्त्ता-विश) सः (सर्व्व-कर्त्ता-विश) अहं (कर्त्ता) आम्रवनं (कर्म्म)

छित्वा ( छिद-धा+क्त्वा ) पलाशान् च पलाशवृक्षान् ( कर्म्म ) न्यषेचयं सेचितवान् ( नि-सिच धा+णिच+लङ, क्रिया ) फलागमे=रामकृत-क्रियया लब्धपारलौकिकफलप्राप्तिसमये वा ( अधि ) रामं ( कर्म्म ) त्यक्त्वा=परित्यज्य विवास्य इत्यर्थः ( त्यज धा+क्त्वा ) पश्चात्=अनन्तरं ( अव्य ) शोचामि ( शुच-धा+लट, उप १व, क्रिया ) । ९ ॥

वाच्यान्तरं । दुर्म्मतिना तेन मया पलाशाः न्यसेच्यन्त, शुच्यते । ९ ॥

मैं ने भी आम के पेड़ों को काट के पलाश को सींचा है ; फल होने के समय राम को त्याग करके मैं दुर्बुद्धि पश्चात् ताप करता हूं । ९ ॥

(9.) So I, cutting down the mango trees, have reared the *pa'asas* ; leaving Ram in time of fruit (better result ), lamenting afterwords as an ignorant fool.

शब्दवेधी इति । अन्वयः । (हे) कौशल्ये कुमारः शब्द-वेधी इति लब्धशब्देन धनुष्मता कुमारेण मया इदं पापं कृतं । १० ॥

व्याख्या । यत् आचरति इति उक्तं तं विषयं आह लब्धेति । हे कौशल्ये ( सम्बो ) कुमारः=राजपुत्रः ( प्रातिपदिकार्थे-१मा) शब्दवेधी= शब्दं श्रुत्वा विध्यति यः ( विध+णीन् ) सः लक्ष्यं अनवलोक्य अपि तस्य शब्दश्रवणमात्रेण वेद्धुं शक्नोति इत्यर्थः ( १मा-विण ) इति शब्दवेधी इत्येवं ( अव्य ) लब्धशब्देन=लब्धः अधिगतः शब्दः येन ( बहुव्री ) तेन प्राप्त-प्रतिष्ठेन ( कर्त्ता-विण ) कुमारेण=अजपुत्रेण इत्यर्थः ( कर्त्ता-विण) मया=दशरथेन ( कर्त्ता-३या ) इदं=वक्ष्यमाणं ( सर्व्व-कर्म्म-विण ) पापं=दुष्कृतं ( कर्म्म-१मा ) कृतं=अनुष्ठितं ( कर्म्मणि-क्त ) । १० ॥

वाच्यान्तरं । लब्धशब्दः धनुष्मान् कुमारः अहं इदं पापं कृतवान् ।१०॥

हे कौशल्ये कुमारावस्था में मेरी यह प्रतिष्ठा हुई थी कि अजका पुत्र दशरथ शब्दवेधी है, मैं ने कुमारावस्था में धनुष ले यह पाप किया था । १० ॥

(10.) Exulted by the praise that the prince can hit at on hearing a sound, I, a clever archer and bowman, the son of Aja, Oh Kausalya, commited this sin in my boyhood.

तदिदं इति । अन्वयः । (हे) देवि सम्मोहात् स्वयं कृतं तत् इदं दुःखं बालेन भक्षितं विषं यथा तथा मे इह अनुप्राप्तं स्यात् ।११॥

व्याख्या । हे देवि=हे कौशल्ये (सम्बो) सम्मोहात्=अज्ञानात् (हेतौ-५मी) स्वयं आत्मना (अव्य) कृतं=अनुष्ठितं (कर्त्ता-विश) तत् इदं=मृत्युफलकं (कर्त्ता-विश) दुःखं (कर्त्ता-१मा) बालेन= शिशुना अज्ञानेन इत्यर्थः (भक्षितं इत्यस्य कर्त्ता-३या) भक्षितं=खादितं (कर्म्मणि-क्त, कर्त्ता-विश) विषं यथा=गरलं इव (उपमा-कर्त्ता) मे= मम (सम्बन्ध विवक्षया ६ष्ठी) इह—जगति (अधि-अव्य) अनुप्राप्तं= उपस्थितं (कर्त्ता-विश) स्यात्=भवेत् (अस धा+सम्भावनायां लिङ्, क्रिया) अज्ञानतः भक्षितं विषं यथा बालं हन्ति तथा मामपि एतत् दुःखं हन्यात् इत्यर्थः । ११ ॥

वाख्यान्तरं । कृतेन तेन अनेन दुःखेन भक्षितेन विषेण यथा अनुप्राप्तेन भूयेत । ११ ॥

हे देवि अज्ञानता से बालक जैसे विष खाता है, उसी ढव से मेरा किया हुआ यह दुःख आ पहुंचा है । ११ ॥

(11.) Hence, O good lady, this grief of which I myself am the author, has fallen on me like the poison-draught taken by a child, from ignorance of its consequence.

यथा इति । अन्वयः । यथा अन्यः कश्चित् पुरुषः पलाशैः मोहितः भवेत्, एवं मया अपि शब्दवेध्यं इदं फलं अविज्ञातं । १२ ॥

व्याख्या । यथा (अव्य) अन्यः कश्चित् पुरुषः—प्राकृतः जनः नीचः मूढः इति यावत् (कर्त्ता) पलाशैः=पलाशपुष्पैः (करण) मोहितः (मुह-धा+णिच-क्त, कर्त्ता-विश) भवेत् (क्रिया) पलाशपुष्पं दृष्ट्वा

मुग्धः सन् तत् फलं न जानाति इत्यर्थः, एवं=तथा ( अव्य ) शब्दवेध्यं= शब्दवेधित्वं ( आर्षप्रयोगः कर्म्म १मा ) इदं फलं=एवं दुष्टफलं ( कर्म्म-विशेष विण ) मया अपि ( कर्त्ता-३या ) अविज्ञातं=अविदितं ( न-वि-ज्ञा+धा-कर्म्मणि-क्त, क्रिया )। कथकस्तु इत्थं व्याचष्टे, शब्दवेधित्वरूपं सामर्थ्यं प्राप्य यत् कर्म्म अविज्ञातं सत् क्रतं तस्य कर्म्मणः इदं फलं कैकेयी-वाक्यक्रतः मोहः इत्यर्थः। १२॥

व्याख्यान्तरं। अन्येन केनचित् पुरुषेण मोहितेन भूयेत, अहं अपि शब्दवेध्यः इदं फलं अविदितवान्। २१॥

जैसे कोई सामान्य मनुष्य पलाश देख मुग्ध होता है, उसी ढब से में ने भी शब्दवेधी शर का फल नहीं जाना था। १२॥

(12.) Like the fool, drawn by the false beauty of the *palas*, I have got this result, by hitting on hearing the sound, not knowing what would come of it.

देवि इति। अन्वयः। ( हे ) देवि त्वं अनूढ़ा अभवः, अहं युवराजः भवामि, ततः मम रागविवर्द्धिनी प्रावृट् अनुप्राप्ता। १३॥

व्याख्या। तादृशदुष्कर्म्मप्राप्तिः कदा इत्याह देवि इति। देवि= हे कौशल्ये ( सम्बो ) त्वं ( कर्त्ता १मा ) अनूढ़ा – अविवाहिता ( न-वह-धा+क्त, कर्त्ता-विण ) अभवः ( भू-धा+लङ-२पु-१व, क्रिया ) युवराजः=युवा राजा (कर्म्म-धा) अप्राप्तराज्यः पित्रा राजकर्म्मणि अनियुक्तः इत्यर्थः ( कर्त्ता-विण ) भवामि ( क्रिया ) यदा त्वं अनूढ़ा अभवः तदा अहं युवराजः अभवं इत्यर्थः। ( अभवः इत्यस्य प्रधानत्वविवक्षया भवामि इत्यस्य अतीतार्थे लट )। ततः=तदा ( अव्य-अधि ) मम ( सम्ब) रागविवर्द्धिनी=रागं अनुरागं विवर्द्धयते या सा ( कर्त्ता-विण ) प्रावृट्= वर्षाकालः ( कर्त्ता-प्रावृष्-श+१मा ) अनुप्राप्ता=उपस्थिता ( कर्त्तरि-क्त, क्रिया )। १३॥

वाच्यान्तरं । त्वया अनूढया अभूयत, युवराजेन मया भूयते, राग-विवर्द्धन्या प्रावृषा अनुप्रासं । १३ ॥

हे देवि तेरा व्याह नहीं हुआ था मैं भी युवराज था, उस वक्त मेरे राग को बढ़ाने वाली वर्षा आ पहुंची । १३ ॥

(13.) Esteemed queen, once, whilst you were yet unmarried, and I, an heir-apparent to the throne, there came my passion-exciting (for hunting) rainy season.

**अपास्य इति ।** अन्वयः । रविः भौमान् रसान् अपास्य अंशुभिः जगत् तप्त्वा च परेताचरितां भीमां दिशं च आचरते । १४ ॥

व्याख्या । प्रावृषं वर्णयति । रविः=(कर्त्ता) भौमान्=भूमेः इमे (भूमि-अ+षण्) तान् पृथिवीस्थान् (कर्म्म-विण) रसान्=जलानि (कर्म्म) अपास्य=निरस्य शोषयित्वा इति यावत् (अप-आस-धा+ल्यप्) अंशुभिः=किरणैः (करण) जगत्=भुवनं (कर्म्म-२या) तप्त्वा च=परितप्य च दग्ध्वा इत्यर्थः (असमा) परेताचरितां=परेतैः प्रेतैः मृतकैः इत्यर्थः (३तत्) आचरितां सेवितां (आ-चर धा+कर्म्मणि-क्त), दक्षिणां इत्यर्थः (कर्म्म-विण, यस्यां दिशि यमपुरी वर्त्तते) भीमां=भीषणां (कर्म्म विण) दिशं (कर्म्म) आचरते=आचरति गच्छति (क्रिया, आत्मनेपदं आर्षं) दक्षिणायनं प्रवृत्तं इति भावः । १४ ॥

वाच्यान्तरं । रविणा परेताचरिता भीमा दिक् आचर्य्यते । १४ ॥

रवि भूमि के रस को सोख के जगत को किरणों से तपित कर उस भयानक दिशा दक्षिण को गये जिस तरफ मरे हुए लोग आते हैं । १४ ॥

(14) The sun after having absorbed moisture from the earth and heating the world was in its fiery southern declination if the region of the spirits.

उष्णं इति। अन्वयः। उष्णं अन्तर्दधे, सद्यः स्निग्धाः घनाः ददृशिरे, ततः सर्वे भेकसारङ्गबर्हिणः जहृषिरे। १५॥

व्याख्या। उष्णं=ग्रीष्मः (कर्त्ता) अन्तर्दधे=तिरोहितं बभूव (अन्तर्-धा+लिट् क्रिया) वर्षागमे इति शेषः दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि इति भावः, सद्यः तत्क्षणात (अव्य) स्निग्धाः=शीतलाः (कर्म्म-विश) घनाः=मेघाः (कर्म्म १मा) ददृशिरे=दृष्टाः (दृश-धा+कर्म्मणि-लिट्, क्रिया) जनैः इति शेषः (कर्त्ता), ततः=मेघदर्शनानन्तरं (अव्य) सर्व्वे (सर्व्व कर्त्ता-विश) भेकसारङ्गबर्हिणः=भेकाः मण्डुकाः च, सारङ्गाः चातकाः हरिणाः, वा च बर्हिणः=मयूराः च (द्वन्द) (कर्त्ता) जहृषिरे=जहृषुः ननन्दुः (हृष-धा+लिट, क्रिया, आत्मनेपदं आर्षं)। १५॥

वाच्यान्तरं। उष्णेन अन्तर्दधे, स्निग्धान् घनान् ददृशुः सर्व्वैः, भेकसारङ्गबर्हिभिः जहृषे। १५॥

झट गर्मी चली गई स्निग्धमेघ नजर आने लगे। मेंडक चातक और मोर आनन्दित हुए।

(15.) Heat disappeared at once and black clouds were seen in the sky. Frogs, larks, and peacocks all rejoiced.

क्लिन्न इति। अन्वयः। स्नाताः क्लिन्नपक्षोत्तराः पतत्रिणः वृष्टिवाताबधूताग्रान् पादपान् क्लेशात् इव अभिपेदिरे, रामानुजेन तु क्लिन्नपक्षोत्तराः अतएव क्लेशात् इव स्नाताः पतत्रिणः इति अन्वयः दृश्यते। १६॥

व्याख्या। स्नाताः=वृष्टिजलैः आप्लुताः (स्ना-धा+क्त, कर्त्ता-विश) अतएव क्लिन्नपक्षोत्तराः=क्लिन्नाः आर्द्रीभूताः पक्षोत्तराः पक्षोपरिभागाः अथवा उत्पतनसाधनभूताः प्रधानपक्षाः येषां (बहुव्री) ते आर्द्रीभूतत्वात् आरमूलानि पक्षाणि प्रसारितुं अक्षमाः इत्यर्थः (कर्त्ता-विश) पत-

त्रिणः=पतत्रं त्रायते यत् तत् ( पतत् त्रै-धा+ड ) पतत्रं तद् विद्यते येषां ( इन् ) ते पत्त्रिणः ( कर्त्ता-१मा-३व ) वृष्टिवातावधूताग्रान्—वृष्टियुक्तः वातः पवनः ( शाकपार्थिवादिवत् मध्यपदलोपिकर्म्मधारयः ) तेन अवधूतं कम्पितं ( अव-धू-धा+क्त ) अग्रं येषां ( बहुव्री ) तान् ( कर्म्म-विण ) पादपान्=पादैः मूलैः पिबन्ति ये ( पाद-पा-धा+ड ) तान् वृक्षान् ( कर्म्म ) कृच्छ्रात् इव=कृच्छ्रं प्राप्य अतिकष्टेन इत्यर्थः ( ल्यप् लोपे ५मी ) अभिपेदिरे=प्राप्तवन्तः ( अभि पद-धा+लिट-१पु-३व, क्रिया ) स्वस्वावासवृक्षान् प्रति गमनं अपि कृच्छ्रसाध्यं, दूरं उत्पतनं किमु वक्तव्यं । क्लिन्नाः पक्षोत्तरा येषां ते अतएव कृच्छ्रात्=कृच्छ्रादिव्रत-निमित्तं स्नाताः इव पतत्रिणः इति रामानुजः व्याचष्टे । १६ ॥

वाच्यान्तरं । क्लिन्नपक्षोत्तरैः स्नातैः पतत्रिभिः वृष्टिवातावधूताग्राः पादपाः अभिपेदिरे । १६ ॥

न्हाने के सबब चिड़ियों के पंख भीग गए हैं, वह उन पेड़ों पर कष्ट से पहुंचती हैं जिन के अग्रभाग वृष्टि की हवा से हिल रहे हैं ।१६॥

(19.) The birds, having bathed in the rain with wings moistened by water, took shelter, though with great difficulty, in trees the tops of which had been exposed to wind and rain.

**पतितेन इति ।** अन्वयः। असकृत् पतितेन पतमानेन च अम्भसा आच्छन्नः मत्तसारङ्गः अचलः तीर्थवाग्निः इव आबभौ । १७ ॥

व्याख्या । पतितेन=पूर्व्वं वृष्टेन ( करण-विण ) असकृत्=सकृत् एकवारं न ( नञ-तत् ) सकृत् पुनः पुनः ( अव्य ) पतमानेन=पतता वर्त्तमानसमये वर्षता ( करण-विण, शानच् आर्षः ) अम्भसा=वृष्टि-जलेन ( करण-३या ) आच्छन्नः=आवृतः ( आ-छद धा+क्त, कर्त्ता-विण ) मत्तसारङ्गः=मत्ताः सारङ्गाः हरिणाः यस्मिन् (बहुव्री) सः (कर्त्ता-विण ) अचलः=न चलति यः ( चल-धा+अच् ) सः पर्व्वतः ( कर्त्ता )

तोयराशिः इव=तोयानां (६तत्) राशिः जलसङ्घः इव अथवा तोयराशिः समुद्रः सः इव (उपमा-कर्त्ता) आबभौ=शुशुभे (आ भा धा+लिट्, १पु-१व, क्रिया) समुद्रे जलानां राशयः सन्ति, अयमपि वृष्टिजलेन आच्छन्नः इति साधर्म्यं । १७ ॥

वाच्यान्तरं । आच्छन्नेन मत्तसारङ्गेण अचलेन तोयराशिना इव आबभे । १७ ॥

वर्षे हुए और बार बार बरते हुए पानी से भीगा हुआ पर्व्वत जिस में मत्त हरिण हैं, जलराशि की तरह सोहने लगा । १७ ॥

(17.) Being flooded by rain that has already fallen and that is still falling and abounding with the blighted deer the mountains appeared like the sea,

**पाण्डुर इति** । अन्वयः । स्रोतांसि विमलानि अपि गिरि-धातुभ्यः पाण्डुरारुणवर्णानि सभस्मानि भुजङ्गवत् (कुटिलानि) सुस्रुवुः १८॥

व्याख्या । स्रोतांसि=जलप्रवाहाः (कर्त्ता, स्रोतस्-शस्+१मा-३व) विमलानि अपि=निर्म्मलानि अकलुषितानि अपीति यावत् (कर्त्ता-विण) गिरिधातुभ्यः=गिरिः पर्व्वतः तस्य (६तत्) धातुभ्यः हेतुभ्यः (हेतौ ५मी) पाण्डुरारुणानि=पाण्डुराणि श्वेतानि अरुणानि रक्तवर्णानि च (कर्म्म-धा) क्वचित् पाण्डुरधातुसंयोगात् पाण्डुराणि क्वचिच्च अरुणवर्णधातुसंयोगात् अरुणवर्णानि इत्यर्थः (कर्त्ता-विण) सभस्मानि=भस्मयुक्तानि भस्मसम्बन्धात् इत्यर्थः भुजङ्गवत्=सर्पवत् कुटिलानि इति शेषः (कर्त्ता-विण) सुस्रुवुः= निर्गतवन्ति (स्रु-धा+लिट्, क्रिया) । १८ ॥

वाच्यान्तरं । पाण्डुरारुणवर्णैः विमलैः सभस्मैः स्रोतोभिः सुस्रुवे ।१८॥

विमल गिरि कहीं धातु से पांडु और कहीं रक्त वर्ण नदी भस्म के सम्बन्ध से सर्प की तरह टेड़ी बहने लगी । १८ ॥

(18.) Even rivers with pure water, rendered ashy and red with the mud and dust, washed away from mountains, flowed in a serpentined course.

तस्मिन् इति। अन्वयः। अतिसुखे तस्मिन् काले (अहं) व्यायामकृतसंकल्पः अतएव धनुष्मान् इषुमान् रथी सन् सरयूं नदीं अन्वगाम्। १९॥

व्याख्या। अतिसुखे=अतिसुखकरे (अधि-विण) तस्मिन् काले= वर्षाकाले (अधि-७मी) अहं इति शेषः (कर्त्ता) व्यायामकृतसंकल्पः= व्यायामे मृगयाविहारे कृतः संकल्पः निश्चयः येन (बहुव्री) सः मृगयां गन्तुं इच्छुः इत्यर्थः (कर्त्ता-विण) अतएव धनुष्मान्=धनुः विद्यते अस्य (धनुस-अ मतुप) धनुर्धारी (कर्त्ता-विण, धनुष्मत्-अ+१मा-१व) इषु-मान्=इषुः वाणः विद्यते अस्य (मतुप) शरान् प्रगृह्य इत्यर्थः (कर्त्ता-विण) रथी=रथः विद्यते अस्य (इन्) सः सन् रथं आरुह्य इत्यर्थः सरयूं=तन्नामप्रसिद्धां अयोध्योपकण्ठवाहिनीं (कर्म्म-विण) नदीं= (कर्म्म) अन्वगां=अगमम् (अनु-इ-धा+लुङ-३पु १व, क्रिया)। १९॥

वाच्यान्तरं। मया व्यायामकृतसंकल्पेन धनुष्मता इषुमता रथिना सरयूनदी अन्वगायि। १९॥

इस अति सुख कर काल में मैं रथ पर वैठ धनु वान ले आखेर करने के लिए निश्चय कर सरयु नदी को गया॥ १९॥

(19.) At this pleasant season, armed with bow and arrows for a hunting expedition I appeared in the bank of the river Sarayu on a car.

निपाने इति। अन्वयः। अजितेन्द्रियः (अहं) रात्रौ निपाने अभ्यागतं महिषं, गजं, मृगं, श्वापदं अन्यत् किञ्चित् (सत्वं) वा जिघांसुः (सन्) सरयूं नदीं अन्वगां इति पूर्व्वेण अन्वयः। २०॥

व्याख्या। अजितेन्द्रियः=अजितानि अवशीकृतानि इन्द्रियाणि येन

( बहुव्री ) सः इन्द्रियवशीभूतः मृगयाजितः इति भावः यत् मनसि उदेति तदेव करोमि इत्यर्थः (कर्त्ता विश) अहं (कर्त्ता) रात्रौ=रजन्यां ( अधि ) निपाने=निपीयते अस्मिन् ( नि-पा-धा+अधिकरणवाच्ये-ल्युट ) स्नातादौ ( अधि ) अभ्यागतं=जलपानार्थं आगतं (कर्म्म-विश ) महिषं ( कर्म्म ) गजं=हस्तिनं ( कर्म्म ) मृगं=हरिणं ( कर्म्म ) अन्यत्=एतद्व्यतिरिक्तं ( कर्म्म-विश-२या-१व, नपुं ) किञ्चित्=किमपि सत्वं ( किम्-अ+नपुं-२या-१व+चित्, ( कर्म्म विश अव्य ) श्वापदं=शुनः कुक्कुरस्य पदं इव पदं यस्य अथवा शुनः इव आपद अस्मात् ( बहुव्री ) तं हिंसुं ( कर्म्म-विश, न लोकाव्ययनिष्ठा खलर्थतृणां इति सूत्रेण उ प्रत्ययस्य प्रयोगे कर्म्मणि-६ष्ठी-प्रतिषेधात् द्वितीया ) सत्वं इति शेषः ( कर्म्म ) जिघांसुः=हन्तुं इच्छुः ( हन-धा+सन्=जिघांस धा+उ, कर्त्ता-विश) सरयूं नदीं अन्वगाम् ।२०॥

वाच्यान्तरं। अजितेन्द्रियेण मया जिघांसुना अन्वगायि। २० ॥

मैं मृगया के वश हो रात को पानी पीने के लिए आये हुए हाथी, हिरन या और हिंस्र पशु को मारने की इच्छा से सरयु नदी में गया ।२०

(20,) Being under the influence of hunting I went to the banks of the Sarayu at night to kill buffaloes, elephants, deer and other beasts of prey that would come to drink water there.

**अथ इति।** अन्वयः। अथ तु अन्धकारे अचक्षुर्विषये जले पूर्य्यतः कुम्भस्य नर्दतः वारणस्य इव घोषं अशौषं। २१ ॥

व्याख्या। अथ तु=सरयूतीरगमनानन्तरं ( अव्य ) अन्धकारे=तमसि अन्धकाराद्वृतायां रजन्याम् इत्यर्थः ( अधि ) अतएव अचक्षुर्विषये =चक्षुषोः ( ६तत् ) विषयः दृष्टिगोचरः स न भवति तत् अन्धकारात् अदृष्टे इत्यर्थः ( अधि-विश ) जले=( अधि) पूर्य्यतः पूर्य्यमाणस्य ( सम्ब-विश, पूर-धा+शतृप्रत्ययः आर्षः ) कुम्भस्य=कलसस्य ( घोषं इत्यनेन सह सम्बन्धे ६ष्ठी ) नर्दतः बृंहतः शब्दायमानस्य इत्यर्थः ( ६ष्ठी-विश )

वारणस्य=हस्तिनः ( उपमा-सम्ब ६ष्ठी ) घोषं रवं ( कर्म ) अश्रौषं= श्रुतवान् ( श्रु-धा+लुङ्-१पु-१व, क्रिया ) अहं इति शेषः ( कर्त्ता )। कलसजलपूरणशब्दे मम गजबृंहितभ्रमः सञ्जातः इति भावः। २१ ॥

वाच्यान्तरं। शब्दः अश्रावि (मया) २१ ॥

तब मैं अंधेरे में जल में जो आंखों से दीखता नहीं था, कलसा में पानी भरने का सा हाथी के गरज ने का शब्द सुना। २१ ॥

(21) Then in the midst of the darkness which suspended all the functions of the eyes I heard, like the belowing of an elephant, the sound of a vessel being filled up with water.

**ततोऽहमिति।** अन्वयः। ततः अहं दीप्तं आशीविषोपमं शरं उद्धृत्य शब्दं प्रति गजप्रेप्सुः ( सन् ) अभिलक्ष्यं अपातयम्। २२ ॥

व्याख्या। ततः=पूर्य्यमाणकुम्भशब्दश्रवणात् परं अहं दीप्तं=ज्वलितं समुज्ज्वलमुखमिति यावत् (विश) आशीविषोपमं=आशिषि दंष्ट्रायां विषं यस्य स आशीविषः सविषः सर्पः, ( बहुव्री ) सः उपमा सादृश्यं यस्य सः तं ( बहुव्री, विश ) विषमुखं सर्पमिव सद्यः प्राणापहारिणं शरं (कर्म) वाणं उद्धृत्य तूणीरादुत्तोल्य ( उत्+धृ+ल्यप् ) शब्दं प्रति=लक्ष्यं कृत्वेति उपरिष्टात् योजनीयम्, अथवा शब्देन अनुमितवेध्यं लक्ष्यीकृत्येत्यर्थः, गजप्रेप्सुः गजरूपं वेध्यं प्रेप्सुः प्राप्तुमिच्छुः ( प्र+आप् सन् ततः उः ) अभिलक्ष्यं लक्ष्यं अभि अभिलक्ष्यं शब्दानुमितलक्ष्यस्य सम्मुखं ( अव्ययी ) अपातयम् न्यक्षिपम् ( पत्+णिच्=पाति+लङ् )। २२ ॥

वाच्यान्तरं। मया गजप्रेप्सुना अपात्यत। २२ ॥

तब मैं ने जलता हुआ विषभरे हुए सर्प के समान एक वाण हाथी के पाने की इच्छा से शब्दानुसार उस लक्ष्य की तरफ मारा। २२ ॥

(22.) Being desirous of having elephants into my possessions, I then hit in the direction of the sound, a bright arrow, deadly as a snake.

**अमुञ्चमिति।** अन्वयः। निशितं आशीविषोपमं बाणं अमुञ्चम्। तत्र बाणात् व्यथितमर्म्मणः तोये पततः वनौकसः हा हा इति व्यक्ता वाक् उषसि प्रादुरासीत्। २३॥

व्याख्या। निशितं शाणितं तीक्ष्णाग्रमिति यावत् आशीविषोपमं= आशिषि दंष्ट्रायां विषं यस्य सः आशीविषः सविषः सर्पः (बहुव्री) स उपमा सादृश्यं यस्य सः तं (बहुव्री, विण) विषमुखं सर्पमिव सद्यः प्राणापहारिणं बाणं शरं (कर्म्म) अमुञ्चम् निक्षिप्तवान्। तत्र=यत्र मया बाणो निक्षिप्तः तस्मिन् स्थाने इत्यर्थः बाणात् शरात् (हेतौ ५मी) अत्र बाणशब्देन तत्प्रहारो लक्ष्यते तस्यैव व्यथाहेतुत्वात्। व्यथितं मर्म्म जीवितस्थानं यस्य सः तस्य मर्म्मणि प्राप्तप्रहारस्य अतएव तोये नदीजले (अधि) पततः (पत्-शतृ-६ष्ठी-१व) वनौकसः वनं ओकः वासस्थानं यस्य तस्य आरण्यकमनुष्यस्य मुनेरित्यर्थः हा हेति व्यक्ता स्पष्टा वाक् वाणी उषसि नैशे तमसि प्रादुरासीत् उच्चचार (प्रादुस्-अस्-धा+लङ्) अत्र बाणव्यथितमर्म्मणः इत्यपि पाठः दृश्यते। तथा सति बाणेन व्यथितं मर्म्म यस्य इति नियहः। २१॥*

वाच्यान्तरं। निशितः आशीविषोपमः बाणः अमुच्यत। व्यक्तया वाचा प्रादुरभूयत। २३॥

जहां मैं ने विष वाले सर्प के समान बाण मारा वहां किसी बनवासी मुनि ने जिस के बाण की चोट मर्म्म में लगी थी, और जो पानी में गिर पड़ाता था, हा हा यह शब्द किया। २३॥

---

* मूले संयहकृता समुद्धृता रामानुजव्याख्या द्रष्टव्या। रामानुजेन तु हा हेति तस्मिन्निति च पादचतुष्टयेन श्लोकः गणितः अस्माभिः तदन्यथा कृतमिति विभावनीयम्। एवमेव अन्यत्रापि ज्ञेयम्।

(23.) In the spot where felt the arrow fatal like a snake, there arose in the night, a distinctly audible, 'alas' as of some inhabitant of the woods who, being pierced to the heart with the arrow, was falling into the water.

**तस्मिन् इति ।** अन्वयः । तस्मिन् भूमौ निपतिते (सति) तत्र अस्मद्विधे तपस्विनि शस्त्रं कथं निपतेत् (इति) मानुषी वाक् अभूत् च । २४ ॥

व्याख्या । तस्मिन्=मद्वाणलक्ष्यीभूते वनौकसि मुनौ इत्यर्थः (भावाधिकरण) भूमौ=पृथिव्यां (अधि) निपतिते सति (कर्त्तरि-क्त, अधि-विश) तत्र=पतनस्थाने (अधि, अव्य) अस्मद्विधे=मादृशे अनपकारिणि इत्यर्थः (अधि-विश) तपस्विनि=प्रशस्ततपोविशिष्टे जने अथवा अजातशत्रौ निरपराधे जने (अधि) शस्त्रं=शरः (कर्त्ता) कथं (अव्य) निपतेत् (नि-पत-धा+विधि, क्रिया) इति मानषी=मानुषस्य इयं मनुष्यसम्बन्धी सार्थवर्णा इत्यर्थः (कर्त्ता-विश) वाक्=वाणी (कर्त्ता) अभूत च (क्रिया) । २४ ॥

वाच्यान्तरं । मानुष्या वाचा अभूयत, शस्त्रेण निपत्येत । २४ ॥

उस के जमीन पर गिर पड़ने पर मैं तपस्वी हूं मुझे कौन शस्त्र प्रहार करेगा, यह मानषी वाक सुन में आई । २४ ॥

(24.) As he fell to the ground these words were heard there ; "Why falls this arrow on me an innocent being who knows nothing but meditation and prayer."

**प्रविविक्तां इति ।** अन्वयः । अहं रात्रौ उदाहारः (सन्) प्रविविक्तां नदीं आगतः, केन इषुणा अभिहतः, मया कस्य वा अपकृतं । २५ ॥

व्याख्या । अहं (कर्त्ता) रात्रौ=शेषरात्रे (अधि) उदाहारः= उदकं जलं हरति यः (उदक-हृ-धा+अण, उदकस्य उदादेशः दीर्घः

आर्थः ) सन् जलं नेतुं इत्यर्थः ( कर्त्ता विण ) प्रविविक्तां=सर्व्वथा निर्जनां ( कर्म्म-विण ) नदीं ( कर्म्म ) आगतः ( कर्त्तरि-क्त, क्रिया ), केन=जनेन ( कर्त्ता-३या ) इषुणा=वाणेन ( करण ) अभिहतः=विनाशितः (अभि-हन-धा+कर्म्मणि-क्त, क्रिया ) अहं इति शेषः ( कर्म्म ) मया=( कर्त्ता-३या ) कस्य=जनस्य वा ( सम्ब ) अपकृतं काक्वा न कस्यापि इति व्यज्यते ( अप-कृ-धा+भावे-क्त, क्रिया ) । २५ ॥

वाच्यान्तरं । मया उदाहारेण प्रविविक्ता नदी आगता कः अभिहतवान् । अहं अपकृतवान् । २५ ॥

मैं रात को पानी के लिए नदी में आया था, मुझे किस ने वाण से मारा, मैं ने किस का अपकार किया है । २५ ॥

(25.) I came to this solitary river simply to draw water, who has pierced me with this arrow? Whom have I wronged?

**ऋषेः इति ।** अन्वयः । न्यस्तदण्डस्य वने वन्येन जीवतः मद्विधस्य ऋषेः शस्त्रेण वधः नु विधीयते । २६ ॥

व्याख्या । न्यस्तदण्डस्य=न्यस्तः परित्यक्तः दण्डः येन ( बहुव्री ) तस्य, अकृतपरपीड़स्य ( सम्ब-विण ) वने=अरण्ये ( अधि ) वन्येन=वनोद्भवेन फलादिना इत्यर्थः ( वन-शब्द+ष्यण करण-३या ) जीवतः=प्राणान् धारयतः ( जीव-धा+शत-६ष्ठी ) मद्विधस्य शस्त्रेण=वाणेन ( करण ) वधः=हत्या ( कर्म्म-१मा ) कथं नु ( अव्य) विधीयते=अनुष्ठीयते अकृतपरोपकारः फलमूलाहारी जनः शस्त्रवधं न अर्हति इत्यर्थः ( वि-धा+कर्म्मणि-लट, क्रिया ) । २६ ॥

वाच्यान्तरं । वधं विदधाति । २६ ॥

मैं ऋषि हूं मैं किसी को पीड़ा नहीं देता, बन के फल फूल खाता हूं, मेरे से मनुष्य का शस्त्र से बध क्यों कर विहित हो सक्ता है । २६ ॥

( 26.) What object is to be gained by killing me who dwells in this forest living upon the produce of the woods and who have never laid any violent hands on another.

जटाभार इति। अन्वयः। जटाभारधरस्य वल्कलाजिनवाससः मम एव वधेन कः अर्थी स्यात्, मया अस्य किं वा अपकृतं। २७॥

व्याख्या। जटाभारधरस्य=धरति इति धरः (पचाद्यच्) जटाभारस्य जटाजूटस्य धरः तस्य जटाशोभितमस्तकस्य न तु सुवर्णकिरीटिनः इति भावः (६ष्ठी-विण) वल्कलाजिनवाससः=वल्कलं हक्षत्वक्, अजिनं मृगचर्म्म ते वासो यस्य (बहुव्री) तस्य हक्षत्वच' मृगचर्म्म वा परिदधानस्य नतु कौशेयवस्त्रसंवीतस्य, बहुमूल्यद्रव्यलोभेन वधः सम्भवति, मम हन्तुः न कोऽपि लाभः स्यात् इत्यर्थः (६ष्ठी-विण) मम (वधेन इत्यस्य कर्म्म-६ष्ठी) वधेन=नाशेन (वध-धा+अल) कः=पुमान् (कर्त्ता) अर्थी (कर्त्ता-विण) स्यात्=भवेत् इत्यर्थः (अस-धा+विधि, क्रिया), अभक्ष्यत्वात् मनुष्यमांसेन न कस्यापि प्रयोजनं इति व्यर्थः एव मद्वधः इति भावः। मया (कर्त्ता-३या) अस्य=हन्तुः (सर्व्व-सम्बन्धविवक्षया ६ष्ठी) किं (कर्म्म) वा (अव्य) अपकृतं=अनिष्ट' आचरितं (कर्म्मणि-क्त, क्रिया) न किञ्चिदपि, ततः वैरनिर्य्यातनावसरः नास्ति इति भावः। २७॥

वाच्यान्तरं। केन अर्थिना भूयेत, अहं किं अपकृतवान्। २७॥

जटाजूटधारी, और वाकल और मृगछाला के पहिन ने वाले को मार के कौन क्या करेगा? मैं ने किसी का क्या अपकार किया है। २६॥

( 27.) Who has attained his object by killing me, clad in the barks of trees and skins of dear, and carrying coltted locks of hair on the head?

एवं इति। अन्वयः। एवं निष्फलं केवलानर्थसंहितं आरब्धं, मद्वधे मातरं पितरं च उभौ अनुशोचामि। २८॥

व्याख्या। एवं=इत्थं (अव्य) निष्फलं=नास्ति फलं यस्मिन् (बहुव्री) व्यर्थं इहलोके फलरहितं इत्यर्थः (कर्म्म-विण) केवलानर्थसंहितं=केवलानि अनर्थानि, (कर्म्म-धा+) तेषां संहितं मिलनं (६तत्) बहूनि अमङ्गलानि परलोकनाशकत्वात् इति भावः (कर्म्म) आरब्धं=अनुष्ठितं (आ-रभ-धा+कर्म्मणि-क्त, क्रिया), अस्तु तावत् अन्यस्य लाभाभावः, तव च का क्षतिः इति आह मातरं इति। मद्वधे=मम वधः नाशः (६तत्) तस्मिन् मन्मरणे (अधि) मातरं=मम जननीं (कर्म्म) पितरं=मम जनकं च (कर्म्म) उभौ=एतौ द्वौ (कर्म्म-२या) अनुशोचामि (अनु-शुच-धा+लट, क्रिया) तेषां कृते मे दुःखं, न तु आत्मनः जीवितनाशं अनुशोचामि इति भावः। २८॥

वाच्यान्तरं। आरब्धवान्, माता पिता च उभौ अनुशुच्येते। २८॥

केवल अनर्थ पूर्ण निष्फल काम आपने किया, मैं आपने बध में पिता और माता दोनों के लिए शोक करता हूं। २८॥

(28.) This wanton act will simply produce evil and will do no good to any. I am grieving at my death both for the sake of my father and mother.

**तदेतत् इति।** अन्वयः। मया तत् एतत् वृद्धं मिथुनं चिरकालभृतं, मयि पञ्चत्वं आपन्ने (सति) कां वृत्तिं वर्त्तयिष्यति।२९॥

व्याख्या। मया (कर्त्ता-३या) तत् एतत् (सर्व्व-कर्म्म विण) वृद्धं=प्राप्तवार्द्धक्यं (कर्म्म विण) मिथुनं=युगलं मम पितरौ (कर्म्म-१मा) चिरकालभृतं=चिरकालं (२तत्) भृतं प्रतिपालितं, वृद्धत्वात् अशक्तौ तौ अशनदानादिना रक्षितौ इत्यर्थः (भृ-धा+कर्म्मणि-क्त, क्रिया) मयि=तयोः प्रतिपालके तत्पुत्रे (भावाधि-७मी) पञ्चत्वं=पञ्चानां क्षित्यादीनां भावः (पञ्चन्-श+त्व) मृत्युं (आपन्ने इत्यस्य-कर्म्म) आपन्ने=प्राप्ते सते सति इत्यर्थः (आ-पद-धा+कर्त्तरि-क्त, अधि-विण) तत् मिथुनं

इति शेषः ( कर्त्ता ) कां वृत्तिं=जीविकां ( कर्म्म ) वर्त्तयिष्यति=केनोपायेन प्राणान् धारयिष्यति इत्यर्थः ( वृत-धा+णिच+लृट-क्रिया ) आहाराभावेन तौ पितरौ मरिष्यतः इति भावः । २९ ॥

वाच्यान्तरं । अहं मिथुनं भृतवान्, का वृत्तिः वर्त्तयिष्यते । २९ ॥

मैं इस अंधे मिथुन को बहुत दिनों से पोषण करता हूं, मेरे मरने पर येह कैसे जीयेंगे । २९ ॥

( 29.) For a long time I have been supporting this old couple ; how will they gain their livelihood when I am gone ?

**वृद्धौ इति ।** अन्वयः । एकेन इषुणा वृद्धौ मातापितरौ च हतौ, अहं च हतः, अकृतात्मना सुबालेन केन सर्व्वे ( वयं ) निहताः स्म । ३० ॥

व्याख्या । एकेन ( करण-विण ) इषुणा=( करण ) वृद्धौ ( कर्म्म-विण ) मातापितरौ=माता च पिताच ( द्वन्द ) जननीजनकौ ( कर्म्म-१मा ) हतौ=विनाशितौ ( हन्-धा+कर्म्मणि-क्त, क्रिया ), अहं ( कर्म्म-१मा ) हतः ( क्रिया ) मद्वधेन मदधीनजीवितयोः तयोरपि वधस्य सिद्धत्वात् इत्याशयः । अकृतात्मना=अकृतः आत्मा यस्य ( बहुव्री ) तेन अजितेन्द्रियेण ( कर्त्ता-विण ) सुबालेन=अतिशिशुना बुद्धिहीनेन इत्यर्थः ( कर्त्ता-विण ) केन=अनेन ( सर्व्व-कर्त्ता-३या ) सर्व्वे वयं इति शेषः ( निहताः इत्यस्य-कर्म्म, स्म इत्यस्य कर्त्ता च ) निहताः=विनाशिताः ( कर्म्मणि-क्त, कर्म्म-विण ) स्मः=भवामः ( अस् धा+लट १पु-३व, क्रिया ) । ३० ॥

वाच्यान्तरं । मातापितरौ हतवान्, माञ्च हतवान्, सर्व्वैः अस्माभिः निहतैः भूयते ; ३० ॥

मेरे वृद्ध पिता माता और मैं एक बाण से मारा गया, किस अकृतात्मा बालक ने सभों को मारा । ३० ॥

(30.) A single arrow has killed us all three, father, mother and myself. What foolish boy who has no control over his senses has thus killed us all,

**तां इति ।** अन्वयः । तां गिरं करुणं श्रुत्वा धर्म्मानुकाङ्क्षिणः व्यथितस्य मम कराभ्यां सशरं चापं भुवि अपतत् । ३१ ॥

व्याख्या । तां=पूर्व्वोक्तां ( कर्म्म-विण ) गिरं=वाक्यं ( कर्म्म ) करुणं=करुणाजनकं यथा तथा ( कर्म्म-विधेय-विण ) श्रुत्वा=आकर्ण्य ( असमा ) धर्म्मानुकाङ्क्षिणः=धर्म्मं अनुकाङ्क्षते इच्छति यः ( इन् ) तस्य धर्म्मप्रतीक्षाशीलस्य ( सम्ब-विण ) व्यथितस्य – व्यथा सञ्जाता अस्य (व्यथा-श+इतच् ) तस्य दुःखितस्य इत्यस्य ( सम्ब-विण ) मम ( सम्ब ) कराभ्यां =हस्तद्वयात् ( अपा-५मी-२व ) सशरं=शरेण सह वर्त्तमानं ( बहुव्री ) वाणसहितं ( कर्त्ता-विण ) चापं=धनुः ( कर्त्ता ) भुवि=पृथिव्यां ( अधि) अपतत् ( लङ्, क्रिया ) मनुष्यहननात् भयेन हस्तौ चकम्पाते, तेन शरः धनुश्च पपात इत्यर्थः । ३१ ॥

वाच्यान्तरं । सशरेण चापेन अपत्यत । ३१ ॥

धर्म्माकाङ्क्षी मेरे मनमें यह करुण बात सुनके दुख हुआ और हाथों से वाण और धनु गिर पड़ा । ३१ ॥

(31.) Hearing these lamenting words, I a pursuer after religion being pained at heart, let fall the bow with arrow from my hand.

**तस्य इति ।** अन्वयः । अहं निशि विलपतः ऋषेः करुणां श्रुत्वा शोकेन संभ्रान्तः सन् भृशं विचेतनः च आसम् । ३२ ॥

व्याख्या । अहं ( कर्त्ता ) निशि=रात्रौ ( अधि ) विलपतः=सकरुणं रुदतः ( वि-लप-धा+शतृ, सम्ब विण ) तस्य ऋषेः=मुनिबालकस्य ( सम्ब ) करुणां=विलापध्वनिं ( कर्म्म ) श्रुत्वा ( असमा ) शोकवेगेन= दुःखातिभारेण ( करण ) संभ्रान्तः=उद्विग्नः= ( सम् भ्रम्-धा+क्त, कर्त्ता-

विण ) सन् भृशं=अत्यन्तं ( क्रिया-विण ) विचेतनः=विगतं चेतनं यस्य ( बहुव्री ) हतज्ञानः ( कर्त्ता-विण) आसम्=अभवम् ( अस-धा+लङ, १पु-१व, क्रिया । ३२ ॥

वाच्यान्तरं । मया संभ्रान्तेन विचेतनेन अभूयत । ३२ ॥

रात को विलाप करते हुए उस ऋषिके विलाप को सुन मैं शोकसे उद्विग्न हो अचेतसा हो गया । ३२ ॥

( 32. ) Hearing the piteous words of the sage, lamenting in the night, I being anxious and over-powered with grief became senseless.

**तं देशं इति ।** अन्वयः । दीनसत्वः सुदुर्मनाः अहं तं देशं आगत्य सरय्वाः तीरे इषुणा हतं अवकीर्णजटाभारं प्रविद्धकलसोदकं पांशुशोणितदिग्धाङ्गं शल्यवेधितं शयानं तमहं अपश्यम् । ३३ ३४ ॥

व्याख्या । दीनसत्वः=दीनं दुःखितं सत्वं अन्तःकरणं यस्य ( बहुव्री ) सः ( कर्त्ता-विण) सुदुर्मनाः=सुदुःखितं मनः यस्य (बहुव्री) सः बुद्ध्यहंकारमनांसि अन्तःकरणं मनस्तु तदेकदेशभाव इत्यनयोः भेदः ) ऋषिहननात् अत्यन्तदुःखितः इत्यर्थः ( कर्त्ता-विण) अहं ( कर्त्ता ) तं=यत्र शब्दः प्रादुर्भूतः ( सर्व्व-कर्म्म-विण) देशं=स्थानं ( कर्म्म ) आगम्य=आगत्य ( आ-गम-धा+ल्यप ) सरय्वाः नद्याः ( सम्ब) तीरे=तटे ( अधि) इषुणा=वाणेन ( करण) आहतं=प्रहृतं विद्धं इत्यर्थः ( आ-हन-धा+क्त, कर्म्म-विण) अवकीर्णजटाभारं=अवकीर्णः आलुलायितः ( अव-कॄ-धा+क्त ) जटानां ( ६तत् ) भारः यस्य ( बहुव्री ) तं ( कर्म्म-विण) प्रविद्धकलसोदकं=प्रविद्धं विपर्यस्तं कलसोदकं यस्य ( बहुव्री ) तं ( कर्म्म ) पांशुशोणितदिग्धाङ्गं=पांशुना धूलिना शोणितेन च ( द्वन्द्व, ३तत् ) दिग्धं लिप्तं ( दिह-धा+क्त ) अङ्गं यस्य ( बहुव्री ) तं ( कर्म्म-विण) शल्यवेधितं=शल्येन ( ३तत् ) वेधितः तं देहे संलग्नवाणं ( कर्म्म-

विण) शयानं=भुवि पतितं (शी-धा+शानच, कर्म्म-विण) तापसं=तपः आचरति तापसः (तपस्-अ+णण) तं तपस्विनं (कर्म्म) अपश्यम्=दृष्टवान् (दृश-धा+लङ्-उपु-१व, क्रिया)। ३३-३४॥

वाच्यान्तरं। दीनसत्वेन मुदुर्भनसा मया हतः अवकोर्णजटाभारः प्रविद्धकलसोदकः पांशुशोणितदिग्धाङ्गः शल्यवेधितः शयानः तापसः अदृश्यत। ३३-३४॥

दुर्मना और निवल हो मैं ने उस जगह जा सरयूके किनारे वाण लगे उस तपखी को देखा, उसकी जटा विखरी हुई थी, पानीका कलसा पलट गया था, और वह धूलि धूसरित और रक्त से भीगा हुआ शल्यकी चोट खा के पड़ा हुआ था। ३३-३४॥

(33-34.) Grieved at heart and full of anxiety I went to the place and found the ascetic on the bank of the Sarayu, lying pierced with arrow, the twisted locks of his hair being dishavelled, his body being blood-stained and besmeared with mud, and the empty earthen-pot lying beside him.

**सः इति।** अन्वयः। सः मां अस्वस्थचेतनं त्रस्तं नेत्राभ्यां उद्वीक्ष्य तेजसा दिधक्षन् इव इति क्रूरं वचः उवाच। ३५॥

व्याख्या। सः=तापसः (सर्व्व-कर्त्ता) मां=दशरथं (सर्व्व-कर्म्म) अस्वस्थचेतनं=स्वस्मिन् तिष्ठति यत् तत् स्वस्थं प्रकृतिस्थं न स्वस्थं चेतनं संज्ञा यस्य (बहुव्री) तं भयविह्वलमानसं (कर्म्म-विण) त्रस्तं=भयचकितं (त्रस-धा+क्त, कर्म्म-विण) उद्वीक्ष्य=दृष्ट्वा मामेव वैधकं निश्चित्य इत्यर्थः (उत्-वि-ईक्ष-धा+ल्यप, अव्य) तेजसा=तपःप्रभावेण (करण) दिधक्षन् इव=दग्धुं इच्छन् इव (दह-धा+सन्=दिधक्ष-धा+शतृ, इव उत्प्रेक्षायां अव्य) इति=वक्ष्यमाणं (कर्म्म-विण, अव्य) क्रूरं=निष्ठुरं (कर्म्म-विण) वचः=वाक्यं (कर्म्म) उवाच=कथयामास (वच-धा+लिट, क्रिया। ३५॥

वाच्यान्तरं । तेन दिधक्षता क्रूरं वचः ऊचे । ३५ ॥

उसे देख मैं डर गया मेरा मन ठिकाने नही था, उसने मुझे आखोंसे देख, मानो जलाता हुआ यह कठोर बातें कहीं । ३५ ॥

( 35. ) Seeing me frightened and quite beside myself, he uplifted his eyes and spoke these cruel words burning me, as it were, with their fire.

किं इति । अन्वयः । ( हे ) राजन् वने निवसता मया तव किं अपकृतं, यत् गुर्व्वर्थं जलं जिहीर्षुः अहं त्वया ताड़ितः । ३६ ॥

व्याख्या । राजन्=हे भूपते ( सम्ब ) वने=अरण्ये ( अधि ) निवसता=कृतावासेन तिष्ठता अविरोधिना इत्यर्थः ( नि-वस-धा+शतृ, कर्त्ता-विण-३या ) मया ( कर्त्ता-३या ) तव ( सम्ब ) किं ( कर्म्म-२या ) अपकृतं=अपराद्धं ( कर्म्मणि-क्त, क्रिया ) तत्=यस्मात् अपराधात् हेतोः ( अव्य ) गुर्वर्थं=गुरवे इदं मातुः पितुः च प्रयोजनाय ( अर्थेन नित्यसमासः ) अम्भः=जलं ( कर्म्म, अम्भस्-अ+२या १व ) जिहीर्षुः=हर्त्तुं नेतुं इच्छुः ( हृ-धा+सन्=जिहीर्ष-धा+उ, कर्म्म-विण ) अहं ( कर्म्म-१मा ) त्वया=( कर्त्ता-३या ) ताड़ितः=दण्डितः आहतः इत्यर्थः (ताड़ि-धा+कर्म्मणि-क्त, क्रिया ) । । ३६ ॥

वाच्यान्तरं । निवसन् अहं किं अपकृतवान्, जिहीर्षुं मां त्वं ताड़ितवान् । ३६ ॥

हे राजा मैं ने वन में वसके आपका क्या अपकार किया है कि आपने, मुझे मारा, मैं पिता माताके लिए पानी भरने को आया था । ३६ ॥

( 36. ) An inhabitant of this forest what harm have I done to you, Oh king! that on coming to draw water for my thirsty parents, you let your arrow fall on me.

एकेन इति। अन्वयः। एकेन वाणेन मर्म्मणि मयि अभिहते (सति) मे माता जनयिता च द्वौ अन्धौ वृद्धौ खलु निहतौ। ३७॥

व्याख्या। एकेन (करण-विण) वाणेन (करण) मर्म्मणि=मर्म्मावच्छेदे (अवच्छेदे-७मी) मयि (भावाधि-७मी) ताड़िते=आहते सति त्वया इति शेषः (कर्म्मणि क्त, अधि-विण) मे=मम=सम्ब माता=जननी (कर्म्म-विण) जनयिता=जनकः पिता इत्यर्थः (जन धा+णिच तृच, कर्म्म-विण) द्वौ अन्धौ=चक्षुर्हीनौ (कर्म्म-विण) वृद्धौ (कर्म्म) निहतौ=विनाशितौ (कर्म्मणि-क्त, क्रिया) त्वया इति शेषः (कर्त्ता-३या) मदधीन वृत्तितया मद्वधे तयोरपि वधः इति भावः। ३७॥

वाच्यान्तरं। मातरं जनयितारं द्वौ अन्धौ वृद्धौ निहतवान्। ३७॥

मेरे मर्म्म में एक वाण मारके आपने मेरे अंधे और वृद्ध माता पिता को भी मारा। ३७॥

(37.) A single arrow that has pierced my heart has brought about the death of the old blind couple—my father and mother, the authors of my being,

तौ इति। अन्वयः। दुर्बलौ अन्धौ मत्प्रतीक्षौ पिपासितौ तौ आशाकृतां कष्टां तृष्णां नूनं चिरं संधारयिष्यतः। ३८॥

व्याख्या। दुर्बलौ=वृद्धत्वात् बलहीनौ, (कर्त्ता-विण) अन्धौ+दृष्टिहीनौ अन्धत्वात् स्वयं जलं आनेतुं अक्षमौ इत्यर्थः (कर्त्ता-विण) अतएव मत्प्रतीक्षौ=मम गमनं प्रतीक्ष्यमाणौ (कर्त्ता-विण) पिपासितौ=जलं पातुं इच्छा जाता अनयोः (पा-धा+सन्+आ=पिपासा+तारकादिभ्यः इतच् इति इतच्) तौ=मम माता पितरौ (सर्व्व-कर्त्ता-१मा-२व) आशाकृतां=आशया (३तत्) कृतां पुत्रः मे जलं आनेष्यति इत्येवरूपां (कर्म्म-विण) कष्टां=कष्टदायिकां (कर्म्म-विण) तृष्णां=जलपिपासां (कर्म्म) नूनं=निश्चयेन चिरं=बहुक्षणं व्याप्य (अत्यन्त-

संयोगे-२या ) संधारयिष्यतः—सहिष्यतः पिपासापीड़िती भविष्यतः इत्यर्थः ( सम्-धृ-धा+णि=लृट्, क्रिया । ३८ ॥

वाच्यान्तरं । दुर्व्वलाभ्यां अन्धाभ्यां मत्प्रतीक्षाभ्यां ताभ्यां आशाकृता कष्टा तृष्णा संधारयिष्यते । ३८ ॥

वह अंधे दुर्बल हैं, प्यासे मेरी राह देखते होंगे, और इस आससे प्यास मारे होंगे कि मेरा बेटा पानी लाता होगा । ३८ ॥

( 38. ) Certainly the two blind and infirm, being thirsty are anxiously awaiting my return, bearing up their thirst with great patience in the hope that their son would soon bring them water.

न नूनं इति । अन्वयः । ( मामकस्य पितुस्य ) तपसः वा श्रुतस्य वा फलयोगः नूनं नास्ति । यत् पिता भुवि पतितं शयानं मां न जानीते । ३९ ॥

व्याख्या । मामकस्य पितुस्य इति शेषः ( मम पितुः इत्यर्थः ) तपसः=चान्द्रायणादिव्रतस्य ( सम्ब ) वा=अथवा ( अव्य ) श्रुतस्य=वा वेदाद्यध्ययनस्य वा ( सम्ब ) फलभोगः=फलसम्बन्धः ( कर्त्ता ) नूनं ( निश्चये अव्य ) न अस्ति=न विद्यते ( क्रिया ) यत=यस्मात् फला-भावात् हेतोः ( अव्य ) भुवि—भूमौ ( अधि ) पतितं ( कर्त्तरि-क्त, कर्म्म-विण ) शयानं ( शी-धा + शानच, कर्म्म विण ) मां ( कर्म्म ) न जानीते = न वेत्ति ( ज्ञा-धा+कर्त्तरि-लट, क्रिया ) । ३९ ॥

वाच्यान्तरं । फलयोगेन न भूयते, पित्रा पतितः शयानः अहं न ज्ञाये । ३९ ॥

मेरे पिताकी तपस्या या वेदाध्ययन का फल नहीं है, क्यों कि पिता मुझे जमीन् पड़ा नहीं जानते । ३९ ॥

( 39. ) Certainly there is no good in my father's ascetic-ism, or his learning in the Vedas, for he is unable to know me lying here on the ground.

**जानन् इति।** अन्वयः। अशक्तः अपरिक्रमः (पिता) जानन् अपि किं कुर्यात्, भिद्यमानं नगं अन्यः नगः इव (मां) त्रातुं अशक्तिः। ४०॥

व्याख्या। अशक्तः=वृद्धत्वात् असमर्थः (कर्त्ता-विश) अपरिक्रमः=अन्धत्वात् कुत्रापि गन्तुमक्षमः (कर्त्ता-विश) पिता (कर्त्ता) जानन् अपि=विद्वान् अपि (ज्ञा-धा+शतृ) किं (कर्म्म) कुर्यात् (क्रिया) भिद्यमानं=वातादिना भज्यमानं (भिद्-धा+कर्म्मणि-शानच्) नगं=न गच्छति यः सः (गम-धा+ड) तं वृक्षं (उपमा-कर्म्म) अन्यः=अपरः (उपमा-कर्त्ता-विश) नगः इव=वृक्षः इव (उपमा-कर्त्ता) मां इति शेषः (कर्म्म) त्रातुं=विपदः उद्धर्त्तुं (त्रै-धा+तुमुन) अशक्तिः=न शक्तिः यस्य (बहुव्री) सः अशक्तः असमर्थः मे पिता इति शेषः। ४०॥

वाच्यान्तरं। अशक्तेन अपरिक्रमेण (पित्रा) जानता अपि किं क्रियेत। ४०॥

वह असमर्थ हैं, चल नहीं सकें जानके क्या करेंगे जैसे एक टूटते हुए पेड़ को और पेड़ बचा नहीं सका वैसे ही वह कुछ नहीं कर सकें। ४०॥

(40.) Or what avails his knowing it since he weak and infirm, unable to move, will not be able to protect myself, as a tree up-rooted about to fall, cannot protect another

**पितुः इति।** अन्वयः। (हे) राघव त्वं एव शीघ्रं गत्वा मे पितुः आचक्ष्व, (स मम पिता) क्रुद्धः सन् एधितः अग्निः वनं इव त्वां न अनुदहेत्। ४१॥

व्याख्या। राघव=हे रघुवंशोद्भव दशरथ (सम्बो) त्वं एव=त्वं स्वयं ननु अन्यं जनं नियोज्य इति भावः (कर्त्ता) शीघ्रं=द्रुतं त्वरितं (क्रिया-विश) गत्वा (असमा) मे=मम (सम्ब) पितुः=जनकस्य (सम्बन्धविवक्षया-

६ष्ठी ) आचक्ष्व=कथय ( आ चक्ष-धा+लो-२पु १व, क्रिया )। सः मम पिता इति शेषः ( कर्त्ता ) क्रुद्धः=कुपितः सन् ( क्रुध-धा+क्त, कर्त्ता-विण ) एधितः=वर्द्धितः प्रदीप्तः इत्यर्थः ( एध-धा+क्त, उपमा कर्त्ता-विण ) अग्निः=वह्निः ( उपमा-कर्त्ता ) वनं इव=अरण्यं इव ( उपमा-कर्म्म ) त्वां=दशरथं ( कर्म्म ) न अनुदहेत्=मा दहतु इत्यर्थः ( दह-धा+विधि, क्रिया ) यदि न आचक्षसि तर्हि पिता त्वां धक्ष्यति इति भावः। ४१ ॥

वाच्यान्तरं। त्वया आचक्ष्यतां, क्रुद्धेन सता एधितेन अग्निना वनं इव त्वं न अनुदह्येथाः। ४१ ॥

हे राघव आप जाके मेरे पितासे जलद कहो, नहीं तो वह बढ़ी हुई आग जैसे वनके जलाती है वैसे ही क्रुद्ध हो आपको जलायंगे।४१॥

(41,) Oh thou of the Raghu's race, go yourself to my father; he will not like the fire of the forest burn you with the fire of his wrath.

इयं इति। अन्वयः। ( हे ) राजन् इयं एकपदी, यतः मे पितुः आश्रमः प्राप्यते। त्वं गत्वा तं प्रसादय, पिता संकुपितः सन् त्वा न शपेत्। ४२ ॥

व्याख्या। इयं=संमुखस्था (१मा-विण) एकपदी एकजनगमनयोग्या पादाहतिक्षुद्रा सरणिः ( प्रातिपदिकार्थे-१मा ) यतः=यया एकपद्याः (करण, ३या+तस्, अव्य ) मे=मम ( सम्ब ) पितुः=जनकस्य (सम्ब) आश्रमः=आलयः ( कर्म्म-१मा ) प्राप्यते इति शेषः अनेन सूक्ष्ममार्गेण त्वया गन्तव्यं इति भावः, त्वं=दशरथः ( कर्त्ता ) गत्वा ( असमा ) तं=मम पितरं (तद्-श+२या, कर्म्म) प्रसादय=सन्तोषय (प्र-सद-धा+णिच+लोट, क्रिया ) मे पिता इति शेषः ( कर्त्ता ) संकुपितः=क्रुद्धः सन् (कर्त्ता-विण)

त्वा=त्वां (कर्म-युष्मद-म-२या-१व) न अर्पेत्=मा अर्पेत् इत्यर्थः (क्रिया)। ४२॥

वाच्यान्तरं। आश्रमं प्राप्नोषि, त्वया सः प्रसाद्यतां संक्रुपितेन त्वं न अर्प्यथाः। ४२॥

यह पगडण्डी मेरे पिता के आश्रम को जाती है, आप जाके उनको प्रसन्न करो नहीं तो वह कुपित हो आप को साप देंगे। ४२॥

(42.) This narrow path, trodden by the foot-prints of a single person will lead you to my father's hermitage ; go there and appease him lest he may curse you being angry.

**विशल्यं इति।** अन्वयः। (हे) राजन् मां विशल्यं कुरु, निशितः शरः अम्बुरयः मृदु सोत्सेधं तीरं इव मे मर्म रुणद्धि। ४३॥

व्याख्या। हे राजन्=हे भूपते (सम्बो) मां+बाणविद्धं तापसं (कर्म) विशल्यं=विगतं शल्यं यस्मात् (बहुव्री) शररहितं (कर्म-विश) कुरु (कृ-धा+लोट, २पु-१व, क्रिया) मम देहात् बाणं निःसारय इत्यर्थः, निशितः=शाणितः (कर्त्ता-विश) शरः=तव बाणः (कर्त्ता) अम्बुरयः=अम्बुनां जलानां रयः (६तत्) नदीवेगः (उपमा-कर्त्ता) मृदु=वालुकाप्रायत्वात् अदृढं (उपमा-कर्म्म-विश) सोत्सेधं=उत्सेधेन समुन्नत्या सह वर्त्तमानं (बहुव्री) उच्छ्रायवत् उन्नतं इत्यर्थः (उपमा-कर्म्म-विश) तीरं इव=तटं इव (उपमा-कर्म्म) मे=मम (सम्ब) मर्म=जीवितस्थानं (कर्म्म-मर्म्मन्-म+नपुं-२या) रुणद्धि=पीड़यति (रुध-धा+लट, १पु-१व, क्रिया) नदीवेगो यथा शिथिलं समुन्नतं कूलं भिनत्ति तथा ते बाणः अतिकोमलं मे मर्म्म छिनत्ति इति विशदार्थः। ४३॥

वाच्यान्तरं। अहं विशल्यः क्रियै, निशितेन शरेण अम्बुरयेण तीरं इव मर्म्म रुध्यते। ४३॥

हे महाराज यह बाण निकाल लो, यह तेज बाण मेरे मर्म्म को दुख देता है, जैसे कि नदी का वेग ऊंचे रेत वाले किनारे को। ४३ ॥

( 43. ) Extract Oh king ! the arrow, from the wound that gives pain to my heart ( vital organ ), as the tide breaks down the river's side, high and sandy.

सशल्य इति। अन्वयः। ( अयं ) सशल्यः प्राणैः क्लिश्यते, विशल्यः विनशिष्यति, तस्य शल्यापकर्षणे इति चिन्ता मां अविशत्। ४४ ॥

व्याख्या। अयं मुनिः (कर्म्म-१मा ) सशल्यः = शल्येन सह वर्त्तमानः ( बहुव्री ) बाणसहितः ( कर्म्म-विण ) प्राणैः=जीवनैः ( कर्त्ता-३या ) क्लिश्यते=पीड्यते अरः इमं क्लेशयति इत्यर्थः ( क्लिश-धा+कर्म्मणि-लट, क्रिया )। विशल्यः = विगतं शल्यं यस्मात् ( बहुव्री ) उद्धृतबाणः अस्य बाणे उद्धृते सति इत्यर्थः ( कर्त्ता विण ) अयं इति शेषः ( कर्त्ता ) विनशि-ष्यति = मरिष्यति ( क्रिया )। अस्य=मुनिपुत्रस्य ( सम्ब ) शल्यापकर्षणे= शल्यस्य ( ६तत् ) अपकर्षणं अपनयनं ( अप-कृष-धा+ल्युट् ) तस्मिन् बाणोद्धारविषये, ( अधि ) इति = इत्थं पूर्व्वोक्तरूपा ( अव्य ) चिन्ता ( कर्त्ता ) मां=दशरथं ( कर्म्म ) अविशत्=प्रविष्टवती ( विश-धा+लङ, क्रिया )। ४४ ॥

वाच्यान्तरं। सशल्यं इमं प्राणाः क्लेशयन्ति, विशल्येन विनशिष्यते, इति चिन्तया अहं अविश्ये। ४४ ॥

उस के बाण निकालने में मुझे यह चिन्ता हुई कि, बाण निकालुं तो यह मरता है और न निकालुं तो इसे दुख होता है। ४४ ॥

( 44. ) As I thought of drawing out the arrow it struck me that while the arrow yet remained pierced, in his heart, it tortured him but to draw it forth he is sure to die.

दुःखितस्य इति। अन्वयः। तदा स मुनिसुतः ऋषिः दुःखितस्य दीनस्य च शोकातुरस्य च मम चिन्तां लक्षयामास। ४५ ॥

व्याख्या। तदा तस्मिन् समये (अधि, अव्य) सः (सर्व्व-कर्त्ता+विण) मुनिसुतः=मुनेः (६तत्) सुतः पुत्रः (कर्त्ता+विण)। ऋषिः=पुण्यवतः औरसात् जातः स्वयं अपि पुण्यवान् इत्यर्थः (कर्त्ता) दुःखितस्य सञ्जातदुःखस्य (सम्बो) दीनस्य=भीतस्य (सम्ब, दीना स्त्री मूषिकस्त्रियां, वाच्यवत् दुर्गते भीते इति मेदिनी) शोकातुरस्य=शोकेन आतुरः (३तत्) तस्य अन्धमुनिपुत्रवधेन दुःखेन पीड़ितस्य (सर्व्व-विण) दुःखं क्लेशः। दैन्यं भयजनितदुःखं, शोकः इष्टादिविनाशजनितं दुःखं इत्यनयोः प्रभेदः) मम (सम्ब) चिन्तां (कर्म्म) लक्षयामास=एवं चिन्ताकुलं मां ज्ञातवान् इति भावः। (लक्षि-धा+लिट्। क्रिया)। ४५॥

वाच्यान्तरं। तेन मुनिसुतेन ऋषिणा चिन्ता लक्षयामासे। ४५॥

मैं दुखित दीन और शोकातुर हो रहा था, और मुनि के पुत्र ऋषि ने मेरी इस चिन्ता को समझा। ४५॥

(45,) The hermit's son perceived my thoughts that then passed within me as I stood, helpless, distressed, and sorely-grieved.

**ताम्यमानं इति।** अन्वयः। सीदमानः विव्रताङ्गः अचेष्टमानः क्षयं गतः परमार्थवित् सः ताम्यमानं मां कृच्छ्रात् उवाच। ४६॥

व्याख्या। सीदमानः=सीदन् अवसन्नशरीरः (सद-धा+शानच् आर्षः परस्मैपदित्वात्) विव्रताङ्गः=विव्रत्तं अङ्गं यस्य (बहुव्री) सः परावृत्तनेत्रः (कर्त्ता-विण) अचेष्टमानः=हस्तपदादिचेष्टारहितः (कर्त्ता-विण) क्षयं (कर्म्म) गतः=प्राप्तः क्षीयमाणशक्तिः इत्यर्थः (कर्त्तरि क्त, कर्त्ता-विण) परमार्थवित्=परमार्थं शास्त्रतत्त्वं वेत्ति यः (विद-धा+क्विप्) सः कर्त्ता विण) सः=मुनिपुत्रः (कर्त्ता) ताम्यमानं=ताम्यन्तं किंकर्त्तव्यविमूढ़तया क्लिश्यमानं (कर्म्म-विण आत्मनेपदमार्षं) मां (कर्म्म)

कृच्छ्रात्=कष्टं भवमन्वय ( ल्यब्लोपे ५मी ) उवाच कथयामास ( ब्रू-था+लिट् क्रिया ) । ४६ ॥

वाच्यान्तरं। सीदमानेन विहताङ्गेन भचेष्टमानेन गतेन परमार्थ-विदा तेन ताम्यमानः भहं ऊचे । ४२ ॥

मुझे क्या करना चाहिए में कुछ ठहरा नहीं सका था, और वह भी भवसन्न हो गया था उस की आँखें पलट गई थी, चेष्टा जाती रही थी, क्षीण हो गया था और उस परमार्थवित् मुनिपुत्र ने मुझे मुश्किल से कहा । ४६ ॥

( 49 ) He, a great knower of spiritual truth, overcome by direst pain with writhing limbs and struggling breath and pained nearer unto death, spoke with difficulty to me, distressed in mind.

**संस्तभ्य इति ।** अन्वयः । अहं धैर्य्येण शोकं संस्तभ्य स्थिर-चित्तः भवामि । ( त्वया ) ब्रह्महत्याकृतं पापं हृदयात् अपनीयतां ।४७॥

व्याख्या। अहं ( कर्त्ता ) धैर्य्येण धीरस्य भावः ( धीर श+ष्यञ ) तेन स्थैर्य्येण ( करण ) शोकं दुःखं शल्यवेधजनितं कष्टं ( कर्म्म ) संस्तभ्य =स्तम्भयित्वा शोकभारं लघयित्वा इत्यर्थः ( सम्, स्तम्भ-धा+ल्यप् ) स्थिरचित्तः=स्थिरं चित्तं यस्य ( बहुव्री ) सः अव्याकुलचित्तः ( कर्त्ता-विश ) भवामि=अस्मि (क्रिया) मम चित्ते मोहो नास्ति अतः यत् वदामि तत् शृणु इत्यर्थः । त्वया इति शेषः ( कर्त्ता ) ब्रह्महत्याकृतं=ब्राह्मणः ब्राह्मणस्य ( ६तत् ) हत्या वधः तेन ( ३तत् ) कृतं ब्रह्महत्याजनितं इत्यर्थः ( कर्म्म-विश) पापं ( कर्म्म १मा ) हृदयात्=अन्तःकरणात् ( अपा-५मी ) अपनीयतां=परित्यज्यतां निःशङ्कं हृदयाद्बाणमपकृष्यतां ब्रह्महत्याजनितपापभयं मा कुरु इत्यर्थः । ४७ ॥

वाच्यान्तरं । मया स्थिरचित्तेन भूयते । पापं अपनय । ४७ ॥

मैं धैर्य्य से शोक को सह के स्थिर चित्त होता हूं। आप यह चिन्ता हृदय से दूर करो कि, ब्रह्महत्या को है। ४७॥

(47.) Conquering the pain with fortitude I will remain firm : drive away now the fear of sin from your heart of killing a Brahmin.

**न द्विजातिः इति।** (हे) राजन्, अहं द्विजातिः न, ते मनसः व्यथा मा भूत्। (हे) नरवराधिप (अहं) शूद्रायां वैश्येन जातः अस्मि। ४८॥

व्याख्या। राजन्=हे भूपते (सम्बो) अहं (प्रातिपदिकार्थे·१मा) द्विजातिः=द्वे जाती यस्य (बहुव्री) जन्मना जायते शूद्रः संस्कारात् द्विजः उच्यते इति अत्रिस्मृतेः) यः ब्राह्मणः क्षत्रियः वैश्यः वा इत्यर्थः (१मा-विण) न (प्रतिषेधे अव्य) ते=तव (सम्ब) मनसः=अन्तःकरणस्य (सम्ब) व्यथा=कष्टं (कर्त्ता) मा भूत्=न भवतु (भू-धा+लुङ्, मा योगे अड़ागमनिषेधः) अतः ब्रह्महत्याजनितपापात् मा भैषी इत्यर्थः। हे नरवराधिप=नरेषु (७तत्) वराः श्रेष्ठाः तेषां (६तत्) अधिपः तत्सम्बुद्धौ हे नरपते (सम्बो) अहं इति शेषः (कर्त्ता) शूद्रायां=शूद्रजातीयायां स्त्रियां (अधि) वैश्येन=पुरुषेण (हेतौ·३या ननु जातः इत्यनेन सह सम्बन्धः पञ्चमी प्रसक्तेः) जातः=सम्भूतः करणजातीय इत्यर्थः (जन-धा+कर्त्तरि-क्त) शूद्राविशोस्तु करणः इत्यमरः) अस्मि। ४८॥

वाच्यान्तरं। व्यथया मा भावि। जातेन भूयते। ४८॥

मैं द्विज नहीं हूं हे राजा आप के मन में दुख नहो। मैं शूद्रा के गर्भ में वैश्य से पैदा हुआ हूं ४८

(48.) Let not this pang, oh king! wring thy bosom, for I am no twice-born youth. I came of a Vaishya sire and a Sudra mother.

दृतीव दृति । अन्वयः । कृच्छ्रात् इतीव वदतः बाणाभिहतमर्म्मणः भूतले विघूर्णतः विचेष्टस्य वेपमानस्य आताम्यमानस्य तस्य तु तं बाणं अहं उद्धरम् । सः तपोधनः मां उद्वीक्ष्य संत्रस्तः ( सन् ) प्राणान् जह्नौ । ४९ ५० ॥

व्याख्या । कृच्छ्रात्=कष्टात् ( ल्यवलोपे-५मी ) इतीव=इत्थं (अव्य) वदतः=कथयतः ( वद्-धा शतृ, ६ष्ठी विभ ) बाणाभिहतमर्म्मणः=बाणेन शरेण ( ३तत् ) अभिहतं ( हन्+क्त) मर्म्म यस्य ( बहुव्री ) तस्य ( सम्ब-विण ) भूतले=भूमौ ( आधि ) विघूर्णतः ( वि-घूर्ण-धा+शतृ । सम्ब विण ) विचेष्टस्य=हस्तपदादिचेष्टाशून्यस्य ( सम्ब-विण ) वेपमानस्य=कम्पमानस्य ( वेप-धा+शानच, ( सम्ब-विण ) । आताम्यमानस्य=ताम्यतः ( शानच् आर्षः ) क्लिश्यतः ( सम्ब-विण ) तस्य मुनिपुत्रस्य ( सम्ब ) तं=मर्म्मचिद्धं ( षष्ठ-कर्म्म-विण ) शरं ( कर्म्म ) अहं ( कर्त्ता ) उद्धरम्=उदहरम् उत्तोलितवान् ( उत्-हृ-धा+लङ्-उपु १व, क्रिया अडाभावः आर्षः ) । सः ( सर्व्व-कर्त्ता-विण ) तपोधनः=तपः एव धनं यस्य ( बहुव्री ) मुनिपुत्रः ( कर्त्ता ) मां ( कर्म्म ) उद्वीक्ष्य=अवलोक्य प्राणहरत्वात् इति भावः ( उत्-वि-ईक्ष-धा=ल्यप्०) सन्त्रस्तः व्यथाव्याकुलः सन् ( सम-त्रस्-धा+क्त, कर्त्ता विण ) प्राणान्=जीवितं ( कर्म्म ) जह्नौ=तत्याज । ४९।५० ॥

वाच्यान्तरं । सः बाणः मया उदक्रियत । तेन तपोधनेन सन्त्रस्तेन प्राणाः जहिरे । ४९ ५० ॥

यह बातें उस ने बहुत क्लेश से कहा उस के मर्म्म में बाण की चोट लगी थी, उस का शरीर घुम रहा था, वह अचेत हो भुमि पर कांपता था, अवसन्न होता जाता था, मैं ने उस का बाण निकाल लिया उस ऋषि ने मुझे देख कर के प्राण छोड़ दिया । ४९-५० ॥

(49-50.) Tortured in the heart by the shaft, he could scarcely utter these words, and twisting his body round, fell to the ground senseless. Then I drew forth the shaft from the distressed sage who looking at me being troubled with pain breathed his last.

जलार्द्रगात्रं इति। अन्वयः। हे भद्रे ततः कृच्छ्रात् मर्म्म व्रणं विलप्य संततं उच्छ्वसन्तं सरय्वां शयानं जलार्द्रगात्रं तं समीक्ष्य अहं सुभृशं विषणः (अभवम्)। ५१॥

व्याख्या। भद्रे—हे सौम्ये कौशल्ये (सम्ब) ततः=वाणोत्तोलनानन्तरं (तद-५मी+तस्, अव्य) कृच्छ्रं=कष्टं प्राप्तं (कर्म्म-विण) मर्म्मव्रणं=मर्म्मणि व्रणं क्षतं यस्य (वहुव्री तं मर्म्मक्षतं (कर्म्म-विण) विलप्य अन्धौ पितरौ संस्मृत्य रुदित्वा संततं हस्तपादादि प्रसार्य्य लम्बतया पतितं उच्छ्वसन्तं प्राणान् त्यजन्तं (उत+श्वस-शतृ) सरय्वां=तन्नामिकायां नद्याम् (अधि) शयानं (शी-धा+शानच्, कर्म्म विण) अतएव जलेन (३तत्) आर्द्रं गात्रं यस्य (वहुव्री) तं जले पतनात् जलाभिसुतदेहं इत्यर्थः (कर्म्म-विण) तं मुनिपुत्रं (सम्ब, समीक्ष्य इत्यस्य-कर्म्मश्या) समीक्ष्य दृष्ट्वा (सम-ईक्ष-धा+ल्यप्, अव्य) अहं दशरथः (कर्त्ता) सुभृशं—अत्यन्तं विषणः इत्यस्य विण विषणः विषादं प्राप्तः दुःखितः इत्यर्थः (वि सद धा+क्त) कर्त्ता-विण) अभवम् इति शेषः अत्र प्रथमतृतीयचतुर्थपादेषु उपेन्द्रवज्रावृत्तं द्वितीयपादे इन्द्रवज्रा तदुक्तं छन्दोमञ्जर्य्यां स्यादिन्द्रवज्रा यदि तौजगौगः। उपेन्द्रवज्रा प्रथमे लघौ सा। ५१॥

पाठान्तरं। मया विषर्ण न अभूयत। ५१॥

हे भद्रे उस का देह पानी से आर्द्र और मर्म्म में घाव हो गया था, वह रो के लेटा हुआ प्राण छोड़ रहा था। तब मैं उसे सरयु में पड़े हुए देख बड़ा दुःखी हुआ। ५१॥

(51.) Seeing him then, Oh good lady ! lying on the bank of the Sarayu, lamenting with a heavy breath, wounded in the heart, his body wet with water and his life ebbing away fastly, I became exceedingly sorrwful.

**वधं इति ।** अन्वयः । धर्म्मात्मा राघवः तस्य महर्षेः अप्रतिरूपं वधं तु (स्मृत्वा) विलपन्-एव कौशल्यां इदं अब्रवीत् । ५२ ॥

व्याख्या । धर्म्मात्मा=धर्म्मे आत्मा यस्य (बहुव्री) धार्म्मिकः (कर्त्तृविश) राघवः=रघोः अपत्यं पुमान् (रघु-श+अण) रघुवंशोद्भवः दशरथः (कर्त्ता) तस्य=अन्धमुनिपुत्रस्य (सर्व्व-६ष्ठी-विश) महर्षेः= महान् चासौ ऋषिः चेति (कर्म्म-धा) तस्य मुनेः (वधं इत्यस्य कर्म्म-६ष्ठी) नप्रतिरूपं साद्दश्यं यस्य (बहुव्री) तं असद्दशं (कर्म्म विश) वधं= हत्यां (कर्म्म) स्मृत्वा इति शेषः तु (पादपूरणे-अव्य) विलपन् एव= विलापं कुर्व्वन् दुःखं प्रकाशयन् एव इत्यर्थः (वि-लप-धा=शतृ, १मा-१व, कर्त्तृ-विश) कौशल्यां=राममातरं (कर्म्म) इदं=वक्ष्यमाणं वचः (कर्म्म) अब्रवीत्=अवदत् (ब्रू-धा+लङ, क्रिया) ब्रूधातोः द्विकर्म्मकत्वं । ५२ ॥

वाच्यान्तरं । धर्म्मात्मना राघवेण विलपता कौशल्या इदं प्रोच्यत ।५२॥

रघवंशी धर्म्मात्मा दशरथ ने महर्षि की उस अनोखि मौत को स्मरन कर विलाप करते करते कौशल्या से कहा । ५२ ॥

(52) The son of Raghu, the virtuous Dasaratha lamenting for his son thus far discribed the death of the sage to kausalya.

**तत् इति ।** अन्वयः । अज्ञानात् तत् महत् पापं कृत्वा सङ्कुलितेन्द्रियः (सन्) कथं नु सुकृतं भवेत् (इति) बुद्धया एकः तु अचिन्तयम् । ५३ ॥

व्याख्या। अज्ञानात्=अबोधात् हेतौ: अविदित्वा इत्यर्थ: (हेतौ-५मी) तत्=मुनिपुत्रवधरूपं (सर्व्व कर्म्म विश) महत् (कर्म्म-विश) पापं=दुष्कृतं (कृत्वा इत्यस्य-कर्म्म) (असमा) संकुलितेन्द्रिय:=संकुलितानि इन्द्रियाणि यस्य (बहुव्री) स: संकुलितेन्द्रिय: सन् (कर्त्ता-विश) कथं न (वितर्कें अव्य) सुकृतं=शोभनं कार्य्यं (भवेत् इत्यस्य कर्त्ता) भवेत् (क्रिया) इतस्य मुनिपुत्रस्य तत् पितरौ प्रति नयनं उपेक्षणं वा उत्तमं कार्य्यं इति भाव: इति बुद्ध्या=मनसा आत्मना इत्यर्थ: (करण) एक: तु=असहाय: परामर्शदातृरहित: तु इत्यर्थ: (कर्त्ता,विश) अचिन्तयम्=चिन्तितवान् (चिन्ति-धा+लङ्-उपु-१व, क्रिया) अहं इति शेष: (क्रिया)। ५३ ॥

वाच्यान्तरं। संकुलितेन्द्रियेण सता कथं नु सुकृतेन भूयते एकेन अचिन्त्यत। ५३ ॥

मैं अज्ञान से यह महा पाप कर व्याकुलेन्द्रिय हो इकला सोच ने लगा कि अब क्या करूं तो भला हो। ५३ ॥

(53.) Perplexed with the remorseful thought of the sin I had committed unconsciously, I pondered alone in my mind how the wrong might be remedied ?

**तत: इति।** अन्वय:। तत: अहं परमवारिणा पूर्णं तं घटं आदाय यथाख्यातं पथं प्राप्य तं आश्रमं गत:। ५४ ॥

व्याख्या। तत: चिन्तानन्तरं (अनन्तरार्थे-५मी+तस् अव्य) अहं दशरथ: (कर्त्ता परमवारिणा=परमं वारि (कर्म्मधा) तेन उत्कृष्ट-सरयूजलेन (करण) पूर्णं (पूर-धा+क्त) मृत-मुनि कुमार-हस्तात् परिभ्रष्टं (सर्व्व-कर्म्म-विश) घटं=कलसं (कर्म्म) आदाय गृहीत्वा तत् घटं जलेन पूरयित्वा इत्यर्थ: (आ दा-धा+ल्यप) यथाख्यातपथं=यथा येन प्रकारेण आख्यात: (आ ख्या-धा+क्त) पन्था: (कर्म्मधा समासान्त: अच्।

तं मुनिकुमारोपदिष्टं मार्गं ( प्राप्य इत्यर्थः कर्म्म ) प्राप्य=लब्ध्वा आरुह्य इत्यर्थः तं मुनिकुमारकथितं ( कर्म्म विश ) आश्रमं=अन्धमुनेः निवासं ( कर्म्म ) गतः उपस्थितः ( कर्त्तरि-क्त, क्रिया ) । ५४ ॥

वाच्यान्तरं । मया आश्रमः गतः । ५४ ॥

तब मैं उस कलसा को पवित्र जल से भर के उस मुनिपुत्र की बताई हुई राह पाके आश्रम को गया । ५४ ॥

(54.) Then taking the pitcher and filling it with pure water. I went to the hermitage, taking, the path as directed.

तत इति । अन्वयः । अहं तत्र दुर्ब्बलौ अन्धौ वृद्धौ अपरिणायकौ अतएव लूनपक्षौ द्विजौ इव स्थितौ तन्निमित्ताभिः कथाभिः अपरिश्रमौ आसीनौ तां आशां उपासीनौ मत्कृते हीनौ अनाथवत् अस्य पितरौ अपश्यम् । ५५-५६ ॥

व्याख्या । अहं ( कर्त्ता ) तत्र=तस्मिन् आश्रमे ( अधि-७मी+त्रन् अव्य ) दुर्ब्बलौ=शक्तिहीनौ ( कर्म्म-विश ) अन्धौ=दृष्टिविकलौ ( कर्म्म-विश ) वृद्धौ =जराजीर्णौ ( वृध धा+क्त, कर्म्म-विश ) अपरिणायकौ=नास्ति परिणायकः नेता ( परि नी-धा+ण्वुल ) ययोः ( बहुव्री ) तौ सञ्चारयितृपुरुषान्तररहितौ अन्धत्वात् स्वयं कुत्रापि गमने अशक्तौ पुत्रमरणात् सञ्चालयनाय च न कोऽपि अस्ति इत्यर्थः (कर्म्म-विश) अतएव लूनपक्षौ= लूनौ छिन्नौ (लू धा+क्त ) पक्षौ ययोः (बहुव्री) तौ ( उपमा-कर्म्म-विश) द्विजौ इव द्विः जायते यः ( द्विः-जन-धा+डः ) सः द्विजन्मा पक्षी इत्यर्थः द्विजा पक्षिणौ च द्विजः पक्षी च ( एकशेष द्वन्द तौ इव ) द्विजः स्यात् ब्राह्मणक्षत्रे वैश्यदन्ताण्डजेषु चेति मेदिनी । (उपमा-कर्म्म) स्थितौ ( कर्म्म- तन्निमित्ताभिः=पुत्रनिमित्ताभिः ( त्वया-विश) कथाभिः कथोपकथनैः हेतुभिः आसीनौ पुत्रकथां कुर्व्वन्तौ ( हेतौ-३या ) अपरिश्रमौ अक्लान्तौ ( कर्म्म-विश ) आसीनौ उपविष्टौ ( आस-धा+शानच् ) मत्कृते=मम

दुष्कर्मनिमित्तं (अव्य) हीनौ अपि=तां आशां प्रति रहितौ अपि (हा+धा+क्त, कर्मविण) तां (कर्म-विण) आशां=पुत्रः जलं आनेष्यति इत्येवंरूपां उपासीनौ इत्यस्य कर्म) उपासीनौ=सेवमानौ=अवलम्बमानौ (उप-आस धा+शानच) अनाथवत्=अनाथौ इव रक्षकशून्यौ इव (तुल्यार्थे वति, अव्य) तस्य=मृतमुनिपुत्रस्य (सम्ब) पितरौ=माता च पिता च (एक शेष द्वन्द) तौ जननी जनकौ (कर्म-२या २व) अपश्यम्=दृष्टवान् (दृश-धा+लङ-३पु-१व, क्रिया)। ५५-५६ ॥

वाच्यान्तरं। मया पितरौ अदृश्येतां। ५५-५६ ॥

वहां मैं ने ऊंचे, दुर्बल, विन नायक, के उस के पिता माता को पंख कटे हुए पक्षी की तरह देखा कि विन परिश्रम बैठे हुए उस की बातें कर रहे है, अनाथ की तरह मन में यह आस है कि, बेटा पानी लावेगा, (पर जानते नहीं कि) मैं ने उन की आस की जड़ काट दी है। ५५-५६ ॥

(55-56.) There I saw the aged pair, the parents of the dead saint, feeble and blind, sitting side by side like birds with clipped wings, having none to guide them, and beguiling their idle hour with the talk of their returning son, cherishing still fondly the hope I have destroyed,

**शोकोपहतचित्तः इति।** अन्वयः। शोकोपहतचित्तः भयसंत्रस्तचेतनः अहं तत् आश्रमपदं गत्वा च भूयः शोकं गतः। ५७ ॥

व्याख्या। शोकोपहतचित्तः=शोकेन (३तत्) उपहतं (उप-हन्-धा+क्त, चित्तं (चित-धा+क्त) यस्य (बहुव्री) सः तौ दृष्ट्वा मे मनः शोकाकुलं अभूत् इत्यर्थः (कर्त्ता-विण) भयेन तयोः शापभयेन संत्रस्तं भीतं चेतनं ज्ञानं (चित धा+ल्युट) यस्य (बहुव्री) सः तथोक्तः (कर्त्ता-विण) अहं (कर्त्ता) तत् आश्रमपदं=अन्धमुनेः वासस्थानं (गत्वा इत्यस्य कर्म) गत्वा=प्राप्य=(क्त्वा, अव्य) भूयः=अधिकतरं

( बहु-श्र+ईयसुन, क्रिया-विश) शोकं ( शुच-धा+घञ, कर्म्म ) गतः = प्राप्तः तौ दृष्ट्वा शोको मे व्यवर्द्धत इति भावः ( कर्त्तरि क्त, क्रिया ) ।५७ ॥

वाच्यान्तरं । शोकोपहतचित्तेन भयसंत्रस्तचित्तेन मया शोकः गतः । ५७ ॥

मेरा मन शोकाकुल हुआ, और साप के डर से जो बहुत ही डर गया, मैं उस आश्रम में आके और भी शोक से व्याकुल हुआ। ५७ ॥

(57.) Getting to the hermitage with a sorrowful and terror-stricken heart I was again overcome with sorrow.

अन्वयः । मुनिः मे पदशब्दं श्रुत्वा तु वाक्यं अभाषत ( हे ) मे पुत्र किं चिरायसि क्षिप्रं पानीयं आनय । ५८ ॥

**पदशब्दं इति ।** मुनिः मे पदशब्दं = पदस्य शब्दः(६तत्) तं ( कर्म्म ) श्रुत्वा=आकर्ण्य ( श्रु-क्त्वा, अव्य ) तु ( अव्य ) वाक्यं वचनं ( वच-धा+ण्यत् । कर्म्म ) अभाषत=अब्रवीत् (भाष-धा+लङ्, क्रिया)+ हे मे=मम ( सम्ब ) पुत्र ( सम्बो ) किं=कथं ( अव्य ) चिरायसि= विलम्बसे ( चिर-श्र+क्यच्=चिराय-नाम धातु+लट, २पु १व, क्रिया । पानीयं=पीयते यत् ( पा-धा+कर्म्मणि अनीयरः ) तत् जलं ( कर्म्म ) क्षिप्रं=शीघ्रं ( क्रिया-विश) आनय ( आ-नी-धा+लोट, क्रिया) । ५८ ॥

वाच्यान्तरं । मुनिना वाक्यं अभाष्यत । किं चिरायते पानीयं आनीयताम् । ५८ ॥

मेरे पावों का शब्द सुन मुनि ने कहा, कि पुत्र देर क्यों करता है जलद पानी ला । ५८ ॥

(58.) Hearing the sound of my footsteps the sage said why were you tarrying, my son ! quickly bring the water.

**यन्निमित्तं इति ।** अन्वयः । (हे) तात त्वया यन्निमित्तं इदं कालं सलिले क्रीड़ितं । ( तेन हेतुना ) इयं ते माता उत्कण्ठिता । क्षिप्रं आश्रमं प्रविश । ५९ ॥

व्याख्या। तात = हे पुत्र ( सम्बो, पुत्रे पितरि पूज्ये च तातशब्दः प्रयुज्यते ) त्वया ( कर्त्ता-३या ) यन्निमित्तं=यत् निमित्तं कारणं यस्मिन् ( बहुव्री ) तत् येन हेतुना इत्यर्थः ( क्रिया-विश ) इमं = एतावन्तं कालं व्याप्य चिराय इत्यर्थः (अत्यन्तसंयोगे-२या) सलिले=जले (अधि) क्रीड़ितं= सन्तरणं कृतं ( क्रीड़-धा+भावे क्त, क्रिया )। तेन हेतुना इति शेषः इयं=मत्पार्श्ववर्त्तिनी ( सर्व्वं-कर्त्ता विश ) ते = तव ( सम्ब ) जननी = माता ( कर्त्ता ) उत्कण्ठिता=उद्विग्ना सशोकस्मरणवती अथवा शीघ्रं तदागमनेच्छुः इत्यर्थः ( उत्-कण्ठ-धा+क्त, कर्त्ता-विश ) अभवत् इति शेषः ( क्रिया ) क्षिप्रं=शीघ्रं ( क्रिया-विश ) आश्रमं=आवासं ( कर्म्म ) प्रविश=गृहमध्यं एहि ( प्र-विश-धा+लोट, क्रिया )। ५९ ॥

वाच्यान्तरं। त्वं क्रीड़ितवान्। अनया ते मात्रा उत्कण्ठितया अभूयत। आश्रमः प्रविश्यतां। ५९ ॥

जिस लिए तैंने सरयू के जल में क्रीड़ा की, तेरी माता उसी लिए उत्कण्ठित है, जलद कुटीमें आ जा। ५९ ॥

( 59. ). For the reason you delayed in the river in swimming, your mother was anxious for you. Now hastely enter the cottage.

**यद्यलीकं इति।** अन्वयः। (हे) पुत्र यदि ते मात्रा यदि वा मया व्यलीकं कृतं। (हे) तात तपस्विना त्वया तत् मनसि न कर्त्तव्यं। ६० ॥

व्याख्या। हे पुत्र=हे वत्स ( सम्बो ) यदि=चेत् ( अव्य ) ते= तव (सम्ब ) मात्रा=जनन्या ( कर्त्ता-विश ) यदि वा=अथवा ( अव्य ) मया=तव पित्रा ( कर्त्ता-३या ) अलीकं अप्रियं ( कर्म्म ) कृतं ( कर्म्मणि क्त, क्रिया ) तात=हे वत्स (सम्ब) तपस्विना=प्रशस्ततपोवता, तपस्विनां क्रोधो न कर्त्तव्यः किमुत पितरि मातरि च इति भावः ( कर्त्ता-विश )

त्वया ( कर्त्ता-३या ) तत्=व्यलीकं ( सर्व्व-कर्म्म-१मा ) मनसि=अन्तः-करणे ( अधि ७मी ) न कर्त्तव्यं=न विधेयं ( कर्म्मणि-तव्यत्, क्रिया ) तत् त्वया विस्मर्त्तव्यम् इत्यर्थः। ६० ॥

वाच्यान्तरं। ते माता यदि वा अहं अलीकं कृतवती कृतवान्, तपस्वी त्वं तत् न कुर्य्याः। ६० ॥

हे पुत्र तेरी माता या मैंने जो कुछ तेरा अप्रिय किया है, तू तपस्वी है, तू मन में न सोच। ६० ॥

(60) If your mother or I have ever done, my son! any thing displeasing to you, then you a hermit, need not mind that.

**त्वगतिरिति।** अन्वयः। अगतीनां (अस्माकं) त्वं तु गतिः, हीनचक्षुषां ( अस्माकं ) त्वं चक्षुः। ( त्वयि अस्माकं ) प्राणाः समासक्ताः। त्वं कथं न अभिभाषसे। ६१ ॥

व्याख्या। अगतिनां=नास्ति गतिः येषां ( बहुव्रो ) तेषां निरुपायाणां ( सम्ब-विण ) अस्माकं इति शेषः ( सम्ब ) त्वं तु=त्वं एव ( प्रातिपदिकार्थे-१मा ) गतिः=उपायः ( गम धा+क्ति, १मा विधेय-विण ) त्वां विना अस्माकं जीविकानिर्व्वाहः न स्यात् इति भावः। हीन-चक्षुषां=नेत्रशून्यानां अन्धानां अस्माकं इति शेषः त्वं ( पूर्व्व तत् १मा ) चक्षुः=नयनं (१मा-विधेय-विण) अन्धाः वयं त्वया चक्षुःकार्य्यं सम्पादयामः इत्यर्थः। त्वयि ( अधि ) अस्माकं प्राणाः ( कर्म्म ) समासक्ताः=सततं नियुक्ताः अस्माकं जीवितं तदधीनम् इत्यर्थः ( सम्-आ-सञ्ज-धा+कर्त्तरि-क्त, क्रिया ) त्वं ( कर्त्ता )। कथं=कस्मात् ( अव्य ) न अभिभाषसे=कथयसि ( अभि भाष-धा+लट, क्रिया ) वयं त्वया नोपेक्षणीया इति भावः। ६१ ॥

वाच्यान्तरं। प्राणैः समासक्तं, त्वया न अभिभाष्यं। ६१ ॥

तू अगति की गति है, हम अन्धों की आंख है, हमारे प्राण तेरे में हैं, तू क्यों नहीं बोलता। ६१ ॥

(61). You are the help of your friendless, and eye to your eyeless parents; on you depend our lives, then why do you not speak?

**मुनिं इति।** अन्वयः। सज्जमानया हीनव्यञ्जनया अव्यक्तया वाचा (वदन्तं) तं मुनिं प्रेक्ष्य भीतचित्तः इव अहं (तादृश्या एव) वाचा अब्रुवम्। ६२ ॥

व्याख्या। सज्जमानया=साकल्येन मुखात् न बहिर्गतया (सञ्ज-धा+शानच्) पुत्रपदशब्देन इव सुतः इति धिया गद्गदया इत्यर्थः (करण-विण) हीनव्यञ्जनया=व्यञ्जना अक्षराभिव्यक्ति; हीना (हा-धा+क्त) व्यञ्जना (वि-अञ्ज+युच) यस्याः (बहुव्री) तया अक्षरव्यक्तिरहिता (करण-विण) अतएव अव्यक्तया अपरिस्फुटया (व्यञ्ज-धा+क्त, करण-विण) वाचा=वाक्येन (करण) वदन्तं इति शेषः (कर्म्म-विण) तं मुनिं=(प्रेक्ष्य इत्यस्य कर्म्म) प्रेक्ष्य=दृष्ट्वा (प्र-ईक्ष-धा+ल्यप) भीतचित्तः इव=भीतं चित्तं यस्य (बहुव्री) सः इव (कर्त्ता-विण) अहं (कर्त्ता) तादृश्या एव वाचा इति शेषः सज्जमानेन हीनव्यञ्जनेन अव्यक्तेन वाक्येन इत्यर्थः (करण) अब्रुवम्=अब्रवम अकथयम् (ब्रू-धा+लङ-३पु-१व, क्रिया, आर्षः प्रयोगः। ६२ ॥

वाच्यान्तरं। भीतचित्तेन इव मया अोच्यत। ६२ ॥

मुनि को गद्गद अव्यक्त और अस्फुटाक्षर बातें करते सुन मैंने भीतचित्त हो कहा। ६२ ॥

(62.) Hearing the hermit speaking these with sobbing voice and faltering tongue, his words scarcely distinct, I thus spoke, my heart being filled with dread.

मनसः इति। अन्वयः। मनसः कर्म चेष्टाभिः अभिसंस्तभ्य वाग्बलं ( आश्रित्य ) अहं तस्मै पुत्रव्यसनजं भयं आचचक्षे। ६३॥

व्याख्या। मनसः=अन्तःकरणस्य ( सम्ब ) कर्म=कार्यं भीतिरूपं ( कर्म ) चेष्टाभिः=अभीतिसाध्यप्रयत्नैः (करण ) अभि=अभितः (अव्य ) संस्तभ्य=भीताकारं आच्छाद्य अभीतः इव इत्यर्थः (सम्-स्तन्भ्-धा+ल्यप्) वाग्बलं=वाचां (६तत् ) बलं ( कर्म ) आश्रित्य इति शेषः ( असमा ) अहं ( कर्त्ता ) तस्मै=मुनये ( क्रिया योगे-४र्थी ) पुत्रव्यसनजं=पुत्रस्य ( ६तत् ) व्यसनं विनाशः इत्यर्थः, तस्मात् जायते यत् ( जन-धा+ड ) तत् तत्पुत्रमरणोत्थं ( कर्म-विण ) भयं ( कर्म ) आचचक्षे=अवोचम् ( आ-चक्ष-धा+लिट, क्रिया, लिटि उत्तमपुरुषप्रयोगः आर्षः परोक्षत्वाभावात् )। ६३॥

वाच्यान्तरं। मया भयं आचचक्षे। ६३॥

वाक्‌बल को आश्रय करके, प्रयत्न से मन के डर को रोक मैं ने उस के पुत्रके मरणके डरकी कहा। ६३॥

( 63 ). Fortifying my faltering tongue and straining every nerve to check my fear, I let the hermit know the fearful fate of his son.

क्षत्रियः इति। अन्वयः। अहं क्षत्रियः दशरथः, महात्मनः ( भवतः ) पुत्रः न अहं, सज्जनावमतं स्वकर्मजं इदं दुःखं प्राप्तं ( मया भवता च )। ६४॥

व्याख्या। अहं ( प्रातिपदिकार्थे-१मा ) क्षत्रियः=राजा ( १मा-विण ) दशरथः ( प्रातिपदिकार्थे-१मा ) महात्मनः=महान् आत्मा यस्य ( बहुव्री ) तस्य महाशयस्य ( सम्ब-विण ) भवतः इति शेषः ( सम्ब ) पुत्रः=तनयः ( पूर्ववत्-१मा ) न अहं ( १मा-विण ) सज्जनावमतं=सन्तः ( कर्म-धा ) जनाः तैः ( ३तत् ) अवमतं ( अव-मन-धा+क्त )

साधुविगर्हितं ( कर्म्म विश ) स्वकर्म्मजं=स्वस्य ( इतत् ) कर्म्मणः जातं ( कर्म्म-विश ) इदं=उपस्थितं ( सर्व्व-कर्म्म-विश ) दुःखं ( कर्म्म-१मा ) प्राप्तं=लब्धं ( कर्म्मणि-क्त, क्रिया ) मया भवता च इति शेषः ( कर्त्ता-३या ) राजपुत्रः शब्दवेधी इति ख्यातिलाभात् मया अबुद्धिपूर्व्वकस्य कर्म्मणः इदं मुनिपुत्रहत्यारूपं फलं भवता च प्राक्तनकर्म्मणः पुत्रशोकरूपं फलं लब्धं इति भावः । ६४ ॥

वाच्यान्तरं । अहं भवान् च दुःखं प्राप्तवान् । ६४ ॥

मैं आपका पुत्र नहीं हूं मैं क्षत्रिय दशरथ हूं, यह अपने कर्म्म से ऐसा दुःख आ पड़ा, जिसे साधु का निन्दा करते हैं । ६४ ॥

( 64 ). Oh high-minded Saint, I am a Kshatriya, Dasarath by name, and not thy son. I bear a weight of sorrow, the result of my own action, which all good people hate,

**भगवन् इति ।** अन्वयः । ( हे ) भगवन् अहं चापहस्तः निपाने आगतं श्वापदं गजं वा जिघांसुः ( सन् ) किञ्चित् सरयूतीरं आगतं । ६५ ॥

व्याख्या । भगवन्=हे षड्विधैश्वर्य्यशालिन् ( सम्बो ) अहं ( कर्त्ता ) चापहस्तः=चापं धनुः हस्ते यस्य ( अधिकरण बहुव्रीः ) सः गृहीतधनुर्युक्तः ( कर्त्ता-विश ) निपाने=जलाशये ( अधि ) आगतं - जलपानार्थं उपस्थितं ( कर्म्म-विश ) श्वापदं=व्याघ्रादिकं वन्यपशुं ( जिघांसुः इत्यस्य-कर्म्म ) वा=अथवा ( अव्य ) गजं=जलपानार्थं आगतं हस्तिनं ( पूर्व्ववत् कर्म्मनोदन्तस्येति षष्ठीप्रतिषेधः ) जिघांसुः=हन्तुं इच्छुः ( हन्-धा+सन्=जिघांस-धा+उ, कर्त्ता-विश ) किञ्चित्—अनिर्द्दिष्टं ( कर्म्म-विश ) सरयूतीरं सरयूनदीतटं बहुदूरविस्तृतायाः सरयूनद्याः कस्मिंश्चित् तटप्रदेशे इत्यर्थः ( कर्म्म ) आगतः=उपस्थितः ( आ-गम-धा+कर्त्तरि-क्त, क्रिया ) । ६५ ॥

वाच्यान्तरं। मया चापहस्तेन जिघांसुना सरयूतीरं आगतं।६५॥

हे भगवन् मैं धनु हाथ में ले पानी पीने के लिए आये हुए किसी श्वापद या गज को मारने की इच्छासे सरयू के किनारे आया था। ६५॥

( 65 ). Armed with bow Oh lord ! I came to the bank of the Sarayu to hunt elephant or beasts of prey that come to that drinking place.

**ततः इति।** अन्वयः। ततः मया जले पूर्य्यतः कुम्भस्य शब्दः श्रुतः, अयं द्विपः इति मत्वा अहं ( स्थितः ) ( ततः ) मया वाणेन अभिहतः। ६६॥

व्याख्या। ततः=सरयूतीरगमनानन्तरं ( तद-श+अनन्तरार्थे-५मी+तस, अव्य ) मया=दशरथेन ( कर्त्ता-३या ) जले ( अधि ) पूर्य्यतः पूर्य्यमाणस्य ( पूर-धा+शट, ६ष्ठी-विण परस्मैपदमार्षम् ) कुम्भस्य=कलसस्य ( सम्ब ) शब्दः=रवः ( कर्म्म-१मा ) श्रुतः=आकर्णितः ( कर्म्मणि क्त, क्रिया ) अयं=शब्दहेतुः पदार्थः ( सर्व्व-१मा-विण ) द्विपः=हाभ्यां शुण्डाभ्यां पिवति यः ( पा-धा=ड ) सः हस्ती ( इतियोगे-१मा ) इति मत्वा=वुद्ध्वा ( मन-धा+क्त्वा ) अहं कर्त्ता ) स्थित इति शेषः ( कर्त्तरि-क्त, क्रिया ), ततः=अनन्तरं ( अव्य ) मया=( कर्त्ता ) वाणेन=शरेण ( करण ) अभिहतः=विनाशितः ( अभि-हन्-धा+कर्म्मणि-क्त, क्रिया )। ६६॥

वाच्यान्तरं। शब्दं श्रुतवान्, मया स्थितं, अहं अभिहतवान्। ६६॥

तब मैं ने पानीमें कलसा भरने का शब्द सुना, और यह हाथी है, समझ के वाण मारा। ६६॥

( 66. ) There I heard a sound of filling a jar with water from the river and thinking that to be of an elephant I hit an arrow there.

**गत्वा इति।** अन्वयः। ततः तस्याः तीरं गत्वा इषुणा हृदि निर्भिन्नं गतप्राणं भुवि शयानं तापसं अपश्यम्। ६७॥

व्याख्या। ततः तदनन्तरं (अव्य) तस्याः=सरय्वा नद्याः (सम्ब) तीरं=तटं (कर्म्म) गत्वा (असमा) इषुणा=वाणेन (करण) हृदि=वक्षसि (अवच्छेदे-७मी) निर्भिन्नं=विदीर्णं (निर-भिद धा+क्त) गतप्रायाः प्राणाः यस्य (बहुव्री) तं (कर्म्म-विण) भुवि=भूमौ (अधि) शयानं=पतितं (शी-धा+शानच, कर्म्म-विण) तापसं=तपः चरति यः (तपस्-अ+षण्) तं तपस्विनं तपस्विकुमारं (कर्म्म) अपश्यम्=दृष्टवान् (कर्त्तरि-लङ-२पु-१व, क्रिया)। ६७॥

वाच्यान्तरं। निर्भिन्नः गतप्राणः शयानः तापसः अदृश्यत। ६७॥

तब उसके किनारे पर जा के देखा कि एक तापस जमीन पर पड़ा हुआ है, उसकी छातीमें वान लगा है, और प्राण निकालने को हैं। ६७॥

(67). Then getting to the river's bank I saw there a hermit lying wounded on the ground, his heart pierced with the arrow and about to die.

**ततः तस्य इति।** अन्वयः। ततः मया उपेत्य परितप्यतः तस्य एव वचनात् तदा मर्म्मतः सः वाणः सहसा उद्धृतः। ६८॥

व्याख्या। ततः=तदनन्तरं (अव्य) मया (कर्त्ता-३या) उपेत्य=समीपं गत्वा (उप-आ-इ-धा+ल्यप) परितप्यतः=परितापं कुर्व्वतः (परि-तप-धा+शतृ, ६ष्ठी-विण) तस्य=तव पुत्रस्य (वचनात् (इत्यस्य-कर्त्ता-६ष्ठी) वचनात्=वाक्यात् (वच-धा+ल्युट, हेतौ-५मी) तदा=तस्मिन् समये (अधि-अव्य) मर्म्मतः=मर्म्मस्थानात् (मर्म्म-अ+५मी+तस्, अव्य) सः मत्क्षिप्तः (सर्व्व, कर्म्म-विण) वाणः=शरः (कर्म्म-१मा) उद्धृतः=उत्तोलितः (उत्-हृ-धा+कर्म्मणि-क्त, क्रिया)। ६८॥

वाच्यान्तरं। अहं तं वाणं उद्धृतवान्। ६८॥

तब मैंने परिताप करते हुए उस की वात पर उसके मर्म्मस्थान से झट उस वान को निकाल लिया। ६८॥

(68). I hastened to him and quickly drew out the arrow from the heart of the lamenting sage as he bade me to do.

**सः च इति।** अन्वयः। सः च भगवन्तौ उभौ वृद्धौ इति शोचन् विलप्य च उद्धृतेन बाणेन सहसा स्वर्गं आस्थितः। ६९॥

व्याख्या। सः च = भवत्पुत्रः (कर्त्ता) भगवन्तौ=पूज्यौ (कर्म्म-विश) उभौ=द्वौ भवान् भवत्पत्नी च इत्यर्थः वृद्धौ (इतियोगे-१मा) इति शोचन्=अन्धौ मातापितरौ अतःपरं कं शरणं गमिष्यतः इत्येवं रूपं शोकं कुर्व्वन् (शुच-धा+शतृ, कर्त्ता-विश) विलप्य च=विलापं कुर्व्वन् च (असमा) उद्धृतेन=उत्तोलितेन (उत्-हृ-धा+क्त, ३या विश) बाणेन= शरेण हेतुना (हेतौ-३या) सहसा=हठात् बाणोद्धारसमकालमेव इत्यर्थः (अव्य) स्वर्गं = देवलोकं (कर्म्म) आस्थितः = गतः ममार इत्यर्थः क्रिया)। ६९॥

वाच्यान्तरं। तेन शोचता स्वर्गः आस्थितः। ६९॥

वह उस बाण के निकाले जाने से विलाप करके आप दोनों वृद्ध के लिए शोक करता हुआ स्वर्ग को गया। ६९॥

(69). Lamenting to the last for his aged parents the hermit went to heaven as I drew out the arrow.

**अज्ञानात् इति।** अन्वयः। मया अज्ञानात् सहसा भवतः पुत्रः अभिहतः। (भवत्पुत्रे) एवं गते (सति) शेषं यत् स्यात् तत् मुनिः मे प्रसीदतु। ७०॥

व्याख्या। मया (कर्त्ता-३या) अज्ञानात् = अज्ञानात् हेतोः अज्ञात्वा इत्यर्थः (हेतौ ५मी) सहसा = हठात् (अव्य) भवतः = तव (सम्ब) पुत्रः = तनयः (कर्म्म-१मा) अभिहतः = विनाशितः (अभि-हन्-धा+कर्म्मणि-क्त क्रिया)। भवत्पुत्रे इति शेषः (भावधि-७मी) एवं ईदृशीं दशां (अव्य) गते = प्राप्ते सति मृते सति इत्यर्थः (कर्त्तरि-क्त, अभि-विश)

शेषं अवशिष्टं कर्त्तव्यं इत्यर्थः ( कर्त्ता ) यत् ( कर्त्ता-विश ) स्यात् इति शेषः क्रिया )। तत् = तदनुष्ठानाज्ञया इत्यर्थः ( अत्र ) मुनिः = भवान् ( कर्त्ता ) मे = मह्यं (क्रियायोगे ४र्थी ) प्रसीदतु = प्रसन्नः भवतु तदुद्दिश्य मां आज्ञापयतु इत्यर्थः ( प्र-सद,धा + लोट, क्रिया )। युष्मत्पालनमपि मया कर्त्तुं शक्यं इत्यभिप्रायः। ७० ॥

वाच्यान्तरं । अज्ञानात् भवतः पुत्रं अभिहतवान् अहं । ७० ॥

मैंने अज्ञानतासे आपके पुत्रको मारा है, उस के मरनेपर जो कुछ करना चाहिए, मुझे प्रसन्न हो आज्ञा करो। ७०।

(70). Thus unawares I have killed your son suddenly. He being dead, please command me what I am to do.

**सः इति ।** अन्वयः। सः तदघशंसिना मया ( उक्तं ) तत् ( क्रूरं वचः ) श्रुत्वा सः भगवान् ऋषिः तीव्रं आयासं कर्त्तुं न अशक्नोत्। ७१ ॥

व्याख्या। सः अन्धमुनिः ( कर्त्ता ) तदघशंसिना = तत् निजपुत्रवधरूपं अघं पापं शंसति वदति यः शंस-धा+तोन्) तस्य पुत्रवधं कथयता ( कर्त्ता-विश ) मया = दशरथेन ( उक्तं इत्यस्य कर्त्ता-३या ) उक्तं इति शेषः। मयोक्तमघशंसिना इति पाठे अघशंसिना = पुत्रहत्यारूपं पापं कथयता मया उक्तं कथितं इत्यर्थः। ( वच-धा+कर्म्मणि क्त, वचः इत्यस्य-विश ) तत् ( सर्व्व कर्म्म-विश ) क्रूरं = निष्ठुरं ( कर्म्म-विश ) वचः = वाक्यं ( कर्म्म ) श्रुत्वा = निशम्य ( असमा ) सः प्रसिद्धः ( कर्त्ता-विश ) भगवान् = पूज्यः ( कर्त्ता-विश ) ऋषिः = मुनिः ( कर्त्ता ) तीव्रं तीक्ष्णं ( कर्म्म विश ) आयासं = यत्नं भस्मीभावफलकं शापदानं इत्यर्थः ( कर्म्म ) कर्त्तुं ( कृ-धा+तुमुन् ) न अशक्नोत् = न शक्तवान् ( शक-धा+लङ, क्रिया )। एवं अज्ञानकृतत्वबोधनात् शेषायुःपर्य्यन्तजीवनरक्षणस्यापि कर्त्तव्यताबोधनात् च दैवात् न सहसात् अकरोत् इति भावः ७१॥

वाच्यान्तरं । तेन भगवता ऋषिणा न अशक्यत । ७१ ॥

वह भगवान् ऋषि मेरी यह पाप की कठोर बात सुन मुझे शाप नहीं दे सका । ७१ ॥

( 71 ) Hearing these cruel words of the sin committed by me the adorable sage could not curse me.

**स वाष्प इति ।** अन्वयः । वाष्पपूर्णवदनः शोकमूर्च्छितः महातेजाः सः निःश्वसन् ( सन् ) उपस्थितं कृताञ्जलिं मां उवाच । ७२ ॥

व्याख्या । वाष्पपूर्णवदनः=वाष्पेण चक्षुर्जलेन ( ३तत ) पूर्णं ( पूर-धा+क्त) वदनं मुखं यस्य ( वहुव्री ) सः पुत्रमरणं श्रुत्वा अश्रु त्यजन् ( कर्त्ता-विण ) शोकमूर्च्छितः=शोकेन ( ३तत् ) मूर्च्छितः शोकोपहत-चेतनः ( कर्त्ता-विण ) महातेजाः=महत् तेजः यस्य ( वहुव्री ) सः अति-तेजस्वी ( कर्त्ता-विण ) सः मुनिः ( सर्व्व-कर्त्ता ) निःश्वसन्=दीर्घनिश्वासं मुहुः परित्यजन् सन् ( निर्-श्वस-धा+शतृ) उपस्थितं समीपागतं (कर्त्तरि-क्त, कर्म्म-विण ) कृताञ्जलिं=कृतः अञ्जलिः येन ( वहुव्री ) तं अञ्जलिं वद्धा स्थितं इत्यर्थः ( कर्म्म-विण ) मां ( कर्म्म ) उवाच ( क्रिया ) । ७२ ॥

वाच्यान्तरं । वाष्पपूर्णवदनेन शोकमूर्च्छितेन महातेजसा तेन निःश्वसता उपस्थितः कृताञ्जलिः अहं ऊचे । ७२ ॥

उस की आखों से आंसू टपकने लगा शोक से मूर्च्छा आ गई, उसने लम्बी सांस ले, मैं हाथ जोड़ पास खड़ा था, मुझे कहा । ७२ ॥

( 72 ). With flooded eyes, and sorrow-faint the venerable saint thus spoke to me sighing as I stood with the palms of my hand joind together.

**सप्तधा इति ।** अन्वयः । तपसि तिष्ठति ब्रह्मवादिनि तादृशे मुनौ ज्ञानात् शस्त्रं विसृजतः (जनस्य ) मूर्द्धा सप्तधा भवेत् ।७३॥

व्याख्या । तपसि ( अधि ) तिष्ठति=वर्त्तमाने अतितपस्विनि इत्यर्थः

( स्था-धा+शट, ७मी-१व ) ब्रह्मवादिनि=ब्रह्मवादिसमे ( ब्रह्मचारिणि इति पाठान्तरं, अधि ) तादृशे—मत्पुत्रतुल्ये (अधि-विण) मुनौ (अधि) ज्ञानात्=बुद्धिपूर्व्वकं इत्यर्थः ( हेतौ-५मी ) शस्त्रं ( विसृजतः इत्यस्य कर्म्म ) विसृजतः=त्यजतः शस्त्राघातं कुर्व्वतः ( वि-सृज-धा+शट, सम्ब-विण ) जनस्य इति शेषः ( सम्ब ) मूर्द्धा=मस्तकं ( कर्त्ता ) सप्तधा=सप्तप्रकारेण भिन्नं ( अव्य ) भवेत् ( क्रिया )। ज्ञानकृतापराध पुत्र-कोपेनैव तत्काले तव नाशसम्भवः आसीत् इति भावः। ७३ ॥

वाच्यान्तरं। मूर्द्धा भूयत। ७३ ॥

तपस्या करनेवाले उस ब्रह्मचारी मुनिको जानके शस्त्राघात करने-वाले का सिर सात टुकड़ा हो जाता है। ७३ ॥

( 73 ). He who intentionally sends his dart against such a devotee, who spends his life in penance and religious contemplation will have his head split in seven.

**अज्ञानात् इति।** अन्वयः। यस्मात् ते अज्ञानात् इदं कृतं तेन जीवसे। ७४ ॥

व्याख्या। यस्मात्=हेतोः ( हेतौ-५मी ) ते=तव ( कृतं इत्यस्य कर्त्तां-षष्ठी ) अज्ञानात् गजबुद्ध्या इत्यर्थः, इदं=मम पुत्रस्य निधनरूपं कर्म्म ( कर्म्म-१मा ) कृतं अनुष्ठितं ( कर्म्मणि-क्त, क्रिया ) तेन=हेतुना ( हेतौ-३या) जीवसे=जीवसि (जीव-धा+लट, आत्मनेपदमार्षं ) अपराद्धं परित्यक्तं। समर्थेनापि मत्पुत्रेण अज्ञानता त्वया कृतमिति सोढ़म् इति भावः। ७४ ॥

वाच्यान्तरं। त्वं इदं कृतवान्, त्वया जीव्यते। ७४ ॥

आपने अनजान में किया है, इस लिए आप जीते हो। ७४ ॥

( 74 ). Thou livest, because thou hast done this unintentionally,

**नर इति।** अन्वयः। (हे) नृप तं देशं नौ नय, पश्चिमदर्शनं रुधिरेण अवसिक्ताङ्गं प्रकीर्णाजिनवाससं भुवि शयानं निःसंज्ञं धर्मराजवशं गतं तं पुत्रं अद्य द्रष्टुं इच्छावः इति मां अभ्यभाषत। ७५-७६॥

व्याख्या। नृप=नॄन् मनुष्यान् पाति यः (पा-धा+ड) हे भूपते (सम्बो) तं सरयूतीरस्थं (सर्व्व-कर्म्म-विश) देशं=स्थानं (कर्म्म) नौ=आवां (कर्म्म, अस्मद २या २व) नय=प्रापय (नी-धा+लोट, नी धातोः द्विकर्म्मकत्वं), पश्चिमदर्शनं पश्चिमं अन्तिमं दर्शनं यस्य (बहुव्री) तं अतःपरं दर्शनं न भविष्यति इत्यर्थः (कर्म्म-विश) रुधिरेण=रक्तेन (करण) अवसिक्ताङ्गं=अवसिक्तं आप्लुतं (अव, सिच धा+क्त) अङ्गं यस्य (बहुव्री) तं वाणक्षतस्थानात् निर्गतेन रक्तेन आर्द्रशरीरं इत्यर्थः (कर्म्म-विश) प्रकीर्णाजिनवाससं=अजिनं मृगचर्म्म (अजिनं चर्म्म कृत्तिः स्त्री इत्यमरः) तदेव वासः, प्रकीर्णं विक्षिप्तं (प्र-कॄ-धा+क्त) अजिनवासः यस्य (बहुव्री) तं संज्ञाहीनत्वात् वासं विक्षिप्य पतितं इत्यर्थः (कर्म्म-विश) भुवि=भूमौ (अधि) शयानं=पतितं (शी-धा+शानच, कर्म्म-विश) निःसंज्ञं=नास्ति संज्ञा यस्य (बहुव्री) तं चेतनाशून्यं (कर्म्म-विश) धर्म्मराजवशं=धर्म्मराजः यमः (धर्म्मराजः पितृपतिः समवर्त्ती परेतराट्, कृतान्तो यमुनाभ्राता शमनो यमराट् यमः इत्यमरः) तस्य (६तत्) वशं=अधीनतां (गतं इत्यस्य-कर्म्म) गतं=प्राप्तं मृतं (कर्त्तरि-क्त, कर्म्म-विश) तं पुत्रं (कर्म्म) अद्य=अस्मिन् समये) अधि-अव्य) द्रष्टुं=अवलोकयितुं (दर्शनं चात्र स्पर्शः) इच्छावः=अभिलषावः (इष-धा+लट, १पु-२व, क्रिया) आवां इति शेषः। इति (अव्य) मां=दशरथं (कर्म्म) अभ्यभाषत=अवदत् (अभि-भाष-धा+लङ, क्रिया) सः अन्धः मुनिः इति शेषः। ७५-७६॥

वाच्यान्तरं। नौ नीयावहै, इष्यते, अहं अभ्यभाष्यम्। ७५-७६॥

मुझे कहाकि, हे राजा हम दोनों को उस जगह ले जाओ; आज हम उस पुत्र को देखना चाहते हैं, फिर जिस का दर्शन नहीं मिलेगा, जिसके वदनसे रुधिर बहता, मृगछाला बिखर गया, और जो अचेतन जमीन पर मरा पड़ा है। ७५-७६ ॥

( 75-76.) The hermit said to me, "Oh, monarch, guide us both to that spot ( where our son lies dead ), we wish to see our son for the last time this day, his limbs distained with blood, the dress of skin, he wore, having slipped off from his limbs, his matereal body lying senseless on the bare earth and his astral body in the dŏmain of *Yama*.

अथ इति। अन्वयः। अथ अहं भृशदुःखितौ तौ तं देशं नीत्वा भार्य्यया सह तं मुनिं पुत्रं अस्पर्शयम्। ७७ ॥

व्याख्या। अथ=अनन्तरं ( अव्य ) अहं ( कर्त्ता ) भृशदुःखितौ=अत्यन्तशोकातुरौ ( कर्म्म-विण ) तौ—अन्धौ मुनिपत्नीं मुनिं च इत्यर्थः ( सर्व्वं-कर्म्म-२या-२व ) तं देशं—सरयूतटं ( कर्म्म ) नीत्वा=प्रापय्य ( नी-धा+क्त्वा, अस्य द्विकर्म्मत्वं ) भार्य्यया=भ्रियते असौ ( भृ-धा+ण्यत्, स्त्रियां आप् ) तया पत्न्या ( सहयोगे-३या ) सह=सहितः ( अव्य ) तं मुनिं ( कर्म्म ) पुत्रं=तस्य तनयं ( कर्म्म ) अस्पर्शयम्=स्पर्शितवान् मुनिं मुनिपत्नीं च पुत्रस्पर्शमकारयम् इत्यर्थः ( स्पृश-धा+णिच+लङ्, ३पु-१व, क्रिया, णिजन्तत्वात् द्विकर्म्मत्वं )। ७७ ॥

वाच्यान्तरं। मया सः मुनिः अस्पृश्यतां। ७७ ॥

तब मैं बड़े दुःखित उन दोनों को उस जगह ले जाके, भार्य्या के साथ उस मुनि को पुत्रस्पर्श करवाया। ७७ ॥

(77.) I then led the mortified parents to the spot and helped the hermit and his wife in touching the body of their son.

तौ इति । अन्वयः । तौ तपस्विनौ तं आत्मनः पुत्रं आसाद्य स्पृष्ट्वा अस्य शरीरे निपेततुः, पिता च एनं उवाच ह । ७८ ॥

व्याख्या । तौ=सा च सः च ( एकशेषद्वन्द्व ) तपस्विनौ=तपस्विनी च तपस्वी च ( पूर्ववत्द्वन्द्व ) प्रशस्ततपःसम्पन्नौ मुनिपत्नी च मुनिः च ( कर्त्ता-विश ) तं=मृतपतितं ( सर्व्व-कर्म्म-विश ), आत्मनः=स्वस्य ( सम्ब ) पुत्रं=तनयं ( कर्म्म ) आसाद्य=प्राप्य ( आ-सद-धा+णिच्+ल्यप ) स्पृष्ट्वा च स्पर्शसुखानुभवनं सम्यक् प्राप्येत्यर्थः ( असमा ) अस्य=पुत्रस्य ( सम्ब ) शरीरे=देहे तस्योपरि इत्यर्थः ( अधि ) निपेततुः ( नि-पत-धा+लिट-१पु-२व, क्रिया ) । पिता=पाति पालयति यः ( पा-धा+तृच ) सः जनकः अन्धमुनिः इत्यर्थः ( कर्त्ता ) एनं=पुत्रं ( कर्म्म-श्या, पश्चादुक्तौ इदमः एनादेशः ) उवाच=कथयामास ( वच-धा+लिट, क्रिया ) । ७८ ॥

वाच्यान्तरं । ताभ्यां तपस्विभ्यां निपेते, पित्रा अयं ऊचे । ७८ ॥

वह दोनों तपस्वी अपने पुत्र को पाके उस के शरीर पर गिर पड़े और उस के पिता ने कहा । ७७ ॥

(78.) After the wretched parents have come by their son and touched his person, the father fell by the dead boy's side and addressed him thus.

नाभिवादयसे इति । अन्वयः । अद्य मां न अभिवादयसे मां न च अभिभाषसे, भूमौ तु किं शेषे च, ( हे ) वत्स किं कुपितः असि । ७९ ॥

व्याख्या । अद्य=अधुना ( अधि-अव्य ) मां=पितरं ( सर्व्व कर्म्म ) न अभिवादयसे=पादवन्दनादिना न समानयसि ( अभि-वद-धा+णिच+लट, क्रिया ) मां ( कर्म्म ) न च अभिभाषसे=न वदसि ( अभि-भाष-धा+लिट, क्रिया ) भूमौ तु=पृथ्वीतले तु ( अधि ) किं=कथं ( अव्य )

शेषे ( शी-धा+लट, क्रिया ), वत्स=हे पुत्र ( सम्ब ) किं ( प्रश्न-अव्य ) कुपितः=क्रुद्धः जातक्रोधः इत्यर्थः ( कर्त्ता-विश ) असि=भवसि ( अस-धा+लट, २पु-१व, क्रिया ) त्वमिति शेषः ( कर्त्ता )। ७९॥

वाच्यान्तरं। अहं न अभिवाद्यै, अहं न अभिभाष्ये, किं शय्यते ( त्वया ) कुपितेन भूयते। ७९॥

वत्स आज मुझे प्रणाम क्यों नहीं करता, मुझसे बोलता क्यों नहीं, जमीनपर क्यों पड़ा है, क्या तैंने क्रोध किया है। ७९॥

(79,) Why do you not greet me, my son, this day? Have you no word to speak to me? why do you lie on the cold earth, my darling? Are you angry with me.?

**ननु इति।** अन्वयः। (हे) पुत्र, अहं ( यदि ) ते अप्रियः, ( तथापि ) धार्म्मिकीं मातरं पश्य, किं न च आलिङ्गसे (हे) सुकुमार पुत्र वचः वद। ८०॥

व्याख्या। पुत्र=हे तनय ( सम्बो ) अहं ( कर्त्ता-१मा ) ते=तव ( अप्रियः इत्यस्य-कर्त्ता-६ष्ठी ) अप्रियः=विप्रियकारी ( न-प्रि-धा+क ) भवामि इति शेषः। तथापि धार्म्मिकीं=धर्म्मिष्ठां धर्म्मकर्म्मानुष्ठानात् सा तु कथमपि अप्रिया न स्यादित्यभिप्रायः ( धर्म्म श+षिकण् स्त्रियां ङीप् कर्म्म-विश ) मातरं=तव जननीं ( कर्म्म ) पश्य=अवलोकय ( दृश-धा+लोट, क्रिया ) केनापि हेतुना यदि मयि तव असन्तोषः स्यात् तर्हि ते माता कथं अप्रिया भवेत् इति भावः, किं=कथं ( अव्य ) न च आलिङ्गसे =आलिङ्गसि परिष्वजसे ( आ-लिङ्ग-धा+लट, क्रिया, आत्मनेपदमार्षं ) मातरं इति शेषः ( कर्म्म ) सुकुमार=हे सुन्दर ( सम्बो-विश ) पुत्र= ( सम्बो ) वचः=वाक्यं ( कर्म्म-२या-१व ) वद=कथय ( क्रिया ) सर्व्वत्र त्वमिति शेषः ( कर्त्ता )। ८०॥

वाच्यान्तरं। मया अप्रियेण भूयते धार्म्मिकी माता दृश्यतां, (माता) आलिङ्ग्यते, वचः उच्यतां (त्वया)। ८०॥

मैं तेरा प्यारा नहीं हूं तो यह धर्म्मशीला माता को देख, आलिङ्गन क्यों नहीं करता है, सुकुमार पुत्र बातें कर। ८०॥

(80.) If you are offended with me, my son, why not look to your good and pious mother? Why do you not embrace me, my son? Why do you not speak any tender and affectionate word to me.?

**कस्य इति।** अन्वयः। अहं पररात्रे हृदयङ्गमं विशेषतः मधुरं अधीयानस्य कस्य वा अन्यत् शास्त्रं श्रोष्यामि। ८१॥

व्याख्या। अहं (कर्त्ता) पररात्रे=परं रात्रेः पररात्रः पूर्व्वपरावरेत्यादिना पूर्व्वकायादिवत् समासः। अहः सर्व्वैकदेशेत्यादिना समासान्तः अच्, रात्राह्नाहाः पुंसि इत्यनेन पुंलिङ्गः) तस्मिन् रात्रेः शेषे इत्यर्थः (अधि-७मी) हृदयङ्गमं=हृदयं गच्छति यत् (हृदय-गम-धा+खच्) तत्=मनोहरं यथा तथा (क्रिया-विश) विशेषतः=अन्येभ्यः वैलक्षण्येन (श्या+तस्) मधुरं=सुललितं सुमिष्टं त्वत्पाठः अधिकतरं श्रवणसुखकरः भवति इत्यर्थः (क्रिया-विश) अधीयानस्य=पठतः (अधि-इ-धा+शानच), कस्य=जनस्य वा (सम्ब) अन्यत्=वेदाद्यतिरिक्तं (कर्म्म-विश) शास्त्रं=शास्त्राध्ययनं पुराणपाठं इत्यर्थः वैश्यात् शूद्रायां जातत्वेन सङ्करत्वात् वेदादिपाठे अनधिकारात् (कर्म्म) श्रोष्यामि=आकर्णयिष्यामि (श्रु-धा+लृट, क्रिया) त्वं प्रत्यहं रात्रिशेषे पुराणं अपठिष्यः तदहं सुखेन अशृणोमि, अधुना तव मरणात् कुतः सा सुखश्रुतिः इति भावः। ८१॥

वाच्यान्तरं। मया श्रोष्यते। ८१॥

मैं अपररात्र को पुराणशास्त्र पढ़ने का किसका मधुर और मनोहर शब्द सुनूंगा। ८१॥

(81.) Who will, in the concluding part of the night, recite to me in sweet language, the *shastras* and the *purans* and thereby soothe my spirit?

**कः इति।** अन्वयः (तन्त्रमार्गेण) सन्ध्यां उपास्य एव स्नात्वा हुतहुताशनः उपासीनः (च) सन् पुत्रशोकभयार्द्दितं मां श्लाघयिष्यति। ८२॥

व्याख्या। कः=जनः (सर्व्व-कर्त्ता) अन्धमुनिपुत्रस्य वैदिक-सन्ध्यायामधिकाराभावात् "तन्त्रमार्गेण" इति यत् रामानुजेन व्याख्यातं तत् प्रमादविलसत्वात् चिन्त्यं तदानीं तन्त्रशास्त्रस्य प्रचारे प्रमाणाभावात् करणजातीनां वैदिकक्रियाकलापेषु अधिकारसद्भावात् तत्र सन्ध्या शब्देन वैदिकी सन्ध्यैव गृह्यते महर्षिणा अनेन ब्रह्मवादिहुतहुताशनादिविशेष-विशेषितत्वात्। सन्ध्यां=प्रातःसन्ध्याकालीनोपासनां (कर्म्म) उपास्य=उपास्थाय प्रातःसन्ध्यां समाप्य इत्यर्थः (उप-आस-धा+ल्यप) एव=उपासनानन्तरं अविलम्ब्य (अव्य) स्नात्वा=स्नानानन्तरं (स्नै-धा+क्त्वा) हुतहुताशनः=हुतं अश्नाति यः (अश-धा+कर्त्तरि ल्यु) सः हुताशनः अग्निः हुतः (हु-धा+क्त) हुताशनः येन (बहुव्री) सः अग्नौ हुत्वा इत्यर्थः (कर्त्ता-विण) उपासीनः=उप समीपे आसीनः उपविष्टः (आस-धा+शानच्) समीपस्थः सन् (कर्त्ता-विण) पुत्रशोकभयार्द्दितः=पुत्राय शोकः (४र्थी तत्पुरुष) पुत्रशोकः च भयं च (द्वन्द्व) ताभ्यां (इतर्) अर्द्दितः पीड़ितः कातरः इत्यर्थः तं (कर्म्म-विण) मां (कर्म्म) श्लाघयिष्यति=श्लाघनं उद्वर्त्तनं तत्पूर्व्वकं स्नापयिष्यति (श्लाघ-धा+णिच्+लृट्, क्रिया) न अस्य श्लाघमानं स्नायात् इति ब्रह्मपरिप्रकरणस्नापना-नावहतौ तथा व्याख्यानात्। पूर्व्वं अदुःखितमपि मां त्वं अस्नापयिष्यः, अधुना तु दुःखितमपि मां न कोऽपि स्नापयिष्यति इति भावः। ८२॥

वाच्यान्तरं। केन हुतहुताशनेन उपासीनेन पुत्रशोकार्द्दितः अहं श्लाघयिष्ये। ८२॥

कौन सन्ध्योपासना और होमकर पास आ बैठेगा, और पुत्रशोक-प्रपीड़ित मुझे ( स्नान कराके ) प्रसन्न करेगा । ८२ ॥

( 82.) Who will, after having bathed and fed the sacrificial fire, sit by me when the evening rites have been done, and cheer me, mourning for my son ?

कन्दमूलफलं हृत्वा इति । अन्वयः । यः कन्दमूलं फलं हृत्वा अकर्म्मण्यं अप्रग्रहं अनायकं मां प्रियं अतिथिं इव भोजयिष्यति । ८३ ॥

व्याख्या । यः=पुत्रः ( कर्त्ता ) कन्दं जलोद्भवानां पद्मादीनां, मूलं स्थलोद्भवानां, फलं च ( समाहारद्वन्द्व, कर्म्म ) हृत्वा = संगृह्य ( असमा ) अकर्म्मण्यं=कर्म्मणि साधुः कर्म्मण्यः ( कर्म्मन्-ण+यत् ) न कर्म्मण्यः कर्म्मानुष्ठाने अक्षमं ( कर्म्म-विण ) अप्रग्रहं=नास्ति प्रग्रहः सञ्चयः यस्य ( बहुव्री ) सः निवारधान्यादिरहितः तं ( कर्म्म विण ) अनायकः=नास्ति नायकः ( नी-धा+ण्वुल ) यस्य सः चालकहीनः तं (कर्म्म-विण ) अथवा अप्रग्रहं=यष्टिग्रहणपूर्व्वकमार्गप्रदर्शकरहितं अतएव अनायकं - स्नाना-दिकर्म्मप्रवर्त्तकहीनं कतकः इत्थं व्याचष्टे । मां=वृद्धं अन्धपितरं (कर्म्म) प्रियं अतिथिं इव ( उपमा-कर्म्म ) भोजयिष्यति ( क्रिया ) भोजयिष्यति अर्कर्म्मण्यं इति पाठे कर्म्मण्यं=कर्म्मणि साधुं अतिथिं इव इति अन्वयः ।८३॥

वाच्यान्तरं । येन अकर्म्मण्यः अप्रग्रहः अनायकः अहं प्रियः अतिथिः इव भोजयिष्ये । ८३ ॥

कौन प्यारे अतिथि की तरह कन्द, मूल और फल लाके देगा, मैं निकम्मा हूं, मेरे कुछ धान्यादि का संग्रह नहीं है, और मुझे कोई राह दिखनेवाला नहीं है । ८३ ॥

( 83.) Who will gather fine roots and fruits and feed like a dear guest—this wretch who is helpless, incapable of procuring his food and without a guide.

इमां इति । अन्वयः । ( हे ) पुत्र (अहं अन्धः ) अन्धां च वृद्धां च तपस्विनीं कृपणां पुत्रगर्धिनीं इमां ते मातरं कथं भरिष्यामि ।८४॥

व्याख्या । पुत्र = हे तनय ( सम्बो ) अहं अन्धः इति शेषः (कर्त्ता) अन्धां = दृष्टिहीनां ( कर्म्म-विण ) वृद्धां ( कर्म्म-विण ) तपस्विनीं=निरपराधां ( कर्म्म-विण ) कृपणां=दीनां कृपापात्रीं इत्यर्थः ( कर्म्म विण ) पुत्रगर्धिनीं=पुत्रे ( ७तत् ) गर्धिनी स्पृहावती ( गृध-धा+णिन् ) तां पुत्रवत्सलां इत्यर्थः ( कर्म्म-विण ) इमां ( सर्व्व-कर्म्म-विण ) ते = तव ( सम्ब ) मातरं = जननीं ( कर्म्म ) कथं ( अव्य ) भरिष्यामि=प्रतिपालयिष्यामि । अन्धत्वात् निजपालने अक्षमः कथं अन्यां प्रतिपालयिष्यामि इति भावः । ८ ॥

वाच्यान्तरं । ( अन्धेन ) वृद्धा तपस्विनी कृपणा पुत्रगर्धिनी इयं ते माता भरिष्यते । ८४ ॥

हे पुत्र अन्धी, वृद्धा, दीना, पुत्रप्रेमवती तपस्विनी इस तेरी माता को मैं क्यों कर पालूंगा । ८४ ॥

( 84. ) How can I find subsistence for thy poor mother who is old and blind and sustain the piteous woman who ceaselessly mourns for her son ?

तिष्ठ इति । अन्वयः । ( हे ) पुत्र तिष्ठ यमस्य सदनं प्रति मा मा गमः अथवा मा ( उद्दिश्य ) तिष्ठ, मा गमः, मया जनन्या च सह समेधितः श्वः गन्तासि । ८५ ॥

व्याख्या । हे पुत्र ( सम्ब ) तिष्ट=विरम ( स्था-धा+लोट्, क्रिया ) यमस्य=अन्तकस्य ( सम्ब ) सदनं प्रति=गृहं प्रति ( प्रतियोगे-२या ) मा मा=नहि नहि ( अव्य, अवाधे द्विर्वचनं ) गमः=न गच्छ लुङ् च ) अथवा मा=मां उद्दिश्य तिष्ठ, यमस्य सदनं मा गमः न याहि । मया=पित्रा ( सहयोगे-३या ) जनन्या=तव मात्रा ( पूर्व्ववत्-३या )

सह=सहितः (अव्य) समेधितः=सङ्गतः (सम्-एध-धा+क्त) श्वः=परदिने (अव्य) गन्तासि=गमिष्यसि (गम-धा+लुट्-२पु-१व, क्रिया) त्वया विना आवां मरिष्यावः इति भावः । ८५ ॥

वाच्यान्तरं । स्थीयतां, मा गामि, समेधितेन गन्ता । ८५ ॥

हे पुत्र यमके घर न जा. ठैर जा, मैं भी तेरी माताके साथ कल आऊंगा । ८५ ॥

(85.) Stay, my son, for my sake; do not go to the region of Pluto this day. To-morrow you will go with me accompanied by thy mother.

उभौ इति । अन्वयः । शोकार्त्तौ अनाथौ कृपणौ उभौ अपि (आवां) वने त्वया हीनौ (सन्तौ) क्षिप्रं यमक्षयं गमिष्यावः ।८६॥

व्याख्या । शोकार्त्तौ=शोकेन पुत्रमरणजनितदुःखेन ऋतौ पीड़ितौ (३तत्, ऋते च तृतीया समासे ऋकारस्य वृद्धिः,) अनाथौ=प्रतिपालकरहितौ (कर्त्ता-विण) कृपणौ=दीनौ दयापात्रौ इत्यर्थः (कर्त्ता-विण) उभौ अपि द्वौ अपि आवां इति शेषः (कर्त्ता-१मा-२व) वने=अरण्ये जनशून्यस्थाने इत्यर्थः (अधि) त्वया=पुत्रेण (हीनौ इत्यस्य कर्त्ता-३या) (हीनौ=विरहितौ सन्तौ (हा-धा+क्त) तत्सन्निधाने जनशून्यत्वेऽपि न क्षतिः अधुना कः आवां रक्षणभरणादिना जीवयिष्यति इत्यभिप्रायः (कर्त्ता-विण) क्षिप्रं=शीघ्रं (क्रिया-विण) यमक्षयं=क्षियते अस्मिन् (क्षि-धा+अधि-अल) क्षयः गृहं, यमस्य (६तत्) क्षयं (कर्म) गमिष्यावः+यास्यावः मरिष्यावः इत्यर्थः (क्रिया) । ८६ ॥

वाच्यान्तरं । शोकार्त्ताभ्यां अनाथाभ्यां कृपणाभ्यां उभाभ्यां आवाभ्यां हीनाभ्यां यमक्षयः गमिष्यते । ८६ ॥

हम दोनों इस वनमें अनाथ, दीन और शोकातुर हुए हैं तेरे बिन झट मर जायंगे । ८६ ॥

(86.) We thy poor parents, helpless and mourning for thee in this forest, would without thy assistance reach the house of Pluto with the greatest rapidity.

**अपापः इति ।** अन्वयः। (हे) पुत्र अपापः (त्वं) पापकर्म्मणा यथा निहतः असि, तेन (शुद्धः सन्) सत्येन अस्त्रयोधिनां ये लोकाः (तान्) गच्छ, यद्वा (हे) पुत्र पापेन निहतः यथा (त्वं) असि, (तथापि) तेन सत्येन अपापः (भूत्वा) अस्त्रयोधिनां इत्यादि प्राग्वत् । ८७ ॥

व्याख्या । अथ मृतस्य पुनर्लाभं अशक्यं मत्वा विश्वामित्रः त्रिशङ्कुः इव स्वमहिम्ना पुत्रं स्वर्गं प्रापयति अपापः इत्यादि । हे पुत्र (सम्बो) अपापः=पापरहितः (कर्त्ता-विश) त्वं इति शेषः (कर्त्ता) पापकर्म्मणा=पापं कर्म्म यस्य (बहुव्री) तेन पापकारिणा अनेन क्षत्रियेण इत्यर्थः (निहतः इत्यस्य कर्त्ता-३या) यथा=यद्रूपं (अव्य) निहतः=विनाशितः (नि-हन-धा+कर्म्मणि क्त) असि=भवसि (अस धा+लट्-२पु-१व, क्रिया), तेन=हननेन प्रायश्चित्तरूपेण शुद्धः सन् इति शेषः, सत्येन=* मदीयपुण्येन (करण) यद्वा तेन पुण्येन=अपापत्वरूपेण (करण) अस्त्रयोधिनां=अस्त्रेण युद्ध्यन्ते ये (युध-धा+णिन्) तेषां संग्रामे अपराङ्-मुखानां मृतानां शूराणां (सम्ब) ये लोकाः=स्थानानि स्वर्गं इत्यर्थः (प्रातिपदिकार्थे-१मा, द्वावेव पुरुषौ लोके सूर्य्यमण्डलभेदिनौ । परिव्राट् योगयुक्तश्च रणे चाभिमुखे हतः ) तान् लोकान् इति शेषः (कर्म्म) गच्छ=याहि (क्रिया) अथवा हे पुत्र पापेन कर्म्मणा शस्त्रवधलक्षणेन (करण) निहतः=विनाशितः यथा=यद्यपि त्वं असि=भवसि तथापि तेन=मदीयेन सत्येन (करण) अपापः=पापरहितः भूत्वा अस्त्रयोधिनां लोकान् गच्छ । ८७ ॥

पाठान्तरं । अपापेन त्वया निहतेन भूयते, गम्यतां । ८७ ॥

हे पुत्र तू अपाप है, और तुझे पाप कर्माने मारा है, इस सत्यसे तू उस लोक को जल्द जा जहां अस्त्रयोधा लोग जाते हैं । ८७ ॥

(87.) As you, my son, were free from sin and were slain by a foul hand, so win on that account, the sphere appropriated to those that die fighting boldly in battle.

यां इति । अन्वयः । संग्रामेषु अभिमुखाः अनिवर्त्तिनः शूराः हताः सन्तः यां हि गतिं यान्ति । (हे) पुत्र तां परमां गतिं व्रज ।८८॥

व्याख्या । उक्तं एव अर्थं पुनः आह यां इति । संग्रामेषु=युद्धेषु (अधि) अभिमुखाः=अग्रसराः (कर्त्तृ-विश) अनिवर्त्तिनः=न निवर्त्तन्ते ये (न-नि-वृत धा+णिन्) ते न प्रत्यागताः प्राणभयात् न पलायनपराः इत्यर्थः (कर्त्तृ-विश) शूराः=वीरपुरुषाः (कर्त्ता) हताः=विनष्टाः संग्रामेषु स्वदेशरक्षार्थं स्वधर्मरक्षार्थं च मृताः सन्तः इत्यर्थः (कर्त्तृ-विश) यां हि गतिं=पन्थानं स्वर्गमित्यर्थः (कर्म) यान्ति=लभन्ते (या-धा+लट्, क्रिया) हे पुत्र (सम्बो) तां परमां=उत्कृष्टां (कर्म-विश) गतिं (कर्म) व्रज=गच्छ लभस्व इत्यर्थः (व्रज-धा+लोट, क्रिया, गोब्राह्मणनृपतिमित्रधनदारजीवितरक्षणात् ये हतास्ते स्वर्गभाजः । वर्णसङ्कररक्षार्थे च, इति विष्णुस्मृतिः । ८८ ॥

वाच्यान्तरं । अभिमुखैः अनिवर्त्तिभिः शूरैः हतैः या गतिः यायते, सा गतिः व्रज्यतां । ८८ ॥

हे पुत्र शूरवीर संग्राम में से वेलौटे और मरके जिस गति को जाते हैं, तू उस परम गति को प्राप्त हो । ८८ ॥

(88), Attain to that blessed sphere, my son! which is appointed for the heroes that fall boldly confronting the enemy and never leaving the battle-field.

यां गतिं इति । अन्वयः । सगरः, शैब्यः, दिलीपः, जनमे-

जयः, नहुषः, धुन्धुमारः च ( एते यां गतिं प्राप्ताः, ) हे पुत्रक तां गच्छ। ८९॥

व्याख्या। सगरः=गरेण विषेण सह जातः सूर्य्यवंशोद्भवः तन्नामकः राजा ( कर्त्ता-परिचायक-विश ) शैब्यः=शिवेः गोत्रापत्यं पुमान् (शिविः अ+ष्यञ्) शिविवंशोत्पन्नः तन्नामा कश्चित् राजा ( पूर्व्ववत्-विश ) दिलीपः=सूर्य्यवंशोद्भवः तन्नामकः राजा ( कर्त्ता-विश ) जनमेजयः=जनं एजयति यः ( एज-धा+णिच्=खश ) स पुरुपुत्रः तन्नामकः राजा ( पूर्व्ववत्-विश ) नहुषः=चन्द्रवंशोद्भवः तन्नामकः राजा ( पूर्व्ववत्-विश ) धुन्धुमारः=धुन्धुं मारयति यः ( मारि धा+अण् ) सूर्य्यवंशोद्भवः तन्नामकः राजा ( पूर्व्ववत्-विश ) एते राजानः इति शेषः ( कर्त्ता ) यां=यादृशीं स्वकर्म्मोपार्ज्जितां इत्यर्थः ( सर्व्व-कर्म्म विश ) गतिं=पश्चात् स्वर्गं इत्यर्थः ( कर्म्म ) प्राप्ताः=लब्धाः ( कर्त्तरि-क्त, क्रिया ) पुत्रक=हे अल्पवयस्क पुत्र ( सम्बो, ह्रस्वार्थे-कः ) तां गतिं स्वर्गं ( कर्म्म ) गच्छ=प्राप्नुहि ( क्रिया) एते राजानः अश्वमेधादिकं इष्ट्वा तत्फलेन यथा स्वर्गं लेभिरे, तथा त्वमपि पितृशुश्रुषाफलेन स्वर्गं गच्छ इत्यर्थः। ८९॥

वाच्यान्तरं। सगरेण, शैब्येन, दिलीपेन, जनमेजयेन, नहुषेण, धुन्धुमारेण या गतिः प्राप्ता, सा गम्यतां। ८९॥

सगर, शैब्य, दिलीप, जनमेजय, नहुष और धुन्धुमार ने जिस गति कोपाई है, हे पुत्र तूभी उसी गतिको प्राप्त हो। ८९॥

(89). Attain to that sphere in heaven my son, which is now claimed by Sagar, Dilipa, Janamejaya, Nahush, Dhundhumara, all mighty heroes of the old.

**या गतिः इति।** अन्वयः। सर्व्वभूतानां स्वाध्यायात् या गतिः तपसः च या ( गतिः ), भूमिदस्य ( च ), आहिताग्नेः, एकपत्नीव्रतस्य च, गोसहस्रप्रदातृणां च, गुरुसेवाभृतां अपिच, देहन्यासकृतां च या ( गतिः ), ( हे ) पुत्रक तां गतिं गच्छ। ९०-९१॥

व्याख्या । सर्व्वभूतानां=सर्व्वे भूताः प्राणिनः ( कर्म्म-धा ) तेषां स्वाध्यायवतां जनानां ( गतिः इत्यस्य कर्त्ता-६ष्ठी ) स्वाध्यायात्=स्वाध्यायः अध्ययनः वेदाध्ययनं ( स्व-अधि-इ-धा+घञ ) तस्मात् ( अपा ) या गतिः ( कर्त्ता ) भवति इति शेषः ( क्रिया ), तपसः—तपश्चरणात् ( अपा ) या गतिः, भूमिदस्य= भूमिं महीं ददाति यः ( दा-धा+ड ) तस्य=भूमिप्रदातुः ( कर्त्ता-६ष्ठी ), या गतिः, आहिताग्नेः=आहितः ( आ-धा-धा+क्त ) अग्निः येन ( बहुव्री ) तस्य साग्निकस्य द्विजस्य ( कर्त्ता-६ष्ठी ) या गतिः, एकपत्नीव्रतस्य=एका पत्नी ( कर्म्म-धा ) तस्यां व्रतं यस्य ( बहुव्री) तस्य एकैव मे पत्नी स्थास्यति नान्यां करिष्यामि रामादिवत् इत्येवं सङ्कल्पव्रतं कृतवतः जनस्य ( कर्त्ता-६ष्ठी ) या गतिः, गोसहस्रप्रदातॄणां च=गवां सहस्रं ( ६तत् ) तस्य प्रदातारः ( ६तत्, प्र-दा-धा+तृच ) तेषां ( कर्त्ता-६ष्ठी ) गुरुसेवाभृतां=गुरोः सेवा ( ६तत् ) तां बिभ्रति ये ( भृ-धा+क्विप् ) तेषां गुरुसेवाकर्त्तॄणां ( कर्त्ता-विष ) या गतिः देहन्यासकृतां=देहस्य ( ६तत् ) न्यासः त्यागः तं कुर्व्वन्ति ये ( कृ-धा+क्विप् ) तेषां महाप्रस्थानादिना परलोकार्थं तनुत्यजां ( कर्त्ता विष) या गतिः, हे पुत्रक तां गतिं गच्छ—प्राप्नुहि क्रिया । ९०-९१ ॥

वाच्यान्तरं । यया गत्वा भूयते, सा गतिः गम्यतां । ९०-९१ ॥

वेदाध्ययन और तपस्यासे सब प्राणियों की जो गति होती है, भूमि दान करनेवाले, सग्निक ब्राह्मण और एक पत्नीव्रत धारण करनेवालों, हजारी गोदान करनवालों, गुरुसेवा करनेवालों और परलोक में जाने के लिए शरीर त्याग करनेवालों की जो गति होती है, हे पुत्र तेरी भी वही गति हो । ९०-९१ ॥

(90-91). Attain to the heaven my son, the sphere, earned by men by practising fervent rites—by the study of Vedas—by making gift of land—by keeping up sacrificial fire—by a vow of taking only one wife—by those that make

a gift of thousand cows—by them that serve their spiritual preceptor well—as well as by those that cast away their material body in order to go to the other world.

नहि इति। अन्वयः। अस्मिन् कुले जातः तु अकुशलां गतिं नहि गच्छति, सः तु अकुशलां गतिं यास्यति, येन मम बान्धवः त्वं निहतः। ९२॥

व्याख्या। अस्मिन् (सर्व्व-अधि-विण) कुले=मदीये वंशे नित्य-तपस्विकुले इत्यर्थः (अधि) जातः तु=कृतजन्मपरिग्रहः (जन-धा+कर्त्तरि-क्त) कश्चित् जनः (कर्त्ता) अकुशलां=अभद्रां (कर्म्म-विण) गतिं=पन्थानं (गम-धा+क्तिन्) नरकं इत्यर्थः (कर्म्म) न निषेध-अव्य) हि (निश्चये-अव्य) गच्छति—न लभते (क्रिया) सः=जनः (कर्त्ता) अकुशलां गतिं इति शेषः (कर्म्म) यास्यति=प्राप्स्यति (या-धा+लृट्, क्रिया) येन=जनेन (सर्व्व-कर्त्ता-३या) मम=अन्धस्य वृद्धस्य (सम्ब) बान्धवः=बध्नाति स्नेहेन इति बन्धुः (बन्ध-धा+उ) बन्धुः एव बान्धवः=(स्वार्थे-अण्) आत्मीयः मम पुत्रः इत्यर्थः (कर्म्म-विण) त्वं (कर्म्म-१मा) निहतः—विनाशितः (नि-हन्-धा+कर्म्मणि-क्त, क्रिया)। ९२॥

वाच्यान्तरं। जातेन अकुशला गतिः न गम्यते, तेन यास्यते, यः बान्धवं त्वां निहतवान्। ९२ (

इस वंश में पैदा होके कोई बुरी गति को नहीं पाता है, वह बुरी गतिको प्राप्त होगा, जिसने मेरे पुत्र तुझे मारा है। ९२॥

(92). None of this race will ever be in a state of bitterness, in the next world but he, by whom you my beloved son, have been slain, is doomed to that bitter fate,

एवं इति। अन्वयः। तत्र सः एवं असकृत् कृपणं पर्य्यदेवत, तथा उक्ता भार्य्यया सह उदकं कर्त्तुं प्रवृत्तः। ९३॥

व्याख्या। अन्वः मुनिः ( सर्व्व-कर्त्ता ) एवं = इत्थं पूर्व्वोक्तं इत्यर्थः ( अव्य ) असकृत् पुनः पुनः ( अव्य ) कृपणं=करुणं यथातथा ( क्रिया-विश ) पर्य्यदेवयत=विलपति स्म ( परि-दिव धा+णिच् + लङ, क्रिया ) तथा=तादृशं ( अव्य ) उक्त्वा=कथयित्वा ( वच-धा+क्त्वा ) भार्य्यया सह=स्त्रिया सह ( सहयोगे-३या ) उदकं=उदकक्रियां तर्पणं ( कर्म्म ) कर्त्तुं प्रवृत्तः=उद्यतः ( प्र-वृत-धा+कर्त्तरि-क्त, क्रिया )। ९३ ॥

वाच्यान्तरं। तेन पर्य्यदेव्यत, प्रवृत्तं। ९३ ॥

वहां उसने इस ढवसे वारवार विलाप किया ; यह कहके भार्य्या के साथ तर्पण करने में प्रवृत्त हुआ। ९३ ॥

(93). After having petiously mourned several times in this way the sage with his wife began to offer funeral water to the dead.

**सः इति।** अन्वयः। अथ सः महातेजाः तापसः भार्य्यया सह तूर्णं उदकं कृत्वा उपस्थितं कृताञ्जलिं मां उवाच। ९४ ॥

व्याख्या। अथ=अनन्तरं ( अव्य ) सः ( सर्व्व-कर्त्ता विश ) महा-तेजाः=महत् तेजः यस्य ( वहुव्री ) सः अतितेजस्वी ( कर्त्ता-विश, तेजस् +अ पुं+१मा-१व ) तापसः=तपः चरति यः ( तपस्-अ+अण् ) सः मुनिः ( कर्त्ता ) भार्य्यया सह भ्रियते प्रतिपाल्यते असौ ( भृ धा+ण्यत्, स्त्रियां आप् ) भार्य्या स्त्री तया सह ( सहयोगे-३या ) तूर्णं=शीघ्रं ( क्रिया-विश ) उदकं=संस्कारपूर्व्वकं जलाञ्जलिं तर्पणं इत्यर्थः ( कर्म्म ) कृत्वा ( कृ-धा+क्त्वा ) उपस्थितं=उप समीपे स्थितं आगतं समीपवर्त्तिनं ( कर्त्तरि-क्त ) कृताञ्जलिं=कृतः अञ्जलिः येन ( वहुव्री ) तं अञ्जलिं बद्धा स्थितं इत्यर्थः ( कर्म्म-विश ) मां=दशरथं ( कर्म्म-२या ) उवाच=कथया-मास ( वच-धा+लिट्, क्रिया )। ९४ ॥

वाच्यान्तरं। तेन महातेजसा तापसेन उपस्थितः कृताञ्जलिः अहं ऊचे। ९४ ॥

में हाथ जोड़े वहां खड़ा था, उस घोर तेजस्वी तपस्वी ने भार्य्या के साथ झट तर्पण करके मुझे कहा । ९४ ॥

( 94 ). The mighty sage, quickly finishing the offering of water with his wife addressed me who stood there with the palms joined suppliantly,

**पुत्रव्यसनजं इति ।** अन्वयः । यत् मम एतत् पुत्रव्यसनजं दुःखं साम्प्रतं ( वर्त्तते ), ( हे ) राजन् एवं पुत्रशोकेन त्वं कालं करिष्यसि । ९५ ॥

व्याख्या । यत्=यस्मात् ( अव्य ) मम ( सम्ब ) एतत्=वर्त्तमानं (.कर्त्ता-विण ) पुत्रव्यसनजं=पुत्रस्य ( पुत् त्रै-धा+ड ) व्यसनं मरणं ( इतत्, वि-अस-धा+ल्युट ) तस्मात् जायते ( जन-धा+ड ) पुत्रमरण-निमित्तं इत्यर्थः ( कर्त्ता-विण ) दुःखं ( कर्त्ता-विण ) दुःखं ( कर्त्ता ) साम्प्रतं=अधुना मरणसमये अपि इत्यर्थः ( अव्य) वर्त्तते इति शेषः ( क्रिया ) यतः त्वन्निमित्तं दुःखं मरणपर्य्यवसायि इति भावः । राजन्=हे भूपते ( सम्ब ) एवं=इत्थं ( अव्य ) पुत्रशोकेन=पुत्रस्य (इतत्) शोकः ( शुच-धा+घञ् ) तेन ( करण ) कालं ( कर्म्म ) करिष्यसि=मृत्युं प्राप्स्यसि ( कृ धा+लृट, क्रिया, सर्व्वासु क्रियासु भूधातोः कृधातोः च अनुप्रवेशात् अत्र करणेन प्राप्तिः सूच्यते । ९५ ॥

वाच्यान्तरं । एतेन पुत्रव्यसनजेन दुःखेन ह्यते, त्वया कालः करिष्यते । ९५ ॥

मुझे जैसा अब पुत्रके मरण से दुःख हुआ है, वैसेही तूभी पुत्रके शोक से मरेगा । ९५ ॥

( 95 ). Oh monarch, since you have caused me to experience this bitterness resulting from the death of my son, so you yourself shall die mourning for your son.

अज्ञानात् इति। अन्वयः। यस्मात् क्षत्रियेण त्वया अज्ञानात् तु मुनिः हतः तस्मात् ( हे ) नराधिप ब्रह्महत्या त्वां आशु न प्रविशति। ९६॥

व्याख्या। यस्मात्=हेतोः ( हेत्वर्थे-५मी ) क्षत्रियेण=क्षत्रियजातौ उत्पन्नेन ( कर्त्ता-विण ) त्वया—दशरथेन ( कर्त्ता-३या ) अज्ञानात्= ज्ञायते बुध्यते अनेन ( ज्ञा-धा+करणे-ल्युट ) ज्ञानं बुद्धिः, तदभावः अज्ञानं तस्मात् अबुद्धिपूर्व्वकं इत्यर्थः ( हेत्वर्थे-५मी ) मुनिः=तपस्वी (कर्म्म-१मा ) हतः—विनाशितः ( हन-धा+कर्म्मणि-क्त, क्रिया ), तस्मात्= हेतोः ( हेतौ-५मी ) नराधिप=अधिपाति पालयति यः ( अधि-पा-धा+ ड ) स अधिपः पालकः प्रभुः इत्यर्थः, नराणां ( ६तत् ) अधिपः तत्-सम्बोधने हे राजन् ( सम्बो ) ब्रह्महत्या=ब्रह्मणः ब्राह्मणस्य ( ६तत् ) हत्या वधः ( हन-धा+क्यप् स्त्रियां टाप् ) ब्रह्महत्या पापं तपस्विवधेषु तत्-सदृशपापं ( कर्त्ता-१मा ) त्वां ( कर्म्म-२या ) आशु=शीघ्रं (क्रिया-विण) न प्रविशति=न तव अन्तर्गच्छति न आक्रामति इत्यर्थः ( प्र-विश-धा+ लट, क्रिया )। ९६॥

वाच्यान्तरं। क्षत्रियः त्वं मुनिं हतवान्, ब्रह्महत्यया त्वं न प्रविश्यते। ९६॥

तू क्षत्रिय ने अज्ञानता से मुनिको मारा है, इस लिए हे महाराज तुझे ब्रह्महत्या न लगेगी। ९६॥

( 96 ). Oh monarch, since a hermit has been killed by you, a Kshatriya, and that unwittingly, you will not be guilty of the sin of killing a Brahmin.

एवं इति। अन्वयः। मयि एवं शापं न्यस्य करुणं बहु विलप्य तत् मिथुनं देहं चितां आरोप्य स्वर्गं अभ्ययात्। ९७॥

व्याख्या। मयि=दशरथे ( अधि-७मी ) एवं=इत्थं ( अव्य )

शापं ( कर्म्म ) न्यस्य=स्थापयित्वा शापं दत्वा इत्यर्थः ( नि-अस-धा+ल्यप, अत्र ) करुणं=करुणाजनकं यथा तथा ( क्रिया-विण ) बहु=अत्यन्तं ( क्रिया-विण ) विलप्य=रुदित्वा ( वि-लप-धा+ल्यप ) तत=अन्ध ( सर्व्व-कर्त्ता-विण ) मिथुनं=युगलं मुनिपत्नी मुनिः च ( कर्त्ता-नपुं १मा) देहं=स्वस्वशरीरं ( कर्म्म ) चितां=क्रव्यादाग्निं ( कर्म्म ) आरोप्य= स्थापयित्वा श्मशानाग्निं आरुह्य इत्यर्थः ( आ-रुह-धा+णिच=रोपि-धा+ ल्यप, णिजन्तत्वात् द्विकर्म्मकः ) स्वर्गं=देवलोकं ( कर्म्म-२या ) अभ्ययात् =अगच्छत् तौ पत्नी पतिश्च अगच्छतां इत्यर्थः ( अभि-या-धा+लङ, क्रिया ) मिथुनं इति कर्तृपदं एकवचनान्तत्वात् क्रियायां अपि एक-वचनं। ६७॥

वाच्यान्तरं। मिथुनेन स्वर्गः अभ्यायत। ६७॥

मुझे इस ढब से शाप दे वह मुनि और मुनिपत्नी बहुत विलाप कर अपने देह को चितापर रख स्वर्ग को सिधारे। ६७॥

(97 ). After having laid thus his curse on me and bitterly mourned a good deal for his son, the sage with his consort ascended the funeral pyre and at once passed to heaven.

तद्देतत् इति। अन्वयः। ( हे ) देवि=शब्दवेध्यनुकर्षिणा मया तदा बाल्यात् स्वयं कृतं तत् एतत् पापं चिन्तयानेन सता स्मृतं।६८॥

व्याख्या। देवि=हे महिषि कौशल्ये ( सम्बो ) शब्दवेध्यनुकर्षिणा =शब्दं लक्ष्यनिष्ठं शब्दमात्रं श्रुत्वा अलक्षितं अपि-लक्ष्यं शब्दमात्रेण श्रुयमाणेन इत्यर्थः विध्यति यः ( विध-धा+णीन् ) शब्दवेधी, अनुकर्षति यः ( अनु-कृष-धा+णीन् ) सः अनुकर्षी प्रथमं शब्दवेधिना पश्चात् विद्ध- शल्यानुकर्षणं कृतवता ( पूर्व्वकालैक इत्यादिना ज्ञातानुलिप्तवत् समासः ) मया=दशरथेन ( कर्त्ता-३या ) तदा=तस्मिन् बाल्यकाले ( अधि-अव्य ) बाल्यात्=बालस्य शिशोः भावः ( बाल-श+ष्यञ ) तस्मात् बालकसुलभ-

चाञ्चल्यात् हेतोः ( हेतौ-५मी ) स्वयं=आत्मना ( अव्य ) कृतं=अनुष्ठितं ( कर्म्मणि-क्त ) तत् एतत् पापं=मुनिकुमारवधरूपं ( स्मृतं इत्यस्य कर्म्म-१मा ) चिन्तयमानेन कथं मम एतादृशं दुःखं इति विचारता इत्यर्थः ( चिन्ति-धा+शानच, आर्षः प्रयोगः ) स्मृतं=स्मरणपथं प्रापितं ( स्मृ-धा+कर्म्मणि-क्त, क्रिया ) कथं मे दुःखं आपतितं इति चिन्तयतः मम मनसि मुनिपुत्रहत्यापापं अधुना उदितं इति भावः । ९८ ॥

वाच्यान्तरं । शब्दवेध्यनुकर्षी अहं चिन्तयमानः तत् पापं स्मृतवान् ।९८

हे देवि लड़कपन में पहिले शब्दानुसार बान मार पीछे उसे निकाल मैंने जो पाप किया था, वह सोचते सोचते याद हुआ है । ९८ ॥

( 98 ). Oh lady, as I was pondering on the matter the sin, I myself committed in my youth in shooting by sound and then extracting the arrow, came back to my memory.

**तस्य इति** । अन्वयः । अपथ्यैः सह अन्नरसे सम्भुक्ते ( सति) व्याधिः यथा ( तथा ) (हे) देवि तस्य कर्म्मणः अयं विपाकः समुपस्थितः तस्मात् ( हे ) भद्रे उदारस्य तस्य तत् वचः मां आगतं । ९९ ॥

व्याख्या । अपथ्यैः सह = न पथिहितानि ( पथिन्-श+यण ) तैः रोगवृद्धिकरैः द्रव्यैः सह ( सहयोगे-३या ) अन्नरसे=अन्नस्य ( अद-धा+ क्त ) रसः ( ६तत् ) तस्मिन् ( भावाधि-७मी ) सम्भुक्ते=भक्षिते ( सम्-भुज धा+क्त ) व्याधिः=आमयः रोगः इति यावत् ( उपमा-कर्त्ता ) यथा उपतिष्ठते तथा तस्य कर्म्मणः=मुनिपुत्रहत्यारूपस्य पापस्य ( सम्ब ) अयं=मरणरूपः ( कर्त्ता-विण ) विपाकः परिणामः फलं इत्यर्थः ( कर्त्ता, वि पच-धा+घञ् ) समुपस्थितः=आगतः ( सम्-उप-धा+कर्त्तरि-क्त, क्रिया ), तस्मात्=कर्म्मणः विपाकात् हेतोः ( हेतौ-५मी ) भद्रे=हे कल्याणि कौशल्ये ( सम्बो ) उदारस्य=महात्मनः ( सम्ब) तस्य =अन्धमुनेः ( सर्व्व-सम्ब ) तत् वचः=पुत्रशोकेन त्वं मरिष्यसि इति शाप-

वाक्य' ( कर्त्ता १मा ) मां=पापग्रस्तं दशरथं ( कर्म्म-२या ) आगतं—उपस्थितं तस्य शापः अद्य सफलः भविष्यति इत्यर्थः ( आ-गम-धा+कर्त्तरि-क्त, क्रिया ) । ९९ ॥

वाच्यान्तरं। व्याधिना यथा अनेन विपाकेन समुपस्थितं, तद्वचसा अहं आगतः । ९९ ॥

जैसे और अपथ्य द्रव्य के साथ अन्न के खाए जाने पर रोग होता है वैसेही मेरा वह कर्म्मफल उपस्थित हुआ है, हे कल्याणि उस महात्मा की बात आज मेरे पर सफल होगी । ९९ ॥

(99.) Oh lady; the time has come for the fruit the deed bore to become ripe, when the words of that great-minded, will be fulfilled, just as disease is the ultimate result of taking rich food.

**इत्युक्त्वा इति ।** अन्वयः। इति उक्त्वा त्रस्तः सः भूमिपः रुदन् ( सन् ) भार्य्यां आह। १०० ॥

व्याख्या।। इति=एवं (अव्य ) उक्त्वा=कथयित्वा ( वच-धा+क्त्वा ) त्रस्तः=मरणभयात् भीतः ( त्रस-धा+क्त, ( कर्त्ता-विण ) सः भूमिपः=भूमिं पाति यः ( पा धा+ड ) सः राजा दशरथः ( कर्त्ता ) रुदन्=मरणसमये न रामदर्शनं जातं इति क्रन्दन् सन् ( रुद धा+शतृ ) भार्य्यां=पत्नीं ( भृ-धा+क्यप, स्त्रियां आप ) कौशल्यां ( कर्म्म-२या ) आह=ब्रवीति ( ब्रू-धा+लट, क्रिया, परस्मैपदी प्रथमपुरुष एकवचन ब्रुवश्च आहः ) अपराद्धे परित्यक्तं । १०० ॥

वाच्यान्तरं। त्रस्तेन तेन भूमिपेन भार्य्या उच्यते । १०० ॥

राजाने यह कह रोते रोते मरण के डरसे डरके भार्य्या से कहा । १०० ॥

(100.) Having said this the monarch with dread of death and weeping thus addressed his wife.

कौशल्ये इति । अन्वयः । (हे) कौशल्ये हृदयं चित्त-मोहेन सीदतेतरां, अहं संयुक्तान् शब्दस्पर्शरसान् न च वेदये । १०१ ॥

व्याख्या । (हे) कौशल्ये (सम्बो) हृदयं = मनः (कर्त्ता) चित्तमोहेन = चित्तस्य अन्तःकरणस्य (६तत्, चित-धा+क्त) मोहेन (मुह धा+अल) दुःखातिशयप्राप्तमूर्च्छया इत्यर्थः (करण) सीदतेतरां = अतिशयेन अवसादं गच्छति । अहं = दशरथः (कर्त्ता) संयुक्तान् = इन्द्रियसंलग्नान् (सम्-युज-धा+क्त, कर्म्म विण) शब्दस्पर्शरसान् = शब्दः आकाशगुणः स्पर्शः वायोः गुणः, रसः जलस्य गुणः, शब्दाः च स्पर्शाः च रसाः च (द्वन्द, त्रिमात्रं अविवक्षितं रूपगन्धौ अपि गृह्यते) तान् इन्द्रियभोग्यान् रूपादीन् विषयान् (कर्म्म) न च वेदये = न जानामि, हृदयस्य मोहेन सर्व्वाणि इन्द्रियाणि अवसीदन्ति, तेन मृत्युः मे निकटवर्त्ती इति भावः । १०१ ॥

पाठान्तरं । हृदयेन सीद्यतेतरां । संयुक्ताः शब्दस्पर्शरसाः न विद्यन्ते । १०१ ॥

हे कौशल्ये चित्तके मोह से मेरा हृदय अवसन्न होता जाता है, मैं मिले हुए शब्द स्पर्श और रस को अनुभव नहीं कर सक्ता हूं । १०१॥

(101.) My spirits, Oh Kausalya! sink lower and lower through the distraction of my feelings, I cannot hear, or feel, overcome by this lethergy of soul (senses).

अयं इति । अन्वयः । आत्मभवः अयं शोकः नदीरयः कूलं यथा (तथा) वेगेन अचेतनं अनाथं मां संसाधयति । १०२ ॥

व्याख्या । आत्मभवः = भवति अस्मात् (भू-धा+अपादाने-अल) भवः उत्पत्तिस्थानं, आत्मा भवः यस्य (बहुव्री) सः आत्मकर्म्मजातः इत्यर्थः (कर्त्ता-विण) शोकः = पुत्रविवासनजन्यं दुःखं (कर्त्ता) नदीरयः = नदीनां (६तत्) रयः वेगः (उपमा-कर्त्ता) कूलं यथा = तीरं इव

( उपमा कर्म्म ) वेगेन=जवेन ( प्रकृत्यादिभ्यः इति ३या ) अचेतनं=नास्ति चेतनं (चित-धा+ल्युट ) यस्य ( बहुव्री ) तं क्रमशः हीयमानचैतन्य इत्यर्थः ( कर्म्म-विण ) अनाथं=रक्षकहीनं अशरणं इत्यर्थः ( कर्म्म-विण ) मां (कर्म्म) संसाधयति (सम् साधि धा+लट, क्रिया) नाशयति ।१०२॥

वाच्यान्तरं। आत्मभवेन अनेन शोकेन नदीरयेण कूलं यथा अचेतनः अनाथः अहं संसाध्ये। १०२॥

इस मेरे शोक का कारण मैं ही हूं, मुझ अनाथ और अचेतको यह नाश करता है, जैसे नदीका वेग किनारे को नाश करता है।

( 102. ) This woe, the result of my own action, kills me helpless and unmanned, as the flood destroys swiftly the river's shore.

हा राघव इति। अन्वयः। हा राघव, हा महाबाहो, हा मम आयासनाशन, हा पितृप्रिय, हा मम नाथ, हा मम सुत गतः असि। १०३॥

व्याख्या। हा ( खेदे-अव्य) राघव=रघोः अपत्यं पुमान् ( रघु-अण् ) तत् सम्बुद्धौ हे रघुकुलतिलक एतत्सम्बोधनेन दुःखातिरेकात् पूर्व्वपुरुषस्य रघोः स्मरणं व्यज्यते, हा महाबाहो=महान्तौ बाहू यस्य ( बहुव्री ) तत् सम्बुद्धौ हे वीर ( सम्बो ) अनेन तस्य गुणस्मरणं उक्तं, हा मम ( सम्ब ) आयासनाशन=नाशयति यः ( नाशि-धा+न्यु ) सः नाशनः, आयासस्य क्लेशस्य नाशनः ( ६तत्) तत्सम्बुद्धौ एतेन तत्कृतोपकारस्मरणं उक्तं, हा पितृप्रिय=पिता प्रियः ( बहुव्री ) तत्सम्बुद्धौ हे पितृवत्सल, अनेन रामस्य पितृभक्तिस्मृतिः। हा मम ( सम्बो ) नाथ=वार्द्धके प्रतिपालक ( सम्बो ) अनेन भविष्यदुपकारलाभाशास्मृतिः उक्ता। हा मम (सम्ब) सुत=पुत्र ( सम्बो ) अनेन परलोके उपकारस्मरणं उक्तं। गतः असि=मां परित्यज्य कुत्र प्रस्थितः इत्यर्थः एतेन निराशत्वं उक्तं अत्र

हा इत्यस्य पुनः पुनः उक्तिः न दोषाय, वस्तुतस्तु दुःखाधिक्यं गुणाय, तदाह दर्पणकारः, कथितं च पदं पुनः, विहितस्यानुवाद्यते विषादे विस्मये क्रुधि। गुणः स्यात् इति अनुषज्यते। १०३॥

वाच्यान्तरं। गतेन भूयते। १०३॥

हा राघव, हा महाबाहु, हा मेरे दुख मिटावनहारे, हा पिताके प्यारे हा मेरे नाथ तू कहां गया। १०३॥

(103.) Ah *Raghab*! ha mighty-armed! the destroyer of my cares and anxieties, the darling of thy father, his lord, my son, where art thou?

**हा कौशल्ये इति।** अन्वयः। हा कौशल्ये, हा तपस्विनि सुमित्रे, हा कुलपांसनि नृशंसे मम अमित्रे कैकेयि न पश्यामि। १०४॥

व्याख्या। निराशावस्थायां किञ्चिदवलम्बनमाह हा इति, हा कौशल्ये=हे राममातः (सम्ब) प्रियस्य अप्राप्तौ तत्प्रियस्मृतिरपि सुखाय भवति इति भावः, हा तपस्विनि=निरपराधे (सम्बो-विण) सुमित्रे=लक्ष्मणमातः (सम्बो) एतेन कारणं विनापि वनं गतस्य लक्ष्मणस्य स्मरणं उक्तं, हा कुलपांसनि=कुलकलंकिनि (सम्ब-विण) नृशंसे—नॄन्=मनुष्यान् शंसति हिनस्ति या (नृ-शंस-अ+अच्) तत्सम्बुद्धौ निष्ठुरे (सम्बो) मम (सम्ब) अमित्रे—शत्रुभूते (सम्ब-विण) कैकेयि=भरतमातः (सम्बो) एतेन अस्य क्रोधोदयः उक्तः, न पश्यामि—न अवलोकयामि इन्द्रियाणि मे अवशानि मे अन्तिमः समयः समुपस्थित इति भावः (दृश-धा+ल-१पु-१व, क्रिया), अत्रापि-हा इत्यस्य पुनः पुनः उक्तिः गुणाय। १०४॥

वाच्यान्तरं। न दृश्यते। १०४॥

हा कौशल्ये, हा दीना सुमित्रे, हा नृशंसे मेरी अमित्र, कुल का नाश करनेवाली कैकेयि मुझे कुछ दीखता नहीं है। १०४॥

(104.) Ah Kausalya! the gentle devotee Sumitra! ah Kaikeyi, the cruel-hearted! my bitter foe, the shame of thy race, I cannot see.

**तथा इति।** तदा दीनः प्रियस्य पुत्रस्य विवासनातुरः भृश-दुःखपीड़ितः उदारदर्शनः नराधिपः तथा कथयन् (सन्) अर्द्धरात्रे गते (सति) प्राणं जहौ। १०५॥

व्याख्या। तदा=तस्मिन् काले (तद-श-७मी+दा, अधि-अव्य) दीनः=दुःखितः (दा-धा+क्त, कर्त्ता-विश) प्रियस्य=स्नेहपात्रस्य (प्री-धा+क, ६ष्ठी-विश) पुत्रस्य=पुतः पुन्नामनरकात् त्रायते यः (पुत्-त्रै-धा+ड) तस्य तनयस्य (विवासनं इत्यस्य कर्म्म-६ष्ठी) विवासनातुरः=विवास्यते इति (वि-वस-धा+णिच=वासि-धा+ल्युट सापेक्षत्वेऽपि गमकत्वात् समासः) विवासनं विदेशे प्रेषणं वनप्रस्थापनं इत्यर्थः तेन (३तत्) आतुरः (आ-तुर-धा+क) रामवनगमनेन दुःखितः (कर्त्ता-विश) भृशदुःखपीड़ितः=भृशं दुःखं (कर्म्म-धा) तेन (३तत्) पीड़ितः अर्दितः पीड़-धा+क्त) शोकाकुलः (कर्त्ता-विश) उदारदर्शनः=उदारं (उत्-आ-ऋ-धा+अप्) दर्शनं (दृश-धा+ल्युट) यस्य (बहुव्री) सुन्दराकृतिः (कर्त्ता-विश) नराधिपः=अधिपतिः, नराणां मनुष्याणां (नृ-धा+अच) अधिपः (६तत्) राजा (कर्त्ता-१मा) तथा=पूर्व्वोक्तं (तद-श+था, अव्य) कथयन्=वदन् (कथि-धा+शतृ=कथयत्-श+१मा-१व, कर्त्ता-विश) अर्द्धरात्रे=अर्द्धं रात्रेः=अर्द्धरात्रं तस्मिन् निशीथे (भावविकरण-७मी) गते=अतीते सति (गम-धा+क्त, अधि-विश) प्राणं=प्राणान् जीवनं (कर्म्म-२या एकवचनं आर्षं प्र-अन-धा+करणे-घञ्) जहौ=तत्याज ममार इत्यर्थः (हा-धा+लिट १पु-१व, क्रिया)। अत्र वंशस्थविलं वृत्तं, तच्च च छन्दोमञ्जर्य्यां, वदन्ति वंशस्थविलं जतौ जरौ इति।

ज त ज र

तथातु दीनःक थयन्न राधिपः । ५४ ॥

वाच्यान्तरं । दीनेन विवासनातुरेण भृशदुःखपीड़ितेन उदार-दर्शनेन नराधिपेन कथयता प्राण: ( प्राणाः ) जहे ( जहिरे ) । १०५ ॥

वह दीन उदारदर्शन राजा दशरथ ने प्यारे पुत्रको वन में भेजकी बहुत दुःखित हो, आधी रात को प्राणत्याग किया । १०५ ॥

(105.) Saying thus, the dejected but beautiful Raja Dasaratha, grieving for the exile of his darling, and being sorely distressed thereby, breathed his last at dead of night.

# परिशिष्ट।

## संक्षिप्तछन्द के नियम।

---

पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा।
वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत्॥

जिस के चार पाद हों, उसे पद्य कहते हैं, पद्य वृत्त और जाति भांत के हैं; जिस पद्य में अक्षर गिने हुए होते हैं, उसे वृत्त और जिस में मात्रा गिनी जाती हैं, उसे जाति कहते हैं।

मस्त्रिगुरुस्त्रिलघुश्च नकारो
भादिगुरुः पुनरादिलघुर्यः।
जो गुरुमध्यगतो रलमध्यः
सोऽन्तगुरुः कथितोऽन्तलघुस्तः॥

गुरुरेको गकारस्तु लकारो लघुरेककः।
क्रमेण चैषां रेखाभिः संस्थानं दर्श्यते यथा॥

तीन गुरु अक्षर को मगण, तीन लघु अक्षर को नगण, आदिगुरु को भगण, आदिलघु को यगण, मध्यगुरु को जगण, मध्यलघु को रगण, अन्तगुरु को सगण, और अन्तलघु को तगण कहते हैं। *

---

* छन्दःशास्त्र में तीन तीन अक्षरों के एक एक गण होते हैं, और हलन्तवर्ण एक अक्षर नहीं समझा जाता।

एक ग को गुरु और एक ल को लघु कहते है, वह नीचे लकीरों से दिखाए जाते हैं,—

म— — — न ◡ ◡ ◡ भ— ◡ ◡ य ◡ — — ज ◡ — ◡

र— ◡ — स ◡ ◡ — त — — ◡ ; ग— ल ◡ ।

सानुस्वारश्च दीर्घश्च विसर्गी च गुरुर्भवेत् ।
वर्णः संयोगपूर्व्वश्च तथा पादान्तगोऽपि वा ॥

वह अक्षर गुरु समझा जाता है, जिस में अनुस्वार विसर्ग और दीर्घ स्वर हो, और जो संयुक्त वर्ण के पहिले हो, और जो पाद के अन्त में हो, वह विकल्प से लघु और गुरु दोनों समझा जाता है।

---

## समवृत्तं ।

एकादशाक्षरावृत्तिः

### इन्द्रवज्रा ।

स्यादिन्द्रवज्रा यदि तौ जगौ गः ।

शिक्षा १६पृ० । विवृति ८७ पृ० ।

| त | त | ज | ग | ग |
|---|---|---|---|---|
| — — ◡ | — — ◡ | ◡ — ◡ | — | — |
| यस्यास्ति | सर्व्वत्र | गतिःस | क | स्मात् |

### उपेन्द्रवज्रा ।

उपेन्द्रवज्रा प्रथमे लघौ सा ।

शिक्षा २५ पृ । विवृति १५६ पृ ।

| ज | त | ज | ग ग |
|---|---|---|---|
| ◡ — ◡ | — — ◡ | ◡ — ◡ | — — |
| बुभुक्षि | तःकिं न | करोति | पापं |

उपजातिः ।

अनन्तरोदीरितलक्ष्मभाजौ

पादौ यदीयावुपजातयस्ताः ॥

जिस पद्य में ऊपर बताए हुए दोनों लक्षणों के एक एक पाद हों उसे उपजाति कहते हैं ।

---

द्वादशाक्षरावृत्तिः ।

वंशस्था जतौ जरौ । पिङ्गलः । ६ । ७ ।

वदन्ति वंशस्थविलं जतौ जरौ । छन्दोमञ्जरी

शिक्षा १६पृ । विवृति १०४ पृ ।

| ज | त | ज | र |
|---|---|---|---|
| – ◡ – | ◡ ◡ – | – ◡ – | ◡ – ◡ |
| अरचि | तं तिष्ठ | ति दैव | रचितम् |

द्रुतविलम्बितं ।

द्रुतविलम्बितं नभौ भरौ । पिङ्गलः । ६ । २६ ।

द्रुतविलम्बितमाह न भौ भरौ । छन्दोमञ्जरी ।

शिक्षा ६०पृ । विवृति ३४४पृ ।

| न | भ | भ | र |
|---|---|---|---|
| – – – | ◡ – – | ◡ – – | ◡ – ◡ |
| विपदि | धैर्य्यम | थाभ्युद | ये क्षमा |

---

चतुर्दशाक्षरावृत्तिः ।

वसन्ततिलकं ।

वसन्ततिलकं तभजौगौ । पिङ्गलः । ७ । ७ ।

ज्ञेयं वसन्ततिलकं तभजाः जगौगः । । छन्दोमञ्जरी

त भ ज ज ग ग

उद्योगि नं पु रु ष सिंह मुपैति लक्ष्मीः

---

## ऊनविंशत्यक्षरावृत्तिः ।

शार्दूलविक्रीड़ितं ।

शार्दूलविक्रीड़ितं म्सौ जजौ तौगादित्य ऋषयः । पिङ्गलः । ७ । ७ ।

सूर्य्याश्वै र्यदि मः स जौ स त त गाः शार्दूल विक्रीड़ितं । छन्दोमञ्जरी ।

म स ज स त

दारिद्रा न्द्रियमे ति क्लीप रिगतः सत्वात्म

त ग

विभ्रश्य ते ।

---

## विषमवृत्तं ।

अष्टाक्षरावृत्तिः ।

पञ्चमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः ।

गुरु षष्ठञ्च पादानां शेषेष्वनियमोमतः ॥

हर पाद का पांचवा और दूसरे और चौथे पाद का सातवां अक्षर-लघु और हरपादका छठा गुरु हो और शेष अक्षरों के लिए कोई नियम नहीं है, इसे अनुष्टुप कहते हैं ।

अनुष्टुपछन्द के हर पाद में आठ आठ अक्षर होते हैं ।

---

# लिंगानुशासनम् ।

## पुंलिङ्ग ।

---

१। घञ् और अप् प्रत्ययान्त शब्द—पाकः, त्यागः, करः पर भय, लिंग, भग और पद नपुंसक हैं।

२। नङ् प्रत्ययान्त—यज्ञः, यत्नः, पर याच्ञा स्त्रीलिंग है।

३। किप्रत्ययान्त धातु—आधिः, निधिः, उदधिः, पर इषुधि शब्द स्त्री पुं दोनो होता है।

४। देव असुर, आत्मा, स्वर्ग, पर्वत, समुद्र, नख, केश, दन्त, स्तन, भुज, कण्ठ, खड्ग, शर और पंकवाचक शब्द। पर स्वर्गवाचक दिव् शब्द स्त्रीलिङ्ग है, और शर वाचक बाण और काण्ड शब्द पुंलिङ्ग और नपुंसक दोनो होते हैं।

५। नकारान्त शब्दः—आत्मन्—आत्मा, राजन्—राजा, तक्षन्—तक्षा। कर्म्मन् और चर्म्मन् आदि मन् प्रत्ययान्त शब्द नपुंसक हैं।

६। यज्ञ, पुरुष, कपोल, और मेघवाचक शब्द—क्रतुः, नीरदः, पयोधरः, कपोलः, गंडः, पर अभ्र शब्द नपुंसक है।

उप्रत्ययान्त शब्द—प्रभुः, इक्षुः, पर धेनु, रज्जुः, सरयु, जतु, त्रपु और रेणु स्त्रीलिङ्ग हैं, और श्मश्रु, जानु, वसु, अश्रु, जतु, त्रपु और तालु केवल नपुंसक हैं।

८। रु प्रत्ययान्त शब्द—मेरुः, सेतुः।

९। इमन्प्रत्ययान्त शब्द—अणिमन्—अणिमा, महिमन्—महिमा, लघिमन्—लघिमा, गरिमन्—गरिमा।

१०। अथु प्रत्ययान्त धातु—वेपथुः, वमथुः, दवथुः।

११। ऐसे शब्द जिनके अन्त में अकारान्त क, ट, ण, थ, न, प, भ, म, य, र, ष, और स, हो—स्तवकः, ( १ ) पटः, घटः, (२), गुणः, गणः, पाषाणः ( ३ ); रथः ( ४ ) इनः, फेनः (५) यूपः, दीपः, सर्पः ( ६ ); तम्भः, कुम्भः, ( ७ ); सोमः, भीमः, ( ८ ); समयः, हयः, ( ९ ); अंकुरः, क्षुरः, ( १० ); वृषः, वृक्षः, ( ११ ); वत्सः, वायसः, महानसः ( १२ )।

अपवाद ( Exceptions ).

( १ ) चिबुक, शालुक, प्रातिपदिक, अंशुक शब्द नपुंसक हैं; और कण्टक, अनीक, सरक, मोदक, चसक, मस्तक, पुस्तक, तड़ाक, पिनाक, आदि शब्द पुलिंग और नपुंसक, दोनों होते हैं।

( २ ) किरीट, मुकुट, ललाट, वट, बीट, आदि नपुंसक होते हैं। और कुट, कपट, नट, निकट, कीट और कट पुलिंग और नपुंसक दोनों हैं।

( ३ )—ऋण, लवण पर्ण तोरण, रण नपुंसक हैं, और स्वर्ण, सुवर्ण, द्रषण, व्रण, विषाण, चूर्ण, और तृण पुंलिंग और नपुंसक दोनों हैं।

( ४ )—रिक्थ काष्ठ ( थ ) दृष्ठ ( थ ) शब्द नपुंसक और तीर्थ, प्रोथ, यूथ, शब्द पुंलिंग और नपुंसक दोनों हैं।

(५)—जघन, अजिन, तुहिन, कानन, वन, विपिन, वृजिन, वेतन, सोपान, मिथुन, श्मशान, रत्न, निम्न, चिह्न शब्द नपुंसक और मान, यान, अभिधान, नलिन, पुलिन, आसन, स्थान, चन्दन, वसन, भवन, विमान आदि शब्द पुं नपुंसक दोनों हैं।

( ६ )—पाप, रूप, तल्प, पुष्प, शष्प, समीप, और अन्तरीप, शब्द नपुंसक और सूर्प, द्वीप, और विटप, शब्द पुं-नपुंसक दोनों हैं।

( ७ )—जृम्भ शब्द पुं नपुंसक दोनों हैं।

( ८ )—रुक्म, युग्म, गुल्म, अध्यात्म, कुंकुम शब्द नपुंसक और, संग्राम, दाडिम, कुसुम, आश्रम, क्षेम, क्षौम, और होम शब्द पुं-नपुंसक दोनों हैं।

( ९ )—किसलय, इन्द्रिय, हृदय, और उत्तरीय नपुंसक और गोमय, कषाय, मलय, अन्वय, और अव्यय, पुं-नपुंसक दोनों हैं।

( १० )—द्वार, अग्र, वप्र, क्षुद्र, नीर, तीर, दूर, क्रच्छ्र, केयूर, केदार, उदर, शरीर, कन्दर, जठर, चामर, गह्वर, अम्बर, शिशिर, तन्त्र, यन्त्र, क्षेत्र, मित्र, कलत्र, छत्र, मूत्र, नेत्र, गोत्र, शस्त्र, वस्त्र, पत्र, पात्र, नक्षत्र, आदि शब्द नपुंसक हैं, और चक्र, वज्र, अन्धकार, क्षीर, तिमिर आदि पुं-नपुंसक दोनों हैं।

( ११ )—शिरीष, पीयूष, पुरीष, किल्बिष, कल्माष शब्द नपुंसक और यूप, करीष, मिष, वर्ष और विष शब्द पुं-नपुंसक दोनों हैं।

( १२ )—पनस साहस और बिस नपुंसक, और मांस, कर्पास, मास, कास, उपवास, आदि शब्द पुं-नपुंसक दोनों हैं।

१२। दार, और गृह शब्द स्त्रीवाचक हैं, पर तब भी पुंलिङ्ग और सदा बहुवचन में आते हैं।

१३। ऐसे समासान्त पद जिन के अन्त में अह्न, अह और रात्र शब्द आते हैं—पूर्वाह्णः, प्राह्णः, मध्याह्नः, अर्द्धरात्रः, मध्यरात्रः। पर संख्यावाचक पद के साथ समास होने पर रात्र शब्द नपुंसक होता है—द्विरात्रम्, पञ्चरात्रम्।

१४। सूर्य के किरण और दिवसवाचक शब्द दिवसः, किरणः दीधितिः। पर दिन और अहन् शब्द नपुंसक होते हैं।

---

## नपुंसकलिङ्ग ।

१। ऐसे शब्द जो भाववाच्य में ल्युट् क्त और तद्धित के त्व और ष्यञ प्रत्यय से बनेः, हसनं, गमनं ; हसितं, गीतं, शुक्लत्वं, शौक्ल्यं ।

२। ण्यत्, तव्य, अनीयर्, यत् और क्यप् प्रत्ययान्त शब्द जो ये प्रत्यय भाववाच्य में हो—ण्यत्—कार्य्यम्,वाच्यम, भोज्यम्, तव्य—कर्त्तव्यं, वक्तव्यं, भवितव्यं ; अनीय-शयनीयं, करणीयं, पानीयं, यत्—गेयम्, देयं, भव्यं, गम्यं ; क्यप्—कृत्यं, शस्यं ।

३। जिनके अन्त में अकारान्त ल हो—कूलम्, कुलं स्थलं ; पर तूल, उपल, गाल, कम्बल आदि शब्द पुंलिङ्ग हैं। और शील, मूल, मङ्गल, कमल, तल, मूसल, कुण्डल, पलल, मृणाल, वाल, अखिल शब्द पुं-नपुंसक दोनों हैं।

४। सुख, नयन, वन, जल, धन, और रुधिरवाचक शब्द—सुखं, नयनं, वनं, तपनं ।

५। जिन के अन्त में त्र हो—वहित्रं, खनित्रं, पात्रं, सूत्रं, मूत्रं, वक्त्रं, नेत्रं, चरित्रं । पर यात्रा, मात्रा, भस्त्रा आदि शब्द स्त्रीलिङ्ग होते हैं।

६। जिनके अन्त में अस्, इस् और उस् हो—तपस् तपः, अम्भस्-अम्भः, उरस्-उरः, तमस्-तमः, सर्पिस्-सर्पिः, वर्हिस्-वर्हिः, आयुस्-आयुः, धनुस्-धनुः, चक्षुस्-चक्षुः ।

७। मन प्रत्ययान्त शब्द जिनमें दो स्वर हों—चर्म्मन्-चर्म्म, कर्म्मन्-कर्म्म पर ब्रह्मन् पुंलिङ्ग भी होता है। ब्रह्मा, ब्रह्म ।

८। कोटिको छोड़के शतादि संख्यावाचक शब्द—शतं, सहस्रं, अयुतं, नियुतं, लक्षं ।

९। फलजातिवाचक—आम्रं आमलकं ।

१०। छाया शब्दके साथ बहुवचन में तत्पुरुष समास हो—इक्षूणां छाया-इक्षुच्छायं, वटानां छाया-वटच्छायं।

११। समाहारद्वन्द्व समास—पाणिपादं, मांसास्थिरुधिरं, वाक्त्वचं, अहिनकुलं।

१२। समाहार द्विगु समास—त्रिभुवनं, चतुर्युगं, पञ्चपात्रं।

१३। अव्ययीभावसमास—कूलस्य समीपे उपकूलं, अनुदिनं, यथाजातं, यथाशक्ति।

---

## स्त्रीलिङ्ग।

१। आ, ई, ऊकारान्त शब्द—प्रायः स्त्रीलिङ्ग होते हैं,—विश्वपा, सेनानी, अग्रणी, सुधी, प्रधी, आदि और प्रतिभू, वर्षाभू, सुलु, खलपू पुंलिङ्ग हैं।

२। तल प्रत्ययान्त शब्द—गुरुता, लघुता, जड़ता मूर्खता।

३। क्ति प्रत्ययान्त शब्द—वृद्धिः, गतिः, मतिः, भक्तिः, स्मृतिः, श्रुतिः।

४। मातृ, स्वसृ, यातृ, ननान्दृ और दुहितृ शब्द।

५। विंशति आदि शब्द—विंशतिः, त्रिंशत्, सप्ततिः।

---

# धातूनां रूपाणि ।

| धातु | लट् | लोट् | लङ् | लिट् | शतृ वा शानच् | क्त | विशिष्यपदं | वाच्यान्तरं |
|---|---|---|---|---|---|---|---|---|
| अद् (भक्षणे) | अत्ति, | अत्तु, | आदत् | जघास | अदन् | जग्ध | घासः food | अद्यते |
| अर्च् (पूजायाम्) | अर्चति | अर्चतु | आर्चत् | आनर्च | अर्चन् | अर्चितः | अर्चा | अर्च्यते |
| अर्ज् (उपार्जने) | अर्जति | अर्जतु | आर्जत् | आनर्ज | अर्जन् | अर्जितः | अर्जनम् | अर्ज्यते |
| अर्थ् (याचने) | अर्थयते | अर्थयताम् | आर्थयत | अर्थयाञ्चक्रे | अर्थयमानः | अर्थितः | अर्थनम् | अर्थ्यते |
| अश् (भोजने) | अश्नाति | अश्नातु | आश्नात् | आश | अश्नन् | अशितः | अशनम् | अश्यते |
| अस् (सत्तायाम्) | अस्ति | अस्तु | आसीत् | बभूव | सन् | भूतः | भवः | भूयते |
| अस् (क्षेपणे) | अस्यति | अस्यतु | आस्यत् | आस | अस्यन् | अस्तः | आसः | अस्यते |
| आप (प्राप्तौ) | आप्नोति | आप्नोतु | आप्नोत् | आप | आप्नुवन् | आप्तः | आप्तिः | आप्यते |
| आस् (उपवेशने) | आस्ते | आस्तां | आस्त | आसाञ्चक्रे | आसीनः | आसितम् | आसनम् | आस्यते |
| इ (गतौ) | एति | एतु | ऐत् | इयाय | यन् | इतः | अयनम् | ईयते |
| अधि+इ (अध्ययने) | अधीते | अधीताम् | अध्यैत | अधिजगे | अधीयानः | अधीतः | अध्ययनम् | अधीयते |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| इष् (इच्छायाम्) | इच्छति | इच्छतु | ऐच्छत् | इयेष | इच्छन् | इष्टः | इच्छा | इष्यते |
| ईक्ष् (दर्शने) | ईक्षते | ईक्षतां | ऐक्षत | ईक्षाञ्चक्रे | ईक्षमाणः | ईक्षितः | ईक्षणम् | ईक्ष्यते |
| कथ (कथने) | कथयति | कथयतु | अकथयत् | कथयामास | कथयन् | कथितः | कथनम् | कथ्यते |
| कम्प् (कम्पने) | कम्पते | कम्पताम् | अकम्पत | चकम्पे | कम्पमानः | कम्पितः | कम्पः | कम्प्यते |
| कर्ण् (श्रवणे) | कर्णयति | कर्णयतु | अकर्णयत् | कर्णयामास | कर्णयन् | कर्णितः | कर्णनम् | कर्ण्यते |
| काश् (प्रकाशे) | काशते | काशताम् | अकाशत | चकाशे | काशमानः | काशितः | काशः | काश्यते |
| कुप् (कोपे) | कुप्यति | कुप्यतु | अकुप्यत् | चुकोप | कुप्यन् | कुपितः | कोपः | कुप्यते |
| कृ (करणे) | करोति | करोतु | अकरोत् | चकार | कुर्वन् | कृतः | करणं | क्रियते |
| | कुरुते | कुरुताम् | अकुरुत | चक्रे | कुर्वाणः | ,, | ,, | ,, |
| कृष् (आकर्षणे) | कर्षति | कर्षतु | अकर्षत् | चकर्ष | कर्षन् | कृष्टः | कर्षणं | कृष्यते |
| कॄ (क्षेपणे) | किरति | किरतु | अकिरत् | चकार | किरन् | कीर्णः | किरणं | कीर्यते |
| क्रम् (पादविक्षेपे) | क्रामति | क्रामतु | अक्रामत् | चक्राम | क्रामन् | क्रान्तः | क्रमः | क्रम्यते |
| क्षि (हिंसायां) | क्षिणोति | क्षिणोतु | अक्षिणोत् | चिक्षाय | क्षिण्वन् | क्षितः | क्षयः | क्षीयते |
| क्षिप् (क्षेपणे) | क्षिप्यति | क्षिप्यते | अक्षिप्यत् | चिक्षेप | प्यन् | क्षिप्तः | क्षेपः | क्षिप्यते |
| | क्षिपति | क्षिपतु | अक्षिपत् | ,, | क्षिपन् | | ,, | ,, |

| धातु | लट् | लोट् | लङ् | लिट् | शत वा शानच | क्त | विशेष्यपदं | वाच्यान्तरं |
|---|---|---|---|---|---|---|---|---|
| गद् ( कथने) | गदति | गदतु | अगदत् | जगाद | गदन् | गदितः | गदनं | गद्यते |
| गम् (गमने) | गच्छति | गच्छतु | अगच्छत् | जगाम | गच्छन् | गतः | गमनं | गम्यते |
| गर्ज्ज् (गर्ज्जने) | गर्ज्जति | गर्ज्जतु | अगर्ज्जत् | जगर्ज्ज | गर्ज्जन् | गर्ज्जितं | गर्ज्जनं | गर्ज्ज्यते |
| गै (गाने) | गायति | गायतु | अगायत् | जगौ | गायन् | गीतः | गानं | गायते |
| ग्रह (ग्रहणे) | गृह्णाति | गृह्णातु | अगृह्णात् | जग्राह | गृह्णन् | गृहीतः | ग्रहणं | गृह्यते |
| चर् (गतौ) | चरति | चरतु | अचरत् | चचार | चरन् | चरितः | चरणं | चर्य्यते |
| चल् (गतौ) | चलति | चलतु | अचलत् | चचाल | चलन् | चलितः | चलनं | चल्यते |
| चि (चयने) | चिनोति | चिनोतु | अचिनोत् | चिचाय, | चिन्वन् | चितः | चयनं | चीयते |
| | चिनुते | चिनुताम् | अचिनुत | चिच्ये, चिक्ये | चिन्वानः | ,, | ,, | ,, |
| चिन्त् (चिन्तने) | चिन्तयति | चिन्तयतु | अचिन्तयत् | चिन्तयामास | चिन्तयन् | चिन्तितः | चिन्ता | चिन्त्यते |
| छद् (आच्छादने) | छादयति | छादयतु | अच्छादयत् | छादयामास | छादयन् | छादितः | छादनं | छाद्यते |
| छिद् (छेदने) | छिनत्ति | छिनत्तु | अच्छिनत् | चिच्छेद | छिन्दन् | छिन्नः | छेदः | छिद्यते |
| | छिन्ते | छिन्तां | अच्छिन्त | चिच्छिदे | | | | |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| जन (जनने) | जायते | जायतां | अजायत | जज्ञे | जायमानः | जातः | जननं | जन्यते |
| जि (जये) | जयति | जयतु | अजयत | जिगाय | जयन् | जितः | जयः | जीयते |
| जीव (जीवने) | जीवति | जीवतु | अजीवत् | जिजीव | जीवन् | जीवितः | जीवनं | जीव्यते |
| ज्ञा (ज्ञाने) | जानाति | जानातु | अजानात् | जज्ञौ | जानन् | ज्ञातः | ज्ञानं | ज्ञायते |
| ज्वल् (ज्वलने) | ज्वलति | ज्वलतु | अज्वलत् | जज्वाल | ज्वलन् | ज्वलितः | ज्वलनं | ज्वल्यते |
| तप् (तापे) | तपति | तपतु | अतपत् | तताप | तपन् | तप्तः | तापः | तप्यते |
| तृप् (तृप्तौ) | तृप्यति | तृप्यतु | अतृप्यत् | ततर्प | तृप्यन् | तृप्तः | तृप्तिः | तृप्यते |
| तॄ (तरणे) | तरति | तरतु | अतरत् | ततार | तरन् | तीर्णः | तरणं | तीर्यते |
| त्यज (त्यागे) | त्यजति | त्यजतु | अत्यजत् | तत्याज | त्यजन् | त्यक्तः | त्यागः | त्यज्यते |
| त्रै (पालने) | त्रायते | त्रायतां | अत्रायत | तत्रे | त्रायमाणः | त्रातः | त्राणं | त्रायते |
| दम (उपशमे) | दाम्यति | दाम्यतु | अदाम्यत् | ददाम | दाम्यन् | दान्तः | दमः | दम्यते |
| दह (भस्मीकरणे) | दहति | दहतु | अदहत् | ददाह | दहन् | दग्धः | दाहः | दह्यते |
| दा (दाने) | ददाति | ददातु | अददात् | ददौ | ददत् | दत्तः | दानं | दीयते |
| दा (य) (दाने) | यच्छति | यच्छतु | अयच्छत् | ददौ | यच्छन् | ,, | ,, | ,, |
| दिव् (क्रीडायां) | दीव्यति | दीव्यतु | अदीव्यत् | दिदेव | दीव्यन् | द्युतः, द्यूनः | देवनं | दिव्यते |

| धातु | लट् | लोट | लङ् | लिट् | शतृ वा शानच् | क्त | विशेष्यपदं | वाच्यान्तरं |
|---|---|---|---|---|---|---|---|---|
| दिश् (अतिसर्जने) | दिशति | दिशतु | अदिशत् | दिदेश | दिशन् | दिष्टः | देशः | दिश्यते |
| दिश् ( आदेशे ) | दिशते | दिशतां | अदिशत | दिदिशे | दिशमानः | ,, | ,, | ,, |
| दृश् ( प्रेक्षणे) | पश्यति | पश्यतु | अपश्यत् | ददर्श | पश्यन् | दृष्टः | दर्शनं | दृश्यते |
| द्रु ( पलायने) | द्रवति | द्रवतु | अद्रवत् | दुद्राव | द्रवन् | द्रुतः | द्रवः | द्रूयते |
| द्विष् (वैरे ) | द्वेष्टि | द्वेष्टु | अद्वेट् | दिद्वेष | द्विषन् | द्विष्टः | द्वेषः | द्विष्यते |
| धा ( धारणे ) | दधाति | दधातु | अदधात् | दधौ | दधन् | हितः | धानं | धीयते |
| | धत्ते | धत्तां | अधत्त | दधे | दधानः | ,, | ,, | ,, |
| धाव (द्रुतगतौ) | धावति | धावतु | अधावत् | दधाव | धावन् | धावितः | धावनं | धाव्यते |
| ध्यै ( ध्याने ) | ध्यायति | ध्यायतु | अध्यायत् | दध्यौ | ध्यायन् | ध्यातः | ध्यानं | ध्यायते |
| नन्द ( आनन्दे ) | नन्दति | नन्दतु | अनन्दत् | ननन्द | नन्दन् | नन्दितः | नन्दः | नन्द्यते |
| निन्द् (निन्दायां ) | निन्दति | निन्दतु | अनिन्दत् | निनिन्द | निन्दन् | निन्दितः | निन्दा | निन्द्यते |
| नी ( प्रापणे ) | नयति | नयतु | अनयत् | निनाय | नयन् | नीतः | नयः | नीयते |
| | नयते | नयतां | अनयत | निन्ये | नयमानः | ,, | ,, | ,, |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| भाष् (कथने) | भाषते | भाषतां | अभाषत | बभाषे | भाषमाणः | भाषितः | भाषा | भाष्यते |
| भास् (दीप्तौ) | भासते | भासतां | अभासत | बभासे | भासमानः | भासितः | भासः | भास्यते |
| भिक्ष् (भिक्षायां) | भिक्षते | भिक्षतां | अभिक्षत | बिभिक्षे | भिक्षमाणः | भिक्षितः | भिक्षा | भिक्ष्यते |
| भिद् (भेदे) | भिनत्ति | भिनत्तु | अभिनत् | बिभेद | भिन्दन् | भिन्नः | भेदः | भिद्यते |
| | भिन्ते | भिन्तां | अभिन्त | बिभिदे | भिन्दानः | ,, | ,, | ,, |
| भी (भये) | बिभेति | बिभेतु | अबिभेत् | बिभाय | बिभ्यत् | भीतः | भयं | भीयते |
| भुज (पालने) | भुनक्ति | भुनक्तु | अभुनक् | बुभोज | भुञ्जन् | भक्तः | भोगः | भुज्यते |
| भुज (भोजने) | भुङ्क्ते | भुङ्क्तां | अभुङ्क्त | बुभुजे | भुञ्जानः | भुक्तः | भोगः | भुज्यते |
| भू (सत्तायां) | भवति | भवतु | अभवत् | बभूव | भवन् | भूतः | भवः | भूयते |
| भृ (पोषणे) | बिभर्ति | बिभर्तु | अबिभर् | बभार, बभ्रे | बिभ्रत् | भृतः | भरणं | भ्रियते |
| | बिभृते | बिभृतां | अबिभृत | बिभराञ्चक्रे | बिभ्राणः | ,, | ,, | ,, |
| भ्रम् (चलने) | भ्राम्यति | भ्राम्यतु | अभ्राम्यत् | बभ्राम | भ्राम्यन् | भ्रान्तः | भ्रमणं | भ्रम्यते |
| मण्ड (भूषणे) | मण्डते | मण्डताम् | अमण्डत् | ममण्डे | मण्डमानः | मण्डितः | मण्डनं | मण्ड्यते |
| पत् ( पतने ) | पतति | पततु | अपतत् | पपात | पतन् | पतितः | पातः | पत्यते |
| पा ( पाने ) | पिबति | पिबतु | अपिबत् | पपौ | पिबन् | पीतः | पानं | पीयते |

| धातु | लट् | लोट् | लङ् | लिट् | शतृ वा शानच् | क्त | विशेष्यपदं | वाच्यान्तरं |
|---|---|---|---|---|---|---|---|---|
| पा ( रक्षणे ) | पाति | पातु | अपात् | ,, | ,, | पातः | | पीयते |
| पीड़् (पीड़ने) | पीड़यति | पीड़यतु | अपीड़यत् | पीड़यामास | पीड़यन् | पीड़ितः | पीड़ा | पीड्यते |
| पुष ( पोषणे ) | पोषति | पोषतु | अपोषत् | पुपोष | पुषन् | पुष्टः | पोषः | पुष्यते |
| | पुष्णाति | पुष्णातु | अपुष्णात् | ,, | पुष्णन् | ,, | ,, | ,, |
| पू (शोधने) | पुनाति | पुनातु | अपुनात् | पुपाव | पुनन् | पूतः | पूतिः | पूयते |
| पूज् ( अर्चायां ) | पूजयति | पूजयतु | अपूजयत् | पूजयामास | पूजयन् | पूजितः | पूजा | पूज्यते |
| पूर् (पूरणे) | पूर्य्यते | पूर्य्यतां | अपूर्य्यत | पुपूरे | पूर्य्यमाणः | पूर्णः | पूर्त्तिः | पूरणं पूर्य्यते |
| प्रच्छ् (जिज्ञासायां) | पृच्छति | पृच्छतु | अपृच्छत् | पप्रच्छ | पृच्छन् | पृष्टः | प्रश्नः | पृच्छ्यते |
| फुल्ल् (विकाशे) | फुल्लति | फुल्लतु | अफुल्लत् | पुफुल्ल | फुल्लन् | फुल्लः | फुल्लनं | फुल्ल्यते |
| बुध् ( अवगमे ) | बुध्यते | बुध्यतां | अबुध्यत | बुबुधे | बुध्यमानः | बुद्धः | बोधः | बुध्यते |
| भक्ष् ( भक्षणे ) | भक्षयति | भक्षयतु | अभक्षत् | भक्षयामास | भक्षयन् | भक्षितः | भक्षणं | भक्ष्यते |
| भज् (सेवायां) | भजति | भजतु | अभजत् | बभाज | भजन् | भक्तः | भागः | भज्यते |
| भञ्ज (भङ्गे ) | भनक्ति | भनक्तु | अभनक् | बभञ्ज | भञ्जन् | भग्नः | भङ्गः | भज्यते |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| मद् (हर्षे) | माद्यति | माद्यतु | अमाद्यत् | ममाद | माद्यन् | मत्तः | मदः | मद्यते |
| मन् (ज्ञाने) | मन्यते | मन्यतां | अमन्यत | मेने | मन्यमानः | मतः | मानः | मन्यते |
| मन्त्र् (मन्त्रणायां) | मन्त्रयते | मन्त्रयतां | अमन्त्रयत | मन्त्रयाञ्चक्रे | मन्त्रयामास | मन्त्रितः | मन्त्रणा | मन्त्र्यते |
| मस्ज् (अवगाहने) | मज्जति | मज्जतु | अमज्जत् | ममज्ज | मज्जन् | मग्नः | मज्जनं | मज्ज्यते |
| मिल् (मिलने) | मिलति | मिलतु | अमिलत् | मिमिल | मिलन् | मिलितः | मेलनं | मिल्यते |
| | मिलते | मिलतां | अमिलत | मिमिले | मिलमानः | ,, | ,, | ,, |
| मुच् (त्यागे) | मुञ्चति | मुञ्चतु | अमुञ्चत | मुमोच | मुञ्चन् | मुक्तः | मुक्तिः | मुच्यते |
| | मुञ्चते | मुञ्चतां | अमुञ्चत | मुमुचे | मुञ्चमानः | ,, | मोचनं | ,, |
| मुद् (हर्षे) | मोदते | मोदतां | अमोदतां | अमोदत, मुमुदे | मोदमानः | मुदितः | मोदितः | मुद्यते |
| यत् (प्रयत्ने) | यतते | यततां | अयतत | येते | यतमानः | यतितः | यत्नः | यत्यते |
| यम् (उपरमे) | यच्छति | यच्छतु | अयच्छत् | ययाम | यच्छन् | यतः | यमः | यम्यते |
| या (गमने) | याति | यातु | अयात् | ययौ | यान् | यातः | यानं | यायते |
| याच् (याच्ञायां) | याचति | याचतु | अयाचत् | ययाचे | याचन् | याचितः | याच्ञा | याच्यते |
| | याचते | याचतां | अयाचत | ययाचे | याचमानः | ,, | ,, | ,, |
| युज् (योग्यतायां) | युज्यते-युनक्ति | युज्यतां-युनक्तु | अयुज्यत-अयुनक् | युयुजे | युज्यमानः | युक्तः | योगः | युज्यते |

| धातु | लट् | लोट् | लङ् | लिट् | शतृ वा शानच् | क्त | विशेष्यपदं | वाच्यान्तरं |
|---|---|---|---|---|---|---|---|---|
| युज् ( योगे ) | युङ्क्ते | युङ्क्तां | अयुङ्क्त | युयुजे | युञ्जन् | युञ्जान: | „ | „ |
| रच् ( पालने ) | रचति | रचतु | अरचत् | ररच | रचन् | रचित: | रचा | रच्यते |
| रम् ( क्रीड़ायां ) | रमते | रमतां | अरमत | रेमे | रममाण: | रत: | राम: रमणं | रम्यते |
| राज् ( दीप्तौ ) | राजति | राजतु | अराजत् | रराज | राजन् | राजित: | राजनं | राज्यते |
| | राजते | राजतां | अराजत | रेजे | राजमान: | | | |
| रुच् (अभिलाषे ) | रोचते | रोचतां | अरोचत | रुरुचे | रुचमान: | रुचित: | रुचि: | रुच्यते |
| रुद् ( रोदने ) | रोदिति | रोदितु | अरोदीत्, अरोदत् | रुरोद | रुदन् | रुदितं | रोदनं | रुद्यते |
| रुध (रोधे) | रुणद्धि | रुणद्धु | अरुणत् | रुरोध | रुन्धन् | रुद्ध: | रोध: | रुध्यते |
| | रुन्धे | रुन्धां | अरुन्ध | रुरुधे | रुन्धान: | „ | „ | „ |
| रुह् ( उत्पत्तौ ) | रोहति | रोहतु | अरोहत् | रुरोह | रुहन् | रूढ: | रोह: | रुह्यते |
| लभ् ( प्राप्तौ ) | लभते | लभतां | अलभत | लेभे | लभमान: | लब्ध: | लाभ: | लभ्यते |
| लम्ब् (लम्बने ) | लम्बते | लम्बतां | अलम्बत | ललम्बे | लम्बमान: | लम्बित: | लम्ब: | लम्ब्यते |
| लिङ्ग् ( आपूर्व्व आलिङ्गने ) | आलिङ्गति | आलिङ्गतु | आलिङ्गत् | आलिलिङ्ग | आलिङ्गन् | आलिङ्गित: | आलिङ्गनं | आलिङ्ग्यते |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| वस् ( निवासे ) | वसति | वसतु | अवसत् | उवास | वसन् | उषितः | वासः | उष्यते |
| वह् ( वहने ) | वहति | वहतु | अवहत् | उवाह | वहन् | ऊढः | वाहः | उह्यते |
| | वहते | वहतां | अवहत | ऊहे | वहमानः | ,, | ,, | ,, |
| विद् ( ज्ञाने ) | वेत्ति | वेत्तु | अवेत् | विवेद | विदन् विद्वान् | विदितः | वेदनं | विद्यते |
| | वेद | विदाङ्करोतु | विदाञ्चकार | | | | | |
| विद् ( सत्तायां ) | विद्यते | विद्यतां | अविद्यत | विविदे | विद्यमानः | | | |
| विश् ( प्रवेशे ) | विशति | विशतु | अविशत् | विवेश | विशन् | विष्टः | वेशः | विश्यते |
| वृत् ( वर्तने ) | वर्तते | वर्ततां | अवर्तत | ववृते | वर्तमानः | वृत्तः | वर्तनं | वृत्यते |
| वृध् ( वृद्धौ ) | वर्धते | वर्धतां | अवर्धत | ववृधे | वर्धमानः | वृद्धः | वृद्धिः | वृध्यते |
| शक् ( शक्तौ ) | शक्नोति | शक्नोतु | अशक्नोत् | शशाक | शक्नुवन् | शक्तः | शक्तिः | शक्यते |
| शङ्क् ( त्रासे ) | शङ्कते | शङ्कतां | अशङ्कत | शशङ्के | शङ्कमानः | शङ्कितः | शङ्का | शङ्क्यते |
| शास् ( शासने ) | शास्ति | शास्तु | अशात् | शशास | शासन् | शिष्टः | शासनं | शिष्यते |
| शी ( शयने ) | शेते | शेतां | अशेत | शिश्ये | शयानः | शयितः | शयनं | शीयते |
| शुच् (शोके) | शोचति | शोचतु | अशोचत् | शुशोच | शुचन् | शोचितः | शोकः | शुच्यते |
| श्रम् (खेदे) | श्राम्यति | श्राम्यतु | अश्राम्यत् | शश्राम | श्राम्यन् | श्रान्तः | श्रमः | श्रम्यते |

| धातु | लट् | लोट | लङ् | लिट् | शतृ वा शानच् | क्त | विशेष्यपदं | वाच्यान्तरं |
|---|---|---|---|---|---|---|---|---|
| श्रु (श्रवणे) | शृणोति | शृणोतु | अशृणोत् | शुश्राव | शृण्वन् | श्रुत: | श्रवणं | श्रूयते |
| श्लिष् (आलिङ्गने) | श्लिष्यति | श्लिष्यतु | अश्लिष्यत् | शिश्लेष | श्लिष्यन् | श्लिष्ट: | श्लेष: | श्लिष्यते |
| श्वस् (प्राणने) | श्वसिति | श्वसितु | अश्वसीत्-सत् | शश्वास | श्वसन् | श्वसितं | श्वास: | श्वस्यते |
| सद् (विषादे) | सीदति | सीदतु | असीदत् | ससाद | सीदन् | सन्न: | साद: | सद्यते |
| सह् (सहने) | सहते | सहतां | असहत | सेहे | सहमान: | सोढ: | सहनं | सह्यते |
| साध् (सिद्धौ) | साध्यति | साध्यतु | असाध्यत् | ससाध | साध्यन् | साधित: | साधनं | साध्यते |
| | साध्नोति | साध्नोतु | असाध्नोत् | ,, | साध्नुवन् | ,, | ,, | ,, |
| सिच् (सेके) | सिञ्चति | सिञ्चतां | असिञ्चत | सिषेच | सिञ्चन् | सिक्त: | सेक: | सिच्यते |
| | सिञ्चते | सिञ्चतां | असिञ्चत | सिषिचे | सिञ्चमान: | ,, | ,, | ,, |
| सू (प्रसवे) | सूते | सूतां | असूत | सुषुवे | सुवान: | सूत: | सूति: | सूयते |
| सृज् (त्यागे) | सृजति | सृजतु | असृजत् | ससर्ज | सृजन् | सृष्ट: | सर्ग: | सृज्यते |
| | सृज्यते | सृज्यतां | असृज्यत | ससृजे | सृज्यमान: | ,, | ,, | ,, |
| सेव् (सेवायां) | सेवते | सेवतां | असेवत | सिषेवे | सेवमान: | सेवित: | सेवा | सेव्यते |

| धातु | लट् | लोट् | लङ् | लिट् | शतृ वा शानच् | क्त | विशेष्यपदं | वाच्यान्तरं |
|---|---|---|---|---|---|---|---|---|
| स्तु (स्तुतौ) | स्तौति, स्तवीति | स्तौतु, स्तवीतु | अस्तौत् अस्तवीत् | तुष्टाव | स्तुवन् | स्तुतः | स्तवः | स्तूयते |
| | स्तुते | स्तुतां | अस्तुत | तुष्टुवे | स्तुवानः | ,, | ,, | ,, |
| स्था (स्थितौ) | तिष्ठति | तिष्ठतु | अतिष्ठत् | तस्थौ | तिष्ठन् | स्थितः | स्थितिः | स्थीयते |
| स्पृश् (स्पर्शे) | स्पृशति | स्पृशतु | अस्पृशत् | पस्पर्श | स्पृशन् | स्पृष्टः | स्पर्शः | स्पृश्यते |
| स्मृ (स्मरणे) | स्मरति | स्मरतु | अस्मरत् | सस्मार | स्मरन् | स्मृतः | स्मरणं | स्मर्यते |
| स्रु (प्रवाहे) | स्रवति | स्रवतु | अस्रवत् | सुस्राव | स्रवन् | स्रुतः | स्रावः | स्रूयते |
| हन् (हिंसायां) | हन्ति | घ्नन्तु | अहन् | जघान | घ्नन् | हतः | घातः | हन्यते |
| हस् (हसने) | हसति | हसतु | अहसत् | जहास | हसन् | हसितं | हासः | हस्यते |
| हा (त्यागे) | जहाति | जहातु | अजहात् | जहौ | जहत् | हीनः | हानिः | हीयते |
| हृ (हरणे) | हरति | हरतु | अहरत् | जहार | हरन् | हृतः | हरणं | ह्रियते |
| हृष् (तोषे) | हृष्यति | हृष्यतु | अहृष्यत् | जहर्ष | हृष्यन् | हृष्टः | हर्षः | हृष्यते |

---

# VYAKARANABODHA

A

TREATISE ON SANSKRIT GRAMMAR

IN

HINDI

BY

PUNDIT KANHAIYALAL SASTRI,

*Assistant Hindi Translator to the Government of Bengal,*

*Late Sanskrit Scholar, Benares College,*

*Examiner, Calcutta University,* &c.

---

**··ibed as a text-book for the Calcutta .versity Entrance Examination by e Sanskrit Board of the University**

*Price Re. 1-. Postage Ans 2.*

To be had of S. C. Addy.

58 *Wellington Street.* CALCUTTA.

AND

·. P, Capoor, Manager School-Book Depot, Allahabad City.

